आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ८४

वे० शा० सं० रा० अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः

# अद्वैतामोदः

एतत्पुस्तकम्

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।




शालिवाहनशकाब्दाः १८४०

खिस्ताब्दाः १९१८



मूल्यं रूपकद्वयम् ( २ ) ।

# विज्ञप्तिः ।

—:+:—

परमकारुणिको भगवान्परमेश्वरः स्वस्वकर्मानुगुण्येन सुखदुःखभाजः संसाराम्बुधौ निमग्नाञ्जनानुद्दिधीर्षुरनेका विद्याः प्रवर्तयामास । ईशानः सर्वविद्यानामिति श्रुतेः । विद्यासु च प्रतिविद्यं प्रतिपाद्यविषयभेदेन यद्यप्यापाततः कासुचिद्विरोधो भासते तथाऽप्यधिकारिभेदेन स निवारणीयः । तथा च तत्तद्विद्यास्तुतिस्तत्तदधिकारिप्रवृत्तये । कस्याश्चित्कचिद्दृश्यमाना निन्दाऽपि च तदनधिकारिणस्तत्राप्रवृत्तये । नैतावता कस्या अपि विद्याया अप्रामाण्यमाशङ्कनीयम् । नास्त्यकृतः कृतेनेति कर्मनिन्दाया अप्येतदेव तात्पर्यम् । अत एव निन्दितमपि कर्म कुरु कर्मैव तस्मात्त्वमित्येवमर्जुनाय तस्याधिकारमालक्ष्य भगवतोपदिश्यते । अधिकारी चाननुभूततत्पूर्वावस्थः । यथा कृतचौलसंस्कार उपनयनेऽधिकारी । अनधिकारी च द्विविधः—अननुभूततत्पूर्वावस्थः, अनुभूततदवस्थश्च । यथाऽकृतचौलः कृतोपनयनश्चोपनयनेऽनधिकारी । तत्र द्वितीयमनधिकारिणं प्रति पुनस्तत्राप्रवृत्तये विशेषतो निन्दोपयुज्यते । विद्याश्च यद्यपि 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश' इति विष्णुपुराणे चतुर्दश प्रतिपादितास्तथाऽपि मुख्यतो द्वैविध्यमेव दृश्यते । द्वे विद्ये वेदितव्ये परा चैवापरा चेति श्रुतेः । तत्र ऋग्वेदो यजुर्वेद इत्यादिनाऽपरां प्रदर्श्य 'अथ परा यया तदक्षरमधिगम्यते' इति परा विद्या प्रदर्शिता । परविद्याप्राशस्त्यं च परशब्देनैव सूच्यते । इयं परविद्यैव ब्रह्मप्राप्तिरूपपरमपुरुषार्थसाधनत्वादितराभ्यः प्रशस्ततरा । मुण्डकोपनिषदि चाथ परेत्युपक्रम्य परविद्यास्वरूपप्रदर्शनात्प्रागेव यया तदक्षरमधिगम्यत इत्यादिना ब्रह्मप्राप्तिरूपं फलं प्रतिपादितम् । यतो विदितफलमहत्त्वस्य स्वरूपालोचने सविशेषं प्रवृत्तिर्भवेदिति । मातापितृसहस्रेभ्योऽप्यधिकवात्सल्येनेयं श्रुतिः परविद्यायां जनान्प्ररोचयति तत्रेतिकर्तव्यता च कीदृशीत्याकाङ्क्षायां श्रीशंकराचार्या आहुः—ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुतयो ब्रह्मविद्यानन्तरं सद्य एव मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्तीति । रामानुजाचार्यास्तु ज्ञानोत्तरमुपासनायाः कर्तव्यतां ब्रुवते । अनयोर्दर्शनयोर्मुख्यं वैलक्षण्यं चैकत्र मायावादाश्रयणमपरत्र तदनङ्गीकारः । अत्र च कतरद्ग्राह्यं कतरन्नेति संदिहानो यावत्तत्त्वबुभुत्सुरभूवं तावदेव पुरः स्फुरन्त्या मोक्षप्राप्तये च कर्तव्यलेशस्यापि नावसर इति प्रदर्शयन्त्या नास्त्यकृतः कृतेनेति श्रुत्यैव संबोधितो यत्प्रपञ्चस्य परमार्थत्वे तन्निवृत्तये किंचित्कर्तव्यमवश्यमापतितं भवेदतस्तस्यापारमार्थ्यमेवेति । तच्च मायावादमन्तरेण दुर्वचमिति मायावादस्यैव

## विज्ञप्तिः

न्यायस्त्वं श्रुत्यभिप्रेतमाकलयतः कथमयं लोकानां भ्रमो दूरी भवेदिति चिन्तया च पुरस्कृतस्य मे मानसमद्वैतामोदग्रथने प्रावर्तत । मतेस्तीक्ष्णतरतावैकल्येन च किंचित्परावृत्तमप्यन्तरुद्बुद्ध्या श्रीमच्छंकराचार्यचरणप्रेरणया पुनरुत्साहाधिक्येन संप्रवृत्तमासीत् । त एवाऽऽचार्यचरणाः सद्गुरुकृपा चात्र साहाय्यकं दास्यन्तीति श्रद्धां बद्ध्वाऽस्मिन्कर्मणि कृतपदविन्यासं दुस्तराम्बुधावन्तराऽन्तरा निमज्जदपि श्रद्धातरणिसमारूढं कथं कथमपि पारमगात् । यैश्चाऽऽचार्यचरणैरेतत्कार्यं संपादितं त एव चात्र प्रेक्षावत्प्रवृत्तिं संपादयन्तु । यथा यथा चाद्वैतिनां दर्शनमनूद्य तत्खण्डने प्रयत्नः श्रीभाष्यकृतां दृश्यते तथा तथा तदनुसारेणैव तदुद्धारार्थोऽयं मदीयो यत्न इत्येकस्यैव विषयस्य पुनः पुनर्विवेचनं क्वचित्कर्तव्यतामापतितम् । अतः पुनरुक्त्यादिदोषदूषितेक्षणैः प्रेक्षावद्भिर्न भवितव्यम् । अमुमामोदमाजिघ्रद्भिश्चाभिनिवेशवशीकृतस्वान्तैर्न भवितव्यम् । दोषाश्च मानुषसुलभा एवेत्यत्र ये केचित्स्युस्तेषूदासीना अपि गुणैकप्रेमशीलाः सहृदया दोषान्प्रदर्शयन्त्वित्याशासे—

पुण्यपत्तने—
श्रावणकृष्णद्वितीयायां
मन्दवासरे शके १८४०

अभ्यंकरोपाह्ववासुदेवशास्त्री

## अद्वैतामोदस्थविषयाणामनुक्रमणिका ।


| विषयः | पृष्ठम् | विषयः | पृष्ठम् |
|---|---|---|---|
| मङ्गलाचरणम् .... .... | १ | त्रिविधं सत्त्वम् .... .... | ७ |
| धर्मार्थकामानामनित्यत्वम् .... | | जीवत्वमीश्वरत्वं चौपाधिकम् | ८ |
| मोक्षस्य नित्यत्वम् .... .... | | अज्ञानस्य शक्तिद्वयम् .... | |
| उपनिषदुद्देशः .... .... | | जीवस्वरूपम् .... .... | ९ |
| मीमांसकमतोत्पत्तिः .... .... | २ | अवच्छेदवादः .... .... | |
| ब्रह्मसूत्रकृदुद्देशः .... .... | | आभासवादः .... .... | |
| नास्तिकोत्पत्तिः .... .... | ३ | प्रतिबिम्बवादः .... .... | |
| मीमांसकमतप्रचारः .... .... | | जीवैकत्वानेकत्वविचारः .... | १० |
| श्रीशंकराचार्यावतारः .... | | एकजीववादः .... .... | |
| शांकरदर्शनम् .... .... | | जीवस्य विभुत्वम् .... .... | |
| परमात्मा दृशिरूपः .... .... | | जीवस्यानादित्वम् .... .... | ११ |
| आत्मरूपमेकं तत्त्वम् .... | ४ | प्रतिबिम्बवादः .... .... | |
| दृशिद्वैविध्यम् .... .... | | अद्वैतम् .... .... .... | १२ |
| ब्रह्म जगन्मूलम् .... .... | | अविद्या .... .... .... | |
| कारणस्य सूक्ष्मत्वं व्यापित्वं च | | सृष्ट्यारम्भकालिकमज्ञानकृत्यम् | |
| पृथिव्यादीनामुत्तरोत्तरं सूक्ष्मत्वम् | | अहंकाराद्युत्पत्तिः .... .... | १३ |
| आत्मनो निर्विशेषत्वम् .... | ५ | ज्ञानेन्द्रियोत्पत्तिः .... .... | |
| आत्मनि भेदत्रयराहित्यम् .... | | अन्तःकरणोत्पत्तिः .... .... | |
| आत्मनो निर्गुणत्वम् .... | | कर्मेन्द्रियोत्पत्तिः .... .... | |
| सगुणश्रुत्युपपत्तिः .... .... | ६ | प्राणोत्पत्तिः .... .... .... | १४ |
| आत्मा ज्ञानस्वरूपः .... .... | | पञ्चीकरणम् .... .... .... | |
| आत्मनो न ज्ञातृत्वं ज्ञेयत्वं च | | पञ्च कोशाः .... .... | |
| आत्मा नित्यः .... .... | | पुर्यष्टकम् .... .... .... | १५ |
| कूटस्थनित्यता .... .... | ७ | कर्मत्रैविध्यम् .... .... | |
| अद्वैतम् .... .... .... | | शरीरत्रैविध्यम् .... .... | |
| सन्मात्रं ब्रह्म .... .... | | जीवन्मुक्तितुरीयावस्थयोर्भेदः | |
| सदनुभूत्योरैक्यम् .... .... | | अनिर्वचनीयख्यातिः .... | १६ |
| अनादिषट्कम् .... .... | | असत्यात्सत्योत्पत्तिः .... | |

| विषयः | पृष्ठम् | विषयः | पृष्ठम् |
|---|---|---|---|
| प्रत्यक्षप्रमाणम् | १७ | प्रकृतिः | २७ |
| सविकल्पकं प्रत्यक्षम् | | चतुर्विंशतितत्त्वानि | |
| निर्विकल्पकं प्रत्यक्षम् | | भूतोत्पत्तिक्रमः | २८ |
| अनुमानम् | | कालः | २९ |
| उपमानम् | १८ | द्रव्याणां साधर्म्यम् | |
| शाब्दम् | | गुणा दशविधाः | |
| अर्थापत्तिः | | सत्त्वरजस्तमांसि | |
| अनुपलब्धिः | | शब्दादिपञ्चकम् | ३० |
| अन्तःकरणस्य ज्ञातृत्वम् | १९ | संयोगः | |
| साधनचतुष्टयम् | | शक्तिः | |
| श्रवणादिसाधनत्रयम् | | ज्ञानस्य द्रव्यत्वमपि | |
| श्रवणाद्युपयोगः | २० | शरीरशरीरिभावः | |
| मोक्षप्रतिबन्धनिरासः | | शरीरशरीरिणोर्भेदः | ३१ |
| मोक्षः | २१ | परमात्मनो बहुभवनं शरीरद्वारकम् | |
| जीवन्मुक्तिः | | यदा ह्येवेतिश्रुत्यर्थः | |
| जीवन्मुक्तिप्रयोजनम् | २२ | अद्वितीयश्रुत्यर्थः | ३२ |
| विदेहमुक्तिः | | नेह नानेतिश्रुत्यर्थः | |
| श्रीशंकराचार्यकालः | २३ | परमात्मनः सविशेषत्वम् | |
| श्रीरामानुजाचार्यकालः | २४ | सामानाधिकरण्यम् | |
| रामानुजदर्शनम् | | परमात्मा सगुणः | ३३ |
| चिदचिदीश्वररूपं त्रिविधं तत्त्वम् | २५ | गुणेष्ववान्तरभेदः | |
| द्रव्यनिरूपणम् | | ज्ञानस्यात्मगुणत्वम् | |
| द्रव्यं षड्विधम् | | ज्ञानद्वैविध्यम् | ३४ |
| ईश्वरभेदाः | | परमात्मनो ज्ञातृत्वम् | |
| षड्गुणाः | २६ | परमात्मनो ज्ञेयत्वम् | |
| परमात्मगुणाः | | मनसा न मनुत इतिश्रुत्यर्थः | |
| जीवभेदाः | | परमात्मा कूटस्थनित्यः | ३५ |
| नित्यविभूतिः | २७ | परमात्मनः परम्परया जगदुपादानकारणत्वम् | |
| ज्ञानम् | | | |

| विषयः | पृष्ठम् | विषयः | पृष्ठम् |
|---|---|---|---|
| विशिष्टाद्वैतम्.... .... .... | ३५ | ज्ञानस्य संकोचविकासौ .... | ४४ |
| प्रकार्यद्वैतम् .... .... | | कर्मज्ञानानन्तरं ब्रह्मविचारः.... | |
| प्रकाराद्वैतम् .... .... | | जीवन्मुक्तिर्नास्ति .... .... | ४५ |
| जीवाद्वैतम् .... .... .... | | मोक्षे परमात्मकैंकर्यम् .... | |
| जीवानां मिथो भेदः.... .... | | मोक्षेऽपि जीवब्रह्मणोर्भेदः .... | |
| सदनुभूत्योर्भेदः .... .... | ३६ | इतरपदार्थानामन्तर्भावः .... | ४६ |
| जगतः सत्यत्वम् .... .... | | मतद्वयसंक्षेपः .... .... | ४७ |
| परिणामवादः .... .... | | मायावादः सूत्रकारात्प्रागपि.... | ५० |
| तत्त्वज्ञानोपयोगः .... .... | ३७ | मायावादः सूत्रकारसंमतः .... | |
| जीवानां न स्वातन्त्र्यम् .... | | ब्रह्मशब्दव्युत्पत्तिः .... .... | ५१ |
| सत्ख्यातिः .... .... .... | ३८ | मोक्षे शरीरराहित्यम् .... | |
| शास्त्रस्य सत्यत्वम् .... .... | | मोक्षे भयात्यन्ताभावः .... | ५२ |
| प्रत्यक्षप्रमाणम् .... .... | ३९ | जीवन्मुक्तिः... ... .... | ५३ |
| निर्विकल्पकम् .... .... .... | | जीवेऽहंभावादिकमन्यतः ... | |
| सविकल्पकम् .... .... | | मुक्तस्य कीदृशं कर्म... ... | ५४ |
| संनिकर्षद्वैविध्यम् .... .... | | तत्त्वज्ञानशब्दार्थः ... .... | ५५ |
| अनुमानम् .... .... .... | ४० | तत्त्वज्ञानस्य मोक्षसाधनत्वम्... | |
| अनुमानभेदाः .... .... | | कार्यस्य कारणं तत्त्वम् .... | ५६ |
| शाब्दज्ञानम्.... .... .... | ४१ | नाशस्य सान्वयत्वम् .... | ५७ |
| वेदस्य भागद्वयम् .... .... | | नाशस्वरूपम् | |
| वृत्तिभेदाः .... .... .... | | साधनचतुष्टयसंपन्नस्य ब्रह्मविचाराधिकारः .... .... | ५८ |
| लक्षणा .... .... .... | | | |
| उपमानं न प्रमाणान्तरम् .... | ४२ | मीमांसाद्वयस्य नैकशास्त्रत्वम् | |
| अर्थापत्तिर्न प्रमाणान्तरम् .... | | परमात्मनो धर्मत्वं गौणम् .... | ५९ |
| अनुपलब्धिर्न प्रमाणान्तरम्.... | | शास्त्रपट्कम् .... .... .... | |
| गुणभूतज्ञानोपपत्तिः.... .... | ४३ | कर्मज्ञानस्य न पूर्ववृत्तत्वम् .... | |
| ज्ञानमात्मनिष्ठम् .... .... | | आत्मसाक्षात्कारादविद्यानिवृत्तिः .... .... .... | ६१ |
| अहंभावोऽहंकारश्च भिन्नः .... | | | |
| जीवस्याणुत्वम् .... .... | ४४ | आत्मसाक्षात्कारसाधनम् .... | ६२ |
| ज्ञानस्य शरीरव्यापित्वम .... | | आत्मसाक्षात्काराद्धृदयग्रन्थिभेदः | ६३ |

| विषयः | पृष्ठम् | विषयः | पृष्ठम् |
|---|---|---|---|
| स्मृतेर्न दर्शनरूपत्वम् .... | ६३ | तटस्थलक्षणतः प्रतिपादनम् | ७२ |
| भक्तिशब्दार्थः .... .... | ६४ | आगमस्य लौकिकत्वम् .... | |
| ज्ञानोत्तरं न कर्मावश्यकत्वम्.... | | निर्विकल्पकं प्रत्यक्षम् .... | ७३ |
| आत्मसाक्षात्कारोत्तरं कर्मासंभवः .... .... .... | ६५ | निर्विकल्पकस्य सन्मात्रग्राहित्वम् .... .... .... | |
| साधनसप्तकस्य साधनचतुष्टयान्तर्भावः .... .... | | रामानुजीयस्वीकृतनिर्विकल्पकखण्डनम् .... .... | |
| कर्मण उपयोगः .... .... | | अनुमानेनापि निर्विशेषवस्तुसिद्धिः .... .... .... | ७४ |
| विद्याकर्मणोर्न समुच्चयः .... | ६६ | निर्विकल्पकं सन्मात्रग्राहि न भेदग्राहि .... .... | |
| विद्यां चाविद्यां चेतिश्रुत्यर्थः .... | | भेदस्य दुर्निरूपत्वम्.... .... | |
| जीवन्मुक्तकृतकर्मोपयोगः .... | | भेदप्रतीत्युपपत्तिः .... .... | |
| ब्रह्मजिज्ञासायां न कर्ममीमांसापेक्षा .... .... | ६७ | संस्थानं न जातिः .... .... | ७५ |
| निर्विशेषब्रह्मणः प्रामाणिकत्वम् .... .... .... | ६८ | जातिरेव भेद इति न युक्तम्.... | |
| ब्रह्मशक्तिर्माया .... .... | ६९ | लौकिकप्रत्यक्षं विशिष्टविषयम् .... .... .... | ७७ |
| तत्प्रतिबिम्बितो जीवः .... | | निर्विशेषसन्मात्रमलौकिकप्रत्यक्षसिद्धम् .... .... .... | |
| उद्भूतशक्तिमद्ब्रह्मैवेश्वरः .... | | सन्मात्रब्रह्मणो न प्रमेयभावः | |
| इदमेव सगुणं ब्रह्म .... .... | | घटादीनामपरमार्थत्वम् .... | ७८ |
| आत्मनो निर्गुणत्वम्.... .... | | अपरमार्थत्वस्य निर्वचनम् .... | |
| यतो वाच इतिश्रुत्यर्थः .... | | प्रासङ्गिकं सत्ख्यातिखण्डनम् | |
| निर्विशेषः सामान्यानुभवः .... | ७० | व्यावर्तमानत्वमपारमार्थ्ये हेतुः | ७९ |
| सन्मात्ररूपं सामान्यस्य .... परा काष्ठा .... .... | ७१ | जगतो बाधः.... .... .... | |
| पृथक्करणमभावेनापि.... .... | | परमार्थत्वनिर्वचनम् .... .... | ८० |
| धीत्वादयो न भावरूपा धर्माः | | अनुभूतिरेव सती .... .... | |
| निर्विशेषे वस्तुनि शब्दः प्र- .... माणम् .... .... .... | ७२ | निर्विषयानुभूतेर्न परप्रकाश्यत्वम् .... .... .... .... | ८१ |
| निषेधमुखेन शब्दस्य प्रवृत्तिः | | अनुभूतेर्न प्रागभावः.... .... | |

| विषयः | पृष्ठम् | विषयः | पृष्ठम् |
|---|---|---|---|
| अनुभूतिसामान्यस्य न नानात्वम् .... .... .... | ८२ | मोक्षे नाहंभावः .... .... | ९० |
| अनुभूतिसामान्यस्य परा काष्ठा | | मोक्षे न भयलेशः ... ... | |
| अनुभूतिनित्यत्वादिकं च न भावरूपम् ... ... | | मोक्षे न सुखं न दुःखम् ... | ९१ |
| निर्विषया संवित् ... ... | ८३ | अहं मुक्तो भवेयमितिसंकल्पोपपत्तिः ... ... | |
| योग्यानुपलब्धिः प्रमाणम् .... | | मोक्षपदार्थः ... ... ... | |
| अस्मरणनियमस्य नानुभवाभावसाधकत्वम् .... .... | ८४ | द्वैतिमते मोक्षानुपपत्तिः ... | ९२ |
| सुषुप्तौ नाहमर्थभानम् .... | | निर्विशेषज्ञानस्य नाश्रयापेक्षा | ९३ |
| अनुभूतेर्निर्विकारत्वम् .... | | ब्रह्मणो न विज्ञातृत्वम् ... | |
| ब्रह्मशक्तिर्नित्या ... ... | ८५ | आत्मा चिद्रूप एव न चैतन्य-...गुणकः ... ... ... | ९४ |
| बीजाङ्कुरन्यायः .... ... | | धर्मिभूतं ज्ञानं गुणभूतज्ञानं ...चेति न ज्ञानद्वयम् .... | |
| प्रवाहानादित्वम् ... .... | | संविदादिशब्दाः संबन्धिशब्दा एवेति न नियमः ... | ९५ |
| मोक्षे प्रपञ्चस्याभानं कीदृक् ... | | अजडत्वलक्षणम् ... ... | |
| अभावस्य न धर्मरूपत्वम् ... | ८६ | अनुभूतिर्भ्रान्त्या ज्ञातृतयाऽवभासते... ... ... | |
| धर्म्यपेक्षया धर्मस्य सूक्ष्मत्वम् | | अन्तःकरणस्य ज्ञातृत्वम् ... | ९६ |
| घटो नास्ति घटाभावोऽस्तीत्यनयोरर्थभेदः ... ... | | लौकिकं ज्ञानं क्रियारूपमनित्यमेव ... .... ... | |
| सिद्धिसामान्यं संवित्. स ... एवात्मा ... ... ... | ८७ | लौकिकज्ञानस्यैवाहंकारो ... व्यञ्जकः... ... ... | ९७ |
| अनुभूतिसामान्यसाधनम् ... | | अप्रकाशस्वरूपेणापि प्रकाशस्वरूपस्य व्यञ्जनम् ... | |
| आत्मनो ज्ञानस्वरूपत्वम् ... | | रविकरकरतलयोः परस्पराभिव्यञ्जकत्वम् ... .... | ९८ |
| को विशेषः किं सामान्यम् .... | ८८ | अभिव्यञ्जकानां स्वात्मस्थतयाऽभिव्यञ्जनं स्वभावः | |
| निर्विशेषचिन्मात्र आत्मा ... | | | |
| युष्मदर्थोऽस्मदर्थश्च .... .... | | | |
| लौकिकोऽहमर्थोऽपि युष्मदर्थ एव | ८९ | | |
| अहमर्थो नात्मा ... ... | | | |
| अहंकारशब्दार्थः ... ... | | | |
| अहंभावोऽपि कल्पित एव ... | ९० | | |

| विषयः | पृष्ठम् |
| --- | --- |
| सुषुप्तौ नाहमर्थावभासः ... | ९९ |
| सुखमहमस्वाप्समितिपरामर्शोपपत्तिः ... ... | |
| न किंचिदहमज्ञासिषमिति परामर्शः... ... ... | |
| मामप्यहं न ज्ञातवानिति परामर्शः ... ... ... | |
| सुषुप्तावात्मनः साक्षित्वम् .... | १०० |
| विदेहमुक्तौ नाहंभावः .... | |
| जीवन्मुक्तावहंभावोपपत्तिः ... | |
| अद्वैते शास्त्रं प्रमाणम्... ... | १०१ |
| शास्त्रमसत्यमपि प्रमाणम् .... | १०२ |
| स्थूलारुन्धतीन्यायः .... | १०३ |
| प्रत्यक्षस्य शास्त्रेण बाधः .... | |
| उपदेष्टुः प्रतिपाद्यविषये निर्दोषत्वम् .... .... | |
| असत्यादपि सत्या प्रतीतिः .... | १०४ |
| स्वाप्नज्ञानस्यासत्यत्वम् .... | ,, |
| बुद्धीनां सालम्बनत्वमात्रनियमो नास्ति .... .... | १०५ |
| रेखया वर्णप्रतिपत्तिः .... | १०६ |
| शब्दार्थयोरारोपितं तादात्म्यम् .... .... .... | |
| रेखागवयात्सत्यप्रतिपत्तिः .... | |
| शास्त्रस्य न तुच्छत्वम् .... | १०७ |
| ज्ञानस्य द्विविधमसत्यत्वम् .... | १०८ |
| शास्त्रसिद्धस्य न पश्चाद्बाधः.... | |
| नेह नानेति वाक्यस्य स्वस्मिन्नवृत्तिः .... .... .... | १०९ |
| सदेवेतिश्रुतेर्निर्विशेषार्थकत्वम् .... .... .... | ११० |
| आत्मा विवर्तोपादानम् .... | १११ |
| शरीरशरीरिभावेन न श्रुत्युपपत्तिः .... .... .... | |
| आदेशशब्दार्थः .... .... | ११३ |
| अथ परेति श्रुतेर्निर्विशेषार्थकत्वम् .... | ११५ |
| यत्तदद्रेश्यमितिश्रुत्यर्थः .... | ११६ |
| सत्यं ज्ञानमिति श्रुतेर्निर्विशेषार्थकत्वम् ... ... | ११७ |
| सत्यं ज्ञानमित्यत्र लक्षणत्रयम् | ११९ |
| लक्षणस्य प्रयोजनम् ... | |
| सामानाधिकरण्यम् ... .... | |
| ब्रह्मणोऽद्वितीयत्वम्.... .... | १२० |
| सदेवेतिश्रुत्यर्थः .... ... | १२१ |
| भेदत्रयराहित्यम् .... .... | १२२ |
| प्रतिज्ञोपपत्तिः.... .... .... | |
| सगुणश्रुतितात्पर्यम् .... .... | १२३ |
| सगुणनिर्गुणवाक्ययोरविरोधः .... .... .... | १२४ |
| ब्रह्मगुणकथने न तात्पर्यम् .... | १२५ |
| मोक्षे न ज्ञातृज्ञेयभावः.... .... | |
| श्रुतिसंमतं ब्रह्म ज्ञानस्वरूपम्.... | १२६ |
| नानात्वनिषेधतात्पर्यम् .... | १२७ |
| नानाशब्दार्थः .... .... | |
| नानात्वदर्शनान्न शान्तिः .... | १२८ |
| अन्तरशब्दस्य नावकाशार्थकत्वम् .... .... | १२९ |
| निर्विशेषब्रह्मवादः सूत्रकारसंमतः | |

| विषयः | पृष्ठम् |
|---|---|
| निर्विशेषब्रह्मणि गीतातात्पर्यम् .... .... .... | १३० |
| निर्विशेषब्रह्मणि पुराणतात्पर्यम् .... .... .... | १३१ |
| भगवच्छब्दवाच्यत्वमौपचारिकम् .... .... .... | १३२ |
| आत्मनः सविशेषत्वं व्यावहारिकम् .... .... .... | |
| व्यावहारिकस्य शुभाश्रयत्वम् | १३३ |
| ज्ञानव्यतिरिक्तस्य मिथ्यात्वम् | |
| यन्मयं चेतिप्रश्नार्थः .... .... | १३४ |
| अविद्याया आश्रयोपपत्तिः .... | १३६ |
| अविद्यया तिरोधानोपपत्तिः .... | १३७ |
| अविद्यास्वरूपोपपत्तिः .... | |
| अज्ञानं न ज्ञानप्रागभावरूपम् | १३८ |
| भावरूपाज्ञानसाधनम् .... | |
| आरोपितत्वं नश्वरत्वम् .... | १३९ |
| अविद्याया अनिर्वचनीयत्वोपपत्तिः .... .... .... | |
| असत्यतुच्छयोर्भेदः .... .... | १४० |
| अधिष्ठानस्य सत्यत्वम् .... | |
| अज्ञानसाधकानुमानम् .... | |
| प्रत्यनुमाननवकम् .... .... | १४१ |
| प्रत्यनुमानखण्डनम् .... .... | १४२ |
| मिथ्यार्थस्योपादानं मिथ्यैव.... | १४३ |
| अन्यत्र सत्यत्वेनादृष्टस्यापि प्रपञ्चस्य भ्रमविषयत्वम्.... | १४४ |
| अनिर्वचनीयख्यातिः .... | |
| प्रातिभासिकवस्तूत्पत्तिकारणम् | १४५ |
| सत्ख्यातिखण्डनम् .... .... | १४६ |
| स्वसदृशे स्वांशसत्त्वनियमो न | १४७ |
| स्वाप्नार्थानां न सत्यत्वम् .... | |
| अलातचक्रप्रतीतौ न सत्ख्यातिः | १४८ |
| दिङ्मोहे न सत्ख्यातिः .... | १४९ |
| द्विचन्द्रज्ञाने न सत्ख्यातिः .... | |
| अज्ञाने श्रुतिः प्रमाणम् .... | १५० |
| ऋतशब्दस्य न कर्मवाचित्वम् | |
| नासदासीयसूक्तमज्ञाने प्रमाणम् | १५१ |
| सदसच्छब्दौ न चिदचिद्व्यष्टिविषयौ .... .... .... | १५२ |
| नासदासीयसूक्तभाष्यम् .... | |
| मायाशब्दार्थः .... .... | १५३ |
| मूलाज्ञानेऽर्थापत्तिः प्रमाणम् .... | १५४ |
| त्वंशब्दो न जीवान्तर्यामिपरः | |
| विधिप्रतिषेधावितिन्यायः .... | |
| सर्वेषां शब्दानां नात्मपर्यन्तार्थकत्वम् .... .... .... | १५५ |
| मूलाज्ञाने पुराणं प्रमाणम् .... | १५६ |
| ज्योतींषि विष्णुरित्यादिविष्णुपुराणवचनार्थः .... | |
| जीवजडयोर्न ब्रह्मशरीरत्वम्.... | १५७ |
| सर्वं परमात्मरूपम् .... .... | |
| प्रपञ्चस्याज्ञानविजृम्भितत्वम् | १५९ |
| जडानां न नास्तिशब्दवाच्यत्वम् .... .... .... | १६० |
| भेदत्रयराहित्यम् .... .... | १६१ |
| ज्योतींषीत्यादिवचनतात्पर्यम् | |
| अविद्यानिवर्तकोपपत्तिः .... | १६३ |
| अविद्यानिवृत्त्युपपत्तिः .... | १६४ |
| अविद्याकृत्यम् .... .... | १६५ |

अद्वैतामोदस्थविषयाणामनुक्रमणिका समाप्ता ।



॥ ॐ ॥

## ॥ अथाद्वैतामोदः प्रारभ्यते ॥

विज्ञानार्कमरीचिजालनिहताविद्यान्धकारव्रजः
शब्दब्रह्मसमुद्रमन्दरगिरिः सिद्धान्तवद्धव्रतः ।
ब्राह्मीनर्तनरङ्गभूमिरसनासंशोभिताभ्याननः
सोऽयं सर्वजगद्गुरुर्विजयते श्रीमान्प्रभुः शंकरः ॥ १ ॥
श्रीमच्छंकरपादाब्जं भुक्तिमुक्तिप्रदायकम् ।
तत्प्रेरितो नमस्कृत्याद्वैतामोदं प्रकाशये ॥ २ ॥
परिभाव्य बहून्ग्रन्थान्योऽर्थः क्लेशेन शक्य उपलब्धुम् ॥
तमनायासेनास्माद्ग्रन्थाद्गृह्णन्तु सज्जनाः सुधियः ॥ ३ ॥
श्रुतयो निखिलजनानां हितैकबोधनपरा अपि प्रकृते ।
हितसर्वस्वे ब्रह्माद्वैते सततं प्रयान्ति मूकत्वम् ॥ ४ ॥
तदिह विशिष्टाद्वैतद्वैतिप्रमुखा विचक्षणंमन्याः ।
अज्ञानेन हठाद्वा ब्रह्माद्वैतेऽपगोरणं चक्रुः ॥ ५ ॥
तेषामयं प्रयत्नो विफल इतीदं प्रदर्शयितुकामः ।
ईशप्रेरितचेता आमोदममुं प्रसारये जगति ॥ ६ ॥

इह खलु जगति प्राणिभिर्मुख्यत्वेन पुरुषार्थप्राप्तय एव प्रयतितव्यम् । यद्यपि धर्मार्थकाममोक्षरूपेण पुरुषार्थाश्चत्वारस्तथाऽपि तेषु मोक्ष एव परमपुरुषार्थः । नेतरे । तेषामनित्यत्वात् । अर्थकामयोरनित्यत्वं प्रत्यक्षेणैवावगम्यते । धर्मोऽप्येवम् । तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते ( छा० ८ । १ । ६ ) इति श्रुतेः । मोक्षस्तु न तथा । न स पुनरावर्तते ( छा० ८ । १५ । १ ) इति श्रुत्या तस्य नित्यत्वावगमात् । भगवद्गीतायामपि "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" ( गी० ८ । १६ ) इति ।

मोक्षस्य नित्यत्वम्

प्रत्यक्षागोचरविषये च वेद एव प्रमाणम् । तत्र च ब्राह्मणग्रन्थे यज्ञादिकर्मणां विस्तरेण प्रतिपादनादीदृशी लोकानां मतिः स्याद्यत् "यज्ञादि कर्म कृत्वा स्वर्गादिफलसंपादनमेव मुख्यः पुरुषार्थः" इति । तन्निरासाय श्रुतावुपनिषदामभिव्यक्तिः । उपनिषत्सु च लोकानां ब्रह्मज्ञानाय यथाशक्ति विधिमुखेन निषेधमुखेन चेति प्रकारद्वयेन ब्रह्म वर्णितम् ।

उपनिषदुद्देशः

श्रुतिश्चात्यन्तं दुरवबोधा यतः श्रुतिवाक्यं संक्षिप्तं संगतिप्रदर्शकवाक्यैः प्रायो विरहितं च। भाषा चातिपुरातनी। लोकाश्चोत्तरोत्तरं मन्दबुद्धयः। श्रुतिप्रदर्शिते मार्गे श्रद्धालूनां विश्वासेन प्रवृत्तावप्यन्येषां लोकानां ज्ञानमार्गे कर्ममार्गे च प्रवृत्तिः शिथिला समजनि। अमुष्मिन्नवसरे नास्तिकाः प्रादुरभूवन्। ततो वेदार्थज्ञानाय ऋषयस्तपश्चेरुः। तपःप्रभावाच्च लब्धसामर्थ्या ऋषय ऐन्द्रादीनि व्याकरणानि निरुक्तं प्रातिशाख्यानि च प्रणिन्युः। कियता कालेन च तथैव पाणिनिनाऽष्टाध्यायी प्रणीता। तया पदार्थज्ञानं समजनि। यतस्तस्यां शब्दानां प्रकृतिप्रत्ययविभाग उपदर्शितः। जैमिनिना च द्वादशाध्यायी प्रणीता। तया वाक्यार्थज्ञानं समजनि। यतस्तस्यां वाक्यार्थयोजनोपयोगिनोऽनेके न्यायाः संगृहीताः। पदार्थवेत्ता वैयाकरणः। वाक्यार्थवेत्ता मीमांसकः। ततो लोकानां वेदार्थज्ञाने जाते सति कर्मस्वादरेण प्रवृत्तिरासीत्।

मीमांसकमतोत्पत्तिः

उत्तरोत्तरं च परां काष्ठां गता। यया च "उपनिषद्भागोऽयं न श्रुतिशिरोभूतः। किंतु जीवात्मनोऽविनाशित्वप्रतिपादनेन स्वर्गादिपारलौकिके सुखे विश्वासोत्पादनद्वारा यज्ञादिकर्मकाण्डस्यैवोपोद्घलकस्तदङ्गभूतः" इत्येवं लोकानां मतिरासीत्। उपनिषत्प्रदर्शितो मोक्षमार्गश्च कण्टकानुविद्ध इव लोकानामगम्योऽभूत्। नास्तिका इव वेदान्तिनोऽपि मीमांसकतीक्ष्णकटाक्षैकलक्ष्या अभूवन्। तदुक्तम्—

मीमांसका हि वाक्यार्थविचारे प्रस्तुते सति।
लोकद्वयीः प्रतिघ्नन्ति वचनव्यक्तिपांसुभिः॥ इति॥

अमुष्मिन्नवसर उपनिषदनभिव्यक्तिकाल इव पुनरपि "यज्ञादिकर्म कृत्वा स्वर्गादिफलसंपादनमेव मुख्यः पुरुषार्थः" इत्येवं लोकानां प्रत्ययो दृढः संजज्ञे।

एतं लोकप्रत्ययं निराकुर्वन्मोक्षमार्गे च लोकानां प्रवृत्तिं जनयन्भगवान्बादरायणो ब्रह्मसूत्राणि प्रणिनाय। जैमिनिप्रतिपादिताश्च वाक्यार्थोपयोगिनो न्यायाः सर्वे बादरायणस्य संमता एव। उपनि-

सूत्रकृदुद्देशः

षद्भागः कर्मकाण्डस्याङ्गभूत इत्येतावानंशः परं बादरायणस्यासंमतः। बादरायणश्च जैमिनिप्रतिपादितैरेव न्यायैरुपनिषदर्थं प्रतिपाद्य तस्य च श्रुतिशिरोभागत्वं प्रस्थाप्य मोक्षद्वारमप्रतिबन्धं चकार। उपनिषत्प्रदर्शितो मोक्षमार्गश्च निष्कण्टकः संजज्ञे।

एवं काले बहुतिथे गते पुनरपि विषमकाल उपस्थितः। अश्रद्धया लोकानां मनः समाक्रान्तम्। ज्ञानमार्गिणः कर्ममार्गिणश्च नामशेषा अभूवन्। पूर्ववत्पु-

नास्तिकोत्पत्तिः

नर्नास्तिकाश्चार्वाकपदवाच्याः प्रादुर्बभूवुः । ते हीत्थमूचुः—" न जीवो नाम देहादन्यः कश्चिदस्ति । न मोक्षः । न परलोकः । न श्रुतिः प्रमाणम् । नेश्वरो नाम नियन्ता कश्चित् । स्वभावत एवेदं जगदुत्पद्यते विलीयते च " इति ।

मीमांसकमतप्रचारः

चक्रगतिन्यायेन पुनरपि कालपरिवृत्तौ कर्ममार्गीयैस्तात्कालिकराजलब्धसाहायकैश्चार्वाकमतप्रचारोऽत्यन्तापकर्षं नीतः । मण्डनमिश्रप्रभृतयो मीमांसकाग्रेसराश्च राजसंसादि लब्धोत्कर्षाः पण्डितंमन्यास्तदानीं नास्तिकानिव ज्ञानमार्गीयानपि मूर्खानिवाकलयांचक्रुः । उपनिषदनभिव्यक्तिकाल इव सूत्रप्रणयनात्प्राक्तने काल इव च सर्वत्र परिस्थितिर्दृष्टिगोचरतां ययौ ।

श्रीमच्छंकराचार्यावतारः

अस्मिन्नवसरे लोकानुद्दिधीर्षुर्भगवान् श्रीशंकरः शंकराचार्यरूपेणावतीर्य ब्रह्मसूत्रव्याख्यारूपं शारीरभाष्यं विरच्य सूत्रकारवत्पुनरपि मोक्षद्वारमप्रतिबन्धं चकार । वेदान्तशास्त्रपुनरुज्जीवनायैवायं श्रीशंकराचार्यावतारः ।

---

श्रीशंकरजगत्पूज्यपादा नित्यं जयन्ति ते ।
ये प्रस्थानत्रये भाष्यं मायावादेन तेनिरे ॥ १ ॥

अथ सुखबोधाय शांकरदर्शनं लिख्यते ।

नित्यं सर्वगुणावधूननपरा नैर्गुण्यवादाः श्रुतौ
गौणार्थाः सगुणोक्तयः शुभगुणारोपात्परे ब्रह्मणि ॥
अद्वैतश्रुतयः सदर्थविषया भेदोक्तिरौपाधिकी
तत्सर्वश्रुतिसंगतं विजयते श्रीशांकरं दर्शनम् ॥ २ ॥

प्रत्यक्षादिप्रमाणेषु शब्द एव तावदादौ ब्रह्म बोधयितुं मुख्यतः प्रभवति । ततः पश्चात्तदनुसारेण प्रमाणान्तराण्यपि तद्बोधयितुं प्रवर्तन्ते । शब्दश्च ' सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ' ( छा० ६ । २ १ ) इत्यादिः परमात्मरूपमेकमेव तत्त्वमिति स्पष्टमेवाभिधत्ते । स च परमात्मा दृशिरूपः । यद्यपि द्रष्टा दृश्यं दृशिश्चेति पदार्थत्रितयमाबालवृद्धमसंदिग्धं सर्वैरप्यनुभूयते तथाऽपि दृश्याश्रयी-

भूतो द्रष्टा दृशिविषयीभूतं दृश्यमिति तयोर्द्रष्टृदृश्ययोर्दृशिसापेक्षत्वेन तत्स्वरूपस्य दृशिनिरूपणाधीननिरूपणत्वाद्दृशिरेव वस्तुतस्त-

आत्मरूपमेकमेव तत्त्वम् तत्त्वम् । द्रष्टृदृश्ययोस्तु कल्पितत्वमेव । दृशिर्ज्ञानम् । सा च दृशिर्द्विधा निरुपाधिका सोपाधिका च । तत्र निरुपाधिका दृशिर्निराश्रयं निर्विषयं सन्मात्ररूपं ज्ञानम् । सा च निरुपाधिका दृशिः स्वरूपलाभे न किमप्यपेक्षते । इयमेव ब्रह्मशब्देन परमात्मशब्देन चाभिधीयते । साश्रयं सविषयं यल्लौकिकं प्रमाणादिजन्यं ज्ञानं तद्रूपा सोपाधिका दृशिश्चाश्रयविषयसापेक्षेति द्रष्टृदृश्यवत्कल्पितैव । तथाच कल्पितानामखिलवस्तूनामाश्रयीभूतं कल्पनाधिष्ठानभूतमत एव सर्वजगन्मूलभूतं ब्रह्म । यतो वा इमानि भूतानि जायन्ते ( तै० ३ । १ । १ ) इति श्रुतौ जन्माद्यस्य यतः ( ब्रह्मसू० १ । १ । २ ) इति सूत्रे च सर्वजगन्मूलकारणं ब्रह्मेति ब्रह्मलक्षणं प्रतिपाद्यते ।

कारणं च कार्यापेक्षया सूक्ष्मं व्यापकं च भवति । यदुक्तमुपदेशसाहस्र्याम्—

सूक्ष्मताव्यापिते ज्ञेये गन्धादेरुत्तरोत्तरम् ।
प्रत्यगात्मावसानेषु पूर्वपूर्वप्रहाणतः ॥ ( उ० सा० ९ । १ ) इति ।

अत्र गन्धशब्देन पृथिव्युच्यते । गुणानां गुण्यपेक्षया पृथगुपलम्भाभावेन गुणगुणिनोरभेदस्यैव सिद्धान्तेऽङ्गीकारात् । प्रत्यगात्मावसानेषु परमात्मपर्यन्तेषु । प्रहाणं कार्याकारत्यागः । पृथिवीजलतेजआदिस्वरूपात्कार्यात्पूर्वस्मात्पूर्वस्मादुत्तरोत्तरं कारणतया स्थितेषु परमात्मपर्यन्तेषु पदार्थेषु यथाक्रमं कार्याकारत्यागेन सूक्ष्मता व्यापिता च विज्ञातव्या । न च कार्यापेक्षया सूक्ष्मं चेत्कारणं तर्हि तस्य न्यूनपरिमाणत्वात्कथं कार्यव्यापकत्वमिति वाच्यम् । यतः कार्येषु विद्यमानमपि कारणस्वरूपं कार्याकारतिरोहिततया न स्वरूपेण सम्यगवभासत इत्येवात्र सूक्ष्ममुच्यते न

कारणस्य सूक्ष्मत्वं व्यापित्वं च

न्यूनपरिमाणयोगात् । तथा सकलविकारानुगतस्यैवोपादानकारणत्वात्कार्यापेक्षयाऽधिकदेशवृत्तित्वेन कारणस्य कार्यव्यापकत्वम् । तस्मात्पृथिवी स्वकार्यापेक्षया सूक्ष्मा व्यापिका च सिद्धा । पृथिव्यपेक्षया जलं सूक्ष्मं व्यापकं च । शरीरे स्वेदस्य पर्वतशिलादिष्वन्तर्भूमौ प्रस्रवणस्य चोपलम्भात् । जलासाधारणगुणस्य रसस्य पृथिव्यां सर्वत्रोपलम्भाच्च । पृथिव्यां तत्र तत्राप्रतिबन्धेन जलप्रवेशानुभवाच्च । जलापेक्षयापि तेजः सूक्ष्मं व्यापकं च । जलप्रदूरीकरणैव रविकिरणानामग्निपरमाणूनां चान्तःप्रवेशदर्शनात् । जलविनाशयस्या-

ष्यग्नेरवयवानामुष्णजले प्रविष्टानां जलेनाविनाशदर्शनाच्च । तत्र हि तेषामवयवानामविनाशे जलापेक्षया सूक्ष्मतैव हेतुः। तेजोपेक्षयापि वायुः सूक्ष्मो व्यापकश्च। रविकिरणेषु यथावस्थितेषु सत्स्वेव वायुसंचारदर्शनात् । तदपेक्षयाप्याकाशं सूक्ष्मं व्यापकं च । तथैवोपलम्भात् । यतः पाषाणस्यापि भेदो दृश्यते । अवकाशं विना च भेदस्यासंभव एव । एवं परमात्मपर्यन्तेषु सूक्ष्मत्वं व्यापकत्वं च बोध्यम् ।

व्यापकत्वादेव च कारणं कार्यापेक्षया सामान्यभूतम् । कार्यगतविशेषरहितमित्यर्थः । घटशरावादिकार्यगतानां घटत्वशरावत्वादिविशेषाणां कारणावस्थायां मृद्यदर्शनात् । अत एव सर्वकार्याणां मूलकारणं ब्रह्म सर्वविशेषरहितम् । यदि तत्र कोऽपि विशेषः स्यात्तर्हि तादृशविशेषरहितं ब्रह्मणोऽपि मूलकारणमन्यत्किंचित्स्यात् । तस्यापि सविशेषत्वे तादृशविशेषरहितं तन्मूलभूतं पुनरन्यत्स्यादित्यनवस्थाप्रसङ्गः । तन्निरासाय मूलकारणं सर्वविशेषरहितमित्यवश्यं वाच्यम् । तदेव च नो ब्रह्म ।

आत्मनो निर्विशेषत्वम्

विशेषरहितत्वादेव च न तत्र यस्मात्कस्मादपि सजातीयाद्विजातीयात्स्वगताच्च भेदः संभवति । सविशेषस्यैव भेदाधिकरणत्वात् । तेन ब्रह्मसजातीयश्चेतनो ब्रह्मविजातीयोऽचेतनो ब्रह्मगतो धर्मो वा न कश्चिदन्योऽस्तीति सर्वथा शुद्धमद्वितीयं भेदत्रयशून्यं निर्विशेषं ब्रह्म सिध्यति ।

ब्रह्मणि भेदत्रयराहित्यम्

तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् ॥ ( ब्र० बि० ८।९ )

इतिश्रुतौ निर्विकल्पशब्देन ब्रह्मणो निर्विशेषता स्पष्टमेवोच्यते । किंच ब्रह्मणः सविशेषत्वे तद्विशेषपुरस्कारेणेदृशं तादृशमित्येवं शब्दप्रतिपाद्यता ब्रह्मणः स्यात् । तथा सति "यतो वाचो निवर्तन्ते" ( तै० २।९ ) इति श्रुतिः, 'अगोचरं वचसाम्' ( वि० पु० ६।७।५३ ) इति स्मृतिश्च विरुद्धा स्यात् ।

'निर्गुणम्' ( आत्मोप० १, चू० ७।२ ) इति च श्रुतिर्ब्रह्मणि शुभान्हेयांश्च सर्वानेव गुणान्सामान्येन निषेधति । युक्तं चैतत् । ब्रह्मणः सगुणत्वे तेन गुणेन ब्रह्मणः सविशेषत्वावश्यंभावेन तस्य पूर्वोक्तयुक्त्या जगन्मूलकारणत्वं

न स्यात्। "यः सर्वज्ञः" (मु० १।१।९) "सत्यकामः सत्यसंकल्पः" (छा० ८।७।१) इत्याद्याः सगुणश्रुतयस्त्वारोपितगुणप्रतिपादिकाः।

ब्रह्मणो निर्गुणत्वम्

ब्रह्मणि गुणान्वस्तुत एव स्वीकृत्य हेयगुणराहित्येन निर्गुणश्रुतिसमर्थने तु बाह्येन्द्रियग्राह्यरूपरसादिगुणराहित्येन जीवस्यापि निर्गुणपदवाच्यता स्यात्। पृथिव्यादिभूतानामपि सुखदुःखादिगुणराहित्येन निर्गुणपदवाच्यता स्यात्। तथा सति निर्गुणम् (आ० १, चू० ७।२) इति पूर्वोक्तश्रुत्या निर्गुणपदेन किमप्यधिकं नोक्तं भवेत्। एवं च परब्रह्मणि कल्याणकारका अपि गुणा वस्तुतो नैव सन्ति। किंच परमात्मनिष्ठत्वेनाभिमताः कल्याणकारका गुणा जीवानां जीवावस्थायामेवोपयुज्यन्ते। सा चावस्थाऽविद्याकल्पितेति तत्रोपयुञ्जानाः परमात्मगुणा अपि कल्पिता एव। स्वप्नस्थकल्पितगतिक्रियायामुपयुञ्जानो रथोऽपि कल्पित एव भवति।

ज्ञानमपि परब्रह्मणः स्वरूपं न तु तस्य गुणः। "विज्ञानघनः" (बृ० २।४।१२) "सत्यं ज्ञानम्" (तै० २।१) "विज्ञानमानन्दं ब्रह्म" (बृ० ३।९।२८) इत्यादिश्रुत्यनुरोधात्। "विज्ञातारमरे" (बृ० २।४।१४)

ज्ञानस्वरूप आत्मा

इति श्रुतौ विज्ञातृत्वोक्तिस्त्वौपचारिकी। अद्वितीये परब्रह्मणि भेदमूलकस्य धर्मधर्मिभावस्यासंभवेन तस्य वस्तुतो ज्ञानाश्रयत्वासंभवात्। एवमेव भेदमूलकस्य विषयविषयिभावस्यापि तत्रासंभवेन न वस्तुतस्तस्य ज्ञेयत्वम्।

स च परमात्मा नित्य इत्यत्र प्रायः सर्वेषामैकमत्यमेव। चार्वाकादयो नास्तिकाः परं परमात्मानमेव न मन्यन्ते दूरे तस्य नित्यत्वमिति त्वन्यत्। श्रुत्येकशरणानां तु "स वा एष महानज आत्माऽजरोऽमरोऽमृतो ब्रह्म" (बृ०४।४।२५) "नित्यो नित्यानाम्" (श्वे० ६।१३) इत्यादिभिः श्रुतिभिर्नित्यत्वमेवाभिमतम्। अनुमानमप्यत्र लब्धावसरम्। ब्रह्म नित्यं मूलकारणत्वात्। यदनित्यं तन्मूलकारणं न भवति यथा घटादि। मूलकारणस्यानित्यत्व आकस्मिककार्योत्पादप्रसङ्गः। स च न संभवतीत्येवमत्रानुकूलस्तर्कः।

आत्मा नित्यः

सा च नित्यता न सुवर्णस्येव परिणामिनित्यता। यथा सुवर्णं तत्तदलंकाररूपेण परिणममानमप्यलंकारवन्न विनश्यतीत्यलंकारापेक्षया नित्यं भवति न तथा परमात्मा। "निष्कलं निष्क्रियम्" (श्वे० ६।१९) इत्यादि-

श्रुतिषु तस्य विकारराहित्याभिधानेन परिणामासंभवात् । किं तु ब्रह्मणः कूटस्थनित्यता । एकेनैव रूपेण सदा विद्यमानं कूटस्थनित्यम् ।

अद्वैतम्

तदेतद्ब्रह्माद्वितीयम् । ब्रह्मणा संबद्धं तदसंबद्धं तच्छरीरभूतं तदंशभूतं तद्धर्मभूतं वाऽन्यत्किंचिदपि नास्ति । "सर्वं खल्विदं ब्रह्म" (छा० ३ । १४ । १) "इदं सर्वं यदयमात्मा" (बृ० २ । ४ । ५) "ऐतदात्म्यमिदं सर्वम्" (छा० ६ । ८ । ७) इत्यादिश्रुत्यनुरोधात् । ब्रह्माद्वैतमिति प्रसिद्धिरप्येतन्मते सामीचीन्येन संगच्छते । ब्रह्मणि वस्तुतः केनापि प्रकारेण द्वैतस्याभावात् । अत एवेदमद्वैतमतमिति गीयते ।

सन्मात्रं ब्रह्म

ब्रह्म च सन्मात्ररूपम् । अस्तीत्येव केवलं वक्तुं शक्यते न त्वीदृशं तादृशमिति । ईदृशादिविशेषणोपादाने तु विशेषणस्य व्यावर्तकत्वनियमेन यस्य व्यावृत्तिस्तेन ब्रह्मणः सद्वितीयत्वापत्तावद्वितीयश्रुतिविरोधः स्यात् ।

सदनुभूत्योरैक्यम्

यतो ज्ञानस्वरूपं ब्रह्म सन्मात्ररूपमतो ज्ञानमपि तत्सन्मात्ररूपमेव । न तु सन्मात्रस्य तत्र विषयभावः । लौकिकज्ञानवत्साश्रयत्वे सविषयत्वे वा तस्य सत्सामान्यरूपत्वानापत्त्या ज्ञानस्य ब्रह्मस्वरूपत्वानापत्तेः । तथा च "विज्ञानघनः" (बृ० २।४।१२) इत्यादिपूर्वोक्तश्रुतिविरोधस्तदवस्थ एव स्यात् ।

ननु ब्रह्माद्वैते

जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥

इत्यभियुक्तोक्तिर्विरुध्यते । अत्र (१) जीव (२) ईश्वरो (३) ब्रह्म (४) जीवेश्वरयोर्भेदोऽ (५) विद्या (६) ब्रह्मणोऽविद्यासंबन्धश्चेत्येतेषां षण्णामनादित्वकथनेन द्वैतस्य स्पष्टमेव प्रतिपन्नत्वादिति चेत्—उच्यते । सत्ता हि त्रिविधा पारमार्थिकी व्यावहारिकी प्रातिभासिकी च । तत्र पारमार्थिकी सत्ता ब्रह्मण एव नान्यस्य कस्यचित् । तस्य कदाप्यबाध्यमानत्वात् । व्यावहारिकी सत्ता

त्रिविधं सत्त्वम्

भूतभौतिकस्य सर्वस्य जगतः तस्य मोक्षदशायां बाधेऽपि व्यवहारदशायामबाध्यमानत्वात् । प्रातिभासिकी सत्ता शुक्त्यादौ भासमानस्य रजतादेः । तस्य व्यवहारदशायामपि बाधात् । प्रतिभासकाल एव तस्य सत्त्वम् । तदुक्तम्—

कालत्रये ज्ञातृकाले प्रतीतिसमये तथा ।
बाधाभावात्पदार्थानां सत्त्वंत्रैविध्यमिष्यते ॥
तात्त्विकं ब्रह्मणः सत्त्वं व्योमादेर्व्यावहारिकम् ।
रूप्यादेरर्थजातस्य प्रातिभासिकमिष्यते ॥
लौकिकेन प्रमाणेन यद्बाध्यं लौकिकेऽवधौ ।
तत्प्रातिभासिकं सत्त्वं बाध्यं सत्येव मातरि ॥
वैदिकेन प्रमाणेन यद्बाध्यं वैदिकेऽवधौ ।
तद्व्यावहारिकं सत्त्वं बाध्यं मात्रा सहैव तत् ॥ इति ।

ब्रह्माद्वैतमित्युक्तिस्तु पारमार्थिकसत्ताभिप्रायेण बोध्या । जीव ईश इत्युक्तश्लोके विशुद्धा चिदित्यनेन परं ब्रह्मोच्यते तदतिरिक्तानां जीवादीनां पञ्चानां न पारमार्थिकं सत्त्वं किं तु व्यावहारिकम् । अनादित्वसाम्येन तु षण्णां तत्र परिगणनम् । पारमार्थिकस्य ब्रह्मणोऽनादित्वमनन्तत्वं च । कालत्रयाबाध्यत्वमिति यावत् । अन्येषां जीवादीनां पञ्चानां त्वनादित्वेऽपि नानन्तत्वम् । तेषां यावत्संसारं स्थायित्वेऽपि मोक्षावस्थायां विनाशात् । तेष्वपि जीवेश्वरभेदोऽविद्या ब्रह्मणोऽविद्यासंबन्धश्चेत्येषां त्रयाणां स्वरूपेणैव नाशः । जीवेश्वरयोस्तु न तथा । किं तु जीवत्वेश्वरत्वप्रापकोपाधेरेव विनाशः । एतेन जीवस्य व्यावहारिकसत्त्वे व्यवहारातीतायां मोक्षावस्थायां जीवनाशावश्यंभावेन मोक्षप्राप्तये न कोऽपि प्रयतेतेत्यपास्तम् ।

जीवत्वमीश्वरत्वं चौपाधिकम्

जीवत्वेश्वरत्वप्रापकोपाधिस्तु भावरूपं त्रिगुणात्मकं सदसद्भ्यामनिर्वचनीयमनाद्यज्ञानम् । तच्चाज्ञानं मायाविद्याभेदेन द्विविधम् । शुद्धसत्त्वप्रधानं मायापदवाच्यम् । मलिनसत्त्वप्रधानमविद्यापदवाच्यम् । मायोपहितं चैतन्यमीश्वरः । अविद्योपहितं चैतन्यं जीवः ।

अज्ञानस्य शक्तिद्वयम्

अथवाऽज्ञानं स्वरूपत एकरूपमेव । किंतु तस्य शक्तिर्द्विविधा ज्ञानशक्तिः क्रियाशक्तिश्चेति । रजस्तमोभ्यामनभिभूतं सत्त्वं ज्ञानशक्तिः । "सत्त्वात्संजायते ज्ञानम्" ( भ० गी० १४ । १७ ) इति स्मृतेः । सा च शब्दादिविषयकज्ञानहेतुः । क्रियाशक्तिर्द्विविधा—आवरणशक्तिर्विक्षेपशक्तिश्चेति । रजःसत्त्वाभ्यामनभिभूतं तम आवरणशक्तिः । सा च घटो नास्ति न प्रकाशत इत्यादिव्यवहारहेतुः । तमःसत्त्वाभ्यामनभिभूतं रजो विक्षेपशक्तिः । सा चाकाशादिप्रप-

श्चोत्पत्तिहेतुः । विक्षेपशक्तिमदज्ञानोपहितस्वरूपेणैवेश्वरस्य जगदुपादानत्वात् । "यथोर्णनाभिः सृजते गृह्णते च" ( मु० १ । ७ ) इत्यादिश्रुतिरत्र प्रमाणम् । ऊर्णनाभिर्लूताकीटः । ज्ञानशक्तिमदज्ञानोपहितस्वरूपेण त्वीश्वरो जगतः कर्तेत्युच्यते । अत्र मत आवरणशक्तिप्रधानमज्ञानमविद्येत्युच्यते । विक्षेपशक्तिप्रधानमज्ञानं मायेत्युच्यते । जीवत्वेश्वरत्वोपाधिस्तु पूर्ववदेव बोध्यः ।

अथवा मायाविद्याशब्दौ शक्तिद्वययुताज्ञानसामान्यवाचकौ पर्यायावेव । अविद्योपहितं बिम्बचैतन्यमीश्वरः । अविद्याप्रतिबिम्बितं प्रतिबिम्बभूतं चैतन्यं जीव इत्येवं जीवेश्वरभेदो बोध्यः ।

अत्रेदं बोध्यम् । जीवेश्वरस्वरूपविषये चावच्छेदवाद आभासवादः प्रतिबिम्बवादश्चेत्यनेके पक्षाः संभवन्ति । तद्यथा—

वाचस्पतेरवच्छिन्न आभासो वार्तिकस्य च ।
संक्षेपशारीरकृतः प्रतिबिम्बं तथेष्यते ॥ इति ।

जीवस्वरूपम्

अवच्छेदोऽन्तः प्रवेशः । तद्युक्तोऽवच्छिन्नः । यथा जलेऽन्तःप्रविष्टमाकाशं जलावच्छिन्नमित्युच्यते । अन्यसंबन्धेनान्यत्र भासमानोऽर्थ आभासः । यथा जपाकुसुमसांनिध्यात्स्फटिके भासमानो रक्तिमा । अयमेवोपहित इत्युच्यते । प्रतिबिम्बं प्रसिद्धम् ।

अवच्छेदवादिनां वाचस्पतिमिश्राणां मतेऽज्ञानविषयीकृतं चैतन्यमीश्वरः । अज्ञानाश्रयीभूतं चैतन्यं जीवः । आभासवादिनां वार्तिककाराणां मतेऽज्ञानोपहितमज्ञानतादात्म्यापन्नं चैतन्यमीश्वरः । अविद्याकार्यभूतबुद्ध्युपहितं बुद्धितादात्म्यापन्नं चैतन्यं जीवः । केचित्त्वाभासवादमेव स्वीकृत्याज्ञानसमष्ट्युपहितं चैतन्यमीश्वरः । अज्ञानव्यष्ट्युपहितं चैतन्यं जीवः । अज्ञानं च स्वरूपत एव नानाभूतमित्याहुः ।

प्रतिबिम्बवादिनां संक्षेपशारीरकाराणां मतेऽज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः । बुद्धिप्रतिबिम्बितं चैतन्यं जीवः । विवरणकारास्त्वीश्वरविषय आभासवादं जीवविषये च प्रतिबिम्बवादं मन्वाना अज्ञानोपहितं बिम्बचैतन्यमीश्वरः । अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितं चैतन्यं जीव इत्याहुः । एतद्विवरणकारमते धर्मिणः प्रतिबिम्बस्य नाध्यासः । किं त्वज्ञानप्रतिबिम्बितेऽनध्यस्त एव धर्मिणि जीवे ब्रह्मभेदरूपस्य धर्मस्याध्यासः । ननु तर्हि प्रतिबिम्बभूतजीवस्वरूपस्य धर्मिणोऽनध्यस्तत्वे तस्य सत्यत्वं स्यादिति चेदिष्टापत्तिः । परंतु तत्सत्यत्वं बिम्बरूपेणैव न तु प्रतिबिम्बरूपेण । प्रतिबिम्बस्य बिम्बव्यति-

रिक्तेन रूपेण सत्यत्वादर्शनात्। यथा घटस्य न घटरूपेण सत्यत्वं किंतु मृद्रूपेणैव तद्वत्। भारतीतीर्थास्त्वज्ञाने धर्मिणः प्रतिबिम्बस्यैवाध्यासः। ब्रह्मभेदादिकमपि सर्वं तत्राध्यस्तमेव। एवं च जीवस्वरूपस्य मिथ्यात्वमित्यूचुः।

जीवैकत्वानेकत्वविचारः

अत्र येषां मतेऽविद्यया संयुक्तं चैतन्यं जीवः स च तत्रावच्छिन्न उपहितः प्रतिबिम्बितो वा तेषां मते जीवावस्थायामपि जीवैकत्वम्। अविद्याया एकत्वात्। अयमेकजीववादः। सुखदुःखादिवैचित्र्यं चोपाधिभेदात्। येषां तु मते व्यष्ट्यविद्ययाऽविद्याकार्यभूतबुद्ध्या वा संयुक्तं चैतन्यं जीवः स च तत्रावच्छिन्न उपहितः प्रतिबिम्बितो वा तेषां मते जीवनानात्वम्। अयं जीवनानात्ववादः। अत्र वाचस्पतिमिश्राणां मते जीवैकत्वम्। वार्तिककाराणां विवरणकाराणां संक्षेपशारीरककाराणां च मते जीवनानात्वमिति।

एकजीववादः

अत्रेदं तत्त्वम्। एकजीववाद एव सिद्धान्तिसंमतः। अनेकजीववादे कस्याविद्या प्रपञ्चरूपेण परिणता। देवदत्तस्य चेद्यज्ञदत्तदृष्ट्या प्रपञ्चाभावप्रसङ्गः। न चानेकतन्त्वारब्धपटवदनेका अविद्याः संभूय प्रपञ्चरूपेण परिणता इति वाच्यम्। केषुचित्तन्तुषु पटादिष्कृष्टेषु पटन्यूनतावत्केषुचिच्छुकवामदेवादिषु मुक्तेषु तत्तदविद्याया निष्कर्षात्प्रपञ्चन्यूनतापत्तेः। किं च जीवो विभुः। अन्यथा देवदत्तीयादृष्टेन देशान्तरे देवदत्तभोग्यवस्तुन उत्पत्तिर्न स्यात्। अणोर्जीवस्य देशान्तरे व्याप्त्यभावेन तदीयादृष्टस्यापि तत्र कार्योत्पत्तिदेशे कार्योत्पत्तिकाले संनिधानाभावात्। किंच कायव्यूह एकस्मिन्कायेऽनुभूतस्य सुखस्य दुःखस्य वा कायान्तरेऽनुसंधानं न स्यात्। एकेनैव जीवेन स्वतपोबलेन योगसामर्थ्येन वा युगपदेव धृतान्यनेकशरीराणि कायव्यूह इत्युच्यते। स च पुराणादौ प्रसिद्ध एव। किं च तस्याणुत्वे शरीरव्यापिसुखाद्यनुपलब्धिप्रसङ्गः। शरीरपरिमाणत्वे च शरीरस्य बाल्ययौवनाद्यवस्थाभेदेन पिपीलिकामनुष्यहस्त्यादिभेदेन चानियतपरिमाणत्वाज्जीवस्याप्यनियतपरिमाणत्वापत्त्या विकारादिदोषप्रसङ्गेनानित्यत्वापत्तिः। अतो जीवस्य विभुत्वं सिद्धम्। तथा चानेकजीववादे विभूनां जीवानां सर्वव्यापिनां सर्वेषां सर्वैरदृष्टैः सर्वैः कर्मभिः सर्वैः शरीरैश्च सह संबन्धस्यावर्जनीयत्वेनामुकमदृष्टममुकं कर्मामुकं शरीरममुकस्यैव जीव-

स्येति नियमहेत्वभावेन सुखदुःखादिवैचित्र्यस्यानुपपत्तिस्तदवस्थैव । एवं च लाघवादेकजीववाद एवास्थेयः । सुखदुःखादिवैचित्र्यं तु शरीराद्युपाधिभेदेनोपपद्यते । तथा च जीवनानात्ववादिनो वार्तिककारा विवरणकाराः संक्षेपशारीरककाराश्च प्रत्युक्ताः ।

किं च वार्तिककारमतानुसारेणाविद्याकार्यभूतबुद्ध्युपहितचैतन्यस्य जीवत्वे तथा संक्षेपशारीरककारमतानुसारेण बुद्धिप्रतिबिम्बितचैतन्यस्य जीवत्वे "जीव ईश" इत्याद्युक्ता जीवस्यानादित्वोक्तिर्विरुध्यते । बुद्धेरविद्याकार्यत्वेनानादित्वाभावेन तदुपहितस्य तत्प्रतिबिम्बितस्य वाऽनादित्वासंभवात् । एवं विवरणकारमतानुसारेणान्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितस्य चैतन्यस्य जीवत्वेऽप्यूह्यम् । युक्तं च जीवस्यानादित्वम् । सुषुप्त्यवस्थायां जीवस्य परमात्मसंपत्तावपि जीवत्वप्रापकोपाधेरविनाशाज्जागृतौ पुनः

जीवस्यानादित्वम्

स एवोत्तिष्ठतीति 'स एव तु' ( ब्र० सू० ३ । २ । ९ ) इति सूत्र उक्तम् । तद्वन्मोक्षावस्थातः पूर्वं प्रलयेऽपि जीवत्वप्रापकोपाधेरविनाश एव वाच्यः । अन्यथा यथा पात्रस्थं जलं पात्ररहितं जलराशौ प्रक्षिप्तं सत्पुनस्तदेवोद्धारयितुमशक्यं तथा पुनः सृष्टौ तस्योत्थानासंभवेन सर्वस्य मुक्तिः सुलभा स्यात् । जीवत्वप्रापकोपाधेरविनाशे तु यथा पिहितपात्रस्थं जलं पात्रसहितं जलराशौ प्रक्षिप्तमपि पुनस्तदेवोद्धारयितुं शक्यते तथा तस्यैव जीवस्य पुनः सृष्ट्युत्थानं सुलभम् । एतच्च जीवस्यानादित्व एव संगच्छते । सादित्वे त्वविद्याकार्यस्य जीवोपाधित्वेन प्रलये चाविद्याकार्यस्य विनाशेन जीवोपाधिस्थितेरसंभवेन तस्यैव पुनरुत्थानमिति नियमो न स्यात् ।

वाचस्पतिभिश्च यद्यप्येकजीववाद एवाश्रितस्तथापि तैरवच्छेदवादः स्वीकृतः । तदपेक्षया च जीवविषये प्रतिबिम्बवाद एव ज्यायान् । यतो जीवानामत्यन्तमज्ञानपारतन्त्र्यमुपलभ्यते । तच्च प्रति-

प्रतिबिम्बवादः

बिम्बवाद एव साधीचीन्येनोपपद्यते । किं च यथैकस्मिन्पादे शृङ्खलाबन्धसत्त्वे पादान्तरे तदभावेऽपि न मनुष्यो मुक्तो भवति तद्वदवच्छेदवादे यस्या अविद्याया नाशस्तदवच्छिन्नस्य ब्रह्मणा सहैक्येऽपि तस्यैवाविद्यान्तरावच्छिन्नांशेन बद्धत्वं तदवस्थमेव स्यात् । प्रतिबिम्बवादे तु नायं दोषः । यतः प्रतिबिम्बगतमालिन्यादीनां बिम्बे स्पर्शोऽपि नास्ति । किं चान्तर्यामिब्राह्मणे य आत्मनि तिष्ठन्नात्मनोऽन्तरः०

य आत्मानमन्तरो यमयति ( बृ० ३।७।२२ ) इत्यत्र नियम्यनियामकयोरेकत्रैव स्थितिरुक्ता सा प्रतिबिम्बवादे संगच्छते । यथैकत्रैव जले जलावच्छिन्न आकाशो जले प्रतिबिम्बितश्चाकाश इत्याकाशद्वयं तथाऽविद्यारूपोपाधौ चैतन्यद्वयम् । तत्र प्रतिबिम्बचैतन्यं जीवभूतं नियम्यम् । अवच्छिन्नं त्वीश्वररूपं नियामकम् । घटावच्छिन्नाकाशस्य महाकाशानन्यत्ववदवच्छिन्नचैतन्यस्य बिम्बानन्यत्वं बोध्यम् । एवं चाज्ञानप्रतिबिम्बितं चैतन्यं जीवः, अज्ञानोपहितं बिम्बचैतन्यमीश्वर इति प्रागुक्तपक्ष एव सिद्धान्तभूतोऽवतिष्ठते । शुद्धं चैतन्यं त्वज्ञानानुपहितमेवेति । सर्वेष्वप्येपूक्तेपु पक्षेपु ब्रह्माद्वैतं स्थिरमेव । अवच्छिन्नस्योपहितस्य प्रतिबिम्बितस्य वा चैतन्यस्य शुद्धचैतन्यापेक्षया पृथग्भावायोगात् । जडवस्तुनापि ब्रह्मणि द्वैतं नापादनीयम् । जडस्याकाशाद्यखिलप्रपञ्चस्य भावरूपाज्ञानोपादानकत्वेन मिथ्यात्वात् ।

अद्वैतम्

अज्ञानं चेदं सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं भावरूपं ज्ञाननिवर्त्यम् । अत्र प्रमाणमहं ब्रह्म न जानामीत्यनुभवः. देवात्मशक्तिं स्वगुणैर्निगूढाम् " भूयश्चान्ते विश्वमायानिवृत्तिः " परास्य शक्तिर्विविधैव श्रूयते " ( श्वे० ६ । ८ ) इत्याद्याः श्रुतयः,

अविद्या

" तरन्त्यविद्यां विततां हृदि यस्मिन्निवेशिते ।
योगी मायाममेयात्मा तस्मै विद्यात्मने नमः " ॥
" अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः " ( गी० ५ । १५ )
" ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः " ( गी० ५ । १६ )

इत्यादिस्मृतयश्च । इयमज्ञानपदवाच्याऽविद्या कथं जाता केन च कारणेनास्या ब्रह्मणा सह संबन्धो जात इति न चोदनीयम् । अविद्यायास्तत्संबन्धस्य चानादित्वाङ्गीकारात् ।

स संबन्धः कीदृश इति चेत्—उच्यते । यथाऽग्निः स्वविरोधिनि जले साक्षात्प्रवेष्टुमशक्तोऽपि सूक्ष्मरूपेण पात्रादिद्वारा जले प्रविश्य तदीयं शैत्यं चापह्नुत्य तत्र स्वकीयोष्णत्वं तदीयत्वेन प्रदर्शयति तथेयमविद्या साक्षात्प्रवेष्टुमशक्ता सूक्ष्मतरेण स्वकीयमूलरूपेण तत्र प्रविश्य तदीयं निर्विषयं निराश्रयं सामान्यपराकाष्ठाभूतं स्वरूपमपह्नुत्य स्वकीयं साश्रयत्वसविषयत्वरूपविशेषरूपं तत्र प्रदर्शयति । अज्ञानशक्तिर्हि स्वयं साश्रया सविषया च । तत्र विषय ईश्वरः ।

आश्रयो जीवः । एतद्द्वयमनयोर्मिथो भेदश्चानादिरेव । एतदेव साश्रयत्वं सविषयत्वं ज्ञानरूपे ब्रह्मणि तदीयत्वेन प्रदर्शयति । साश्रयत्वेन सविषयत्वेन च भासमानं यज्ज्ञानं तदेव महत्तत्त्वम् । एतदारभ्य सर्वं सादि न त्वनादि । ततश्चैकमपि ज्ञानरूपं ब्रह्म धर्मधर्मिभावेन विषयविषयिभावेन च भिन्नवद्भासते । ज्ञातृरूपेण ज्ञेयरूपेण च भासत इति यावत् । तत्र ज्ञाताऽहंकारः । ज्ञेयं शब्दतन्मात्रादि । भासमानं चैतत्सर्वमविद्यापेक्षया परिणामः । ब्रह्मापेक्षया तु विवर्त एव । एकस्यैव वस्तुनः पूर्वावस्थात्यागपुरःसरमवस्थान्तरप्राप्तिः परिणामः । यथा क्षीरस्य क्षीरव्यवहारयोग्यतां परित्यज्य दधिव्यवहारयोग्यतापत्तिः । पूर्वावस्थामपरित्यज्यैवावस्थान्तरभानं विवर्तः । यथा रज्जुस्वरूपेणावस्थितस्यैव द्रव्यस्य सर्पात्मनाऽवभासनम् । तन्मात्रपदेन सूक्ष्मभूतान्युच्यन्ते । शब्दतन्मात्रं सूक्ष्माकाशम् । तस्मात्स्पर्शतन्मात्रम् । सूक्ष्मो वायुरित्यर्थः । एवं क्रमेण सूक्ष्माणां पञ्चभूतानामुत्पत्तिः । सूक्ष्माच्च तत्तद्भूतात्स्थूलस्य तत्तद्भूतस्योत्पत्तिः ।

सृष्ट्यारम्भकालिकमज्ञानकृत्यम्

अविद्यायास्त्रिगुणात्मकत्वात्तत्परिणामभूतं सर्वं त्रिगुणात्मकमेवेति पञ्चभूतान्यपि त्रिगुणान्येव । तत्राकाशस्य सात्त्विकांशाच्छ्रोत्रमुत्पद्यते । वायोः सात्त्विकांशात्त्वगिन्द्रियम् । तेजसः सात्त्विकांशाच्चक्षुरिन्द्रियम् । जलस्य सात्त्विकांशाद्रसनेन्द्रियम् । पृथिव्याः सात्त्विकांशाद्घ्राणेन्द्रियम् ।

ज्ञानेन्द्रियोत्पत्तिः

पञ्चभूतानां सात्त्विकांशेभ्यो मिलितेभ्योऽन्तःकरणमुत्पद्यते । तच्चतुर्विधम् । तदुक्तं वार्तिके—

अन्तःकरणोत्पत्तिः

मनो बुद्धिरहंकारश्चित्तं चेति चतुर्विधम् ।
संकल्पाख्यं मनोरूपं बुद्धिर्निश्चयरूपिणी ॥
अभिमानात्मकस्तद्वदहंकारः प्रकीर्तितः ।
अनुसंधानरूपं च चित्तमित्यभिधीयते ॥ इति ।

तथाऽऽकाशस्य राजसांशाद्वागिन्द्रियमुत्पद्यते । वायो राजसांशाद्धस्तौ । तेजसो राजसांशात्पादौ । जलस्य राजसांशादुपस्थः । पृथिव्या राजसांशात्पायुः ।

कर्मेन्द्रियोत्पत्तिः

पञ्चभूतानां राजसांशेभ्यो मिलितेभ्यः प्राण उत्पद्यते । सोऽपि वृत्तिभेदा-

प्राणोत्पत्तिः

त्पञ्चविधः । प्राग्गमनवान्नासाग्रस्थानवर्ती प्राणः । अवाग्गमनवान्पाय्वादिस्थानवर्त्यपानः । विष्वग्गमनवान्सर्वशरीरवर्ती व्यानः । ऊर्ध्वगमनवान्कण्ठवर्त्युदानः । अशितपीतादिसमीकरणकरोऽखिलशरीरवर्ती समानः ।

भूतानि चेमानि पञ्चीकरणेन दृश्यतामापद्यन्ते । आकाशादीनां पञ्चानां ये तामसा अंशास्तेषां पञ्चानां मिथो मिश्रणं भवति । तदुक्तं पञ्चदश्याम्—

द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ।
स्वस्वेतरद्वितीयांशैर्योजनात्पञ्च पञ्च ते ॥ ( प. द. १ । २७ ) इति ।

अस्यार्थः—आकाशं द्विधा समं विभज्य पुनस्तयोरेको भागश्चतुर्धा विभजनीयः । एवं वाय्वादीनां चतुर्णामपि प्रत्येकं भागपञ्चकं परिकल्प्यम् । पञ्चस्वेकोऽर्धांशः । अपरे चत्वारोऽष्टमांशाः । तत्र चतुर्णामाकाशाष्टमांशानामाकाशव्यतिरिक्तेषु चतुर्षु वाय्वाद्यर्धांशेषु मिश्रणं भवति । एवं वायवीयानां चतुर्णामष्टमांशानां वायुव्यतिरिक्तेषु चतुर्ष्वाकाशाद्यर्धांशेषु मिश्रणं भवति । एवमेव तेजोजलपृथिव्यष्टमांशानामपि स्वस्वव्यतिरिक्तेषु चतुर्ष्वर्धांशेषु मिश्रणं भवति । इयमेव पञ्चीकरणप्रक्रिया । पञ्चीकरणेन च दृश्यतामापन्नेषु स्थूलेषु भूतेषु यत्र यस्यार्धांशस्तत्र तेन शब्देन व्यवहार इदमाकाशमयं वायुरित्येवं भवति । तदुक्तं "वैशेष्यात्तु तद्वादस्तद्वादः" (ब्र० सू० २ । ४ । २२ ) इति । अत्र चाकाशादीनां सात्त्विकाद्यंशेभ्यो योत्पत्तिरभिहिता सेतरांशद्वयोपसर्जनीभूतादेव तत्तदंशाद्बोध्या न तु केवलात् । स्थूलानि चेमानि सर्वप्राणिशरीराणि पञ्चीकृतभूतविकारभूतान्येव ।

पञ्चीकरणम्

अन्नमयः प्राणमयो मनोमयो विज्ञानमय आनन्दमयश्चेत्येवं प्रसिद्धाः पञ्च कोशा अत्रैवान्तर्भवन्ति । स्थूलशरीरमन्नमयकोशः । कर्मेन्द्रियैः सहितः प्राणः प्राणमयकोशः । ज्ञानेन्द्रियैः सहितं मनो मनोमयकोशः । बुद्धिर्विज्ञानमयकोशः । तदन्तरज्ञानमात्मा वाऽऽनन्दमयकोशः । जीवात्मनि कर्तृत्वं भोक्तृत्वं चौपाधिकमेव । निश्चयाकारवृत्तिमदन्तःकरणं बुद्धिशब्दवाच्यं कर्तृत्वोपाधिः । सुखाद्याकारवृत्तिमदन्तःकरणं भोक्तृत्वोपाधिः । ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणपञ्चकं मनो बुद्धिश्चेत्येवं सप्तदशपदार्थानां संघातो लिङ्गशरीरमित्युच्यते । एतदेव सूक्ष्मशरीरम् ।

पञ्च कोशाः

ज्ञानेन्द्रियपञ्चकमन्तःकरणचतुष्टयं कर्मेन्द्रियपञ्चकं प्राणादिपञ्चकं भूतसूक्ष्मपञ्चकमविद्या कामः कर्म चेत्यष्टकं पुर्यष्टकमित्युच्यते । अत्राविद्या कार्यभूता द्रष्टव्या । सा चातस्मिंस्तद्बुद्धिः । यथाऽनित्ये स्वर्गादौ नित्यत्वबुद्धिः । अशुचौ शरीरादौ शुचित्वबुद्धिः । दुःखेषु सुखबुद्धिरनात्मनि देहादावात्मबुद्धिश्चेति । कामो रागः । कर्म त्रिविधम्--संचितमागामि प्रारब्धं चेति । फलमदत्त्वाऽदृष्टरूपेण विद्यमानं संचितम् । आगामि करिष्यमाणम् । यस्य फलं संप्रत्युपभुज्यते तत्प्रारब्धम् । तत्र मोक्षकाले संचितस्य तत्त्वज्ञानेन नाशः । आगामि तु नैवोत्पद्यते । प्रारब्धस्य तु फलभोगेन विनाश इति ।

पुर्यष्टकम्

शरीरादिसर्वमचेतनपदार्थजातं पाञ्चभौतिकम् । मरणकाले स्थूलं शरीरं विनश्यति न तु सूक्ष्मम् । सूक्ष्मस्य तु प्रलयकाले विनाशः । तत्र तु सूक्ष्मशरीरकारणीभूतमज्ञानमवशिष्यते । इदमेव कारणशरीरमित्युच्यते । तस्य तु तत्त्वज्ञानेन मोक्षावस्थायां नाशः । तुरीयावस्थायां यद्यपि त्रिविधदेहसंबन्धाभिमानो नास्ति तथापि त्रिविधदेहसंबन्धोऽवर्जनीय एव । सुषुप्तौ कारणदेहस्याभिमानः । स्वप्ने तु लिङ्गदेहस्यापि । जागृतौ तु त्रिविधस्यापि । सुषुप्तिजागृत्योः संधिभूतः क्षणस्तुरीयावस्था ।

त्रिविधशरीरसंबन्धविनाशौ

अथ जीवन्मुक्त्यवस्थातस्तुरीयावस्थायां को विशेष इति चेदुच्यते । ज्ञानस्य यन्निर्विशेषं सामान्यमात्रस्वरूपं तदवस्थाद्वयेऽप्यविशिष्टम् । तुरीयावस्थायां पूर्वसंस्काराणामविनष्टत्वात्सद्यः परिणामोन्मुखं तज्ज्ञानसामान्यं गर्भस्थं स्थूलशरीरमिव वर्तते । जीवन्मुक्तदशायां तु पूर्वसंस्काराणां विनष्टप्रायत्वादखिलपरिणामत्यागोन्मुखम् । यथाऽऽसन्नमृत्योः स्थूलशरीरमखिलभोगसाधनीभूतपरिणामत्यागोन्मुखं भवति तद्वत् । जीवन्मुक्त्यवस्थायां यत्स्रक्चन्दनवनितादिविषयदर्शनं न तत्कार्यरूपेण किंतु कारणीभूताविद्याशक्तिमद्ब्रह्मरूपेण । अतो न तत्कार्यसंबद्धं संस्कारं जनयितुं प्रभवति । नापि तादृशपूर्वसंस्कारोद्बोधकं भवति । अतः पूर्वसंस्कारास्तदानीं क्षयोन्मुखा विनष्टप्राया भवन्ति । कारणव्यतिरेकेण कार्यस्यासत्त्वान्न विषयान्कार्यरूपेण पश्यति ज्ञानी । बद्धजीवस्तु कार्यरूपेण पश्यति ।

जीवन्मुक्तितुरीयावस्थयोर्भेदः

तत्र सर्वत्रानिर्वचनीयख्यातिरेव । कार्यस्य सद्रूपेणासद्रूपेण च निर्वक्तुमशक्यत्वात् । यथा शुक्तौ भासमानं रजतम् । तद्धि न सत् । नेदं रजतमिति बाधानुपपत्तेः । नाप्यसत् । इदं रजतमिति प्रतीत्यनुपपत्तेः । अतोऽनिर्वचनीयमुच्यते । यदा शुक्तिरिदंत्वेन ज्ञायते न तु शुक्तित्वेन तदा तादृशं मूलाविद्याकार्यभूतं शुक्त्यज्ञानमिदंतया जायमानज्ञानसहकृतं चाकचक्यादिसमुद्बोधितरजतसंस्कारसहकृतं च रजताकारेण परिणमते । तद्वदेवेदं सर्वं जगन्न सत् । ज्ञानिदृष्ट्या बाधानुपपत्तेः । "नेह नानास्ति किंचन" ( बृ० ४ । ४ । १९ ) इत्यादिश्रुतिविरोधाच्च । नाप्यसत् । प्रतीत्यनुपपत्तेः । अतोऽनिर्वचनीयमेव । तच्च विक्षेपशक्तिमत्या मूलाविद्याया महत्तत्त्वाहंकाराकाशादिद्वारा कार्यभूतम् । आवरणशक्तिमत्या मूलाविद्यायाः कार्यं च लोकप्रसिद्धं शुक्त्यज्ञानादि । तथा चानिर्वचनीयस्य जगतो या प्रतीतिः साऽनिर्वचनीयख्यातिरेव । न तु सत्ख्यातिः । यत्प्रतीयते तन्न सत् । यच्च सद्ब्रह्म न तत्प्रतीयते । तस्य प्रतीतिरूपत्वेन प्रतीतिविषयत्वाभावात् । अतः सतः ख्यातिर्दुर्वचा । इदं शास्त्रमिति प्रतीतिरप्यनिर्वचनीयख्यातिरेव । शास्त्रस्याप्यविद्याकार्यभूतानिर्वचनीयजगदन्तर्गतत्वेनानिर्वचनीयत्वात् । "वेदा अवेदाः" ( बृ० ४ । २ । २२ ) इत्येवं शास्त्रेण स्वयमेव स्वानिर्वचनीयत्वस्य प्रख्यापनात् ।

अनिर्वचनीयख्यातिः

तादृशमपि तत्तत्त्वज्ञानहेतुभूतं भवत्येव । यथा स्वप्नस्था गजाश्वादयो जीवकल्पितत्वेन स्वयमसत्या अपि सत्यां धियमुत्पादयन्ति सत्यं च शुभमशुभं वा फलं सूचयन्ति तद्वत् । किंचाज्ञाननिवारकत्वमेव शास्त्रस्य तत्त्वज्ञानहेतुत्वम् । न हि शास्त्रं गगनकुसुमवदसत्यम् । किं तु केवलं तस्य पारमार्थिकसत्यत्वं नास्तीत्येव । तथा चापारमार्थिकमपि शास्त्रमज्ञानं निवारयति । अज्ञानस्याप्यपारमार्थिकत्वात् । एतावतैव शास्त्रस्यापारमार्थिकस्यापि प्रामाण्यम् । न केवलं शास्त्रस्येयं गतिः । किं तु सर्वेषां प्रमाणानाम् । तदुक्तम्—

असत्यात्सत्योत्पत्तिः

देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन संमतः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥ इति ।

आ आत्मनिश्चयादिति च्छेदः । आत्मनिश्चयपर्यन्तमित्यर्थः ।

तानि प्रमाणानि षट् । प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिभेदात् । चक्षुरादिना घटादिविषयप्रत्यक्षं यदा जायते तदा स्वान्तस्थचिदाभाससहित-

मन्तःकरणं हृदयरूपं मूलदेशमजहदेव चक्षुरादिद्वारा बहिर्निर्गत्य घटादिविषय-देशं गत्वा तत्तद्विषयाकारेण परिणमते । सोऽयं परिणामो वृत्तिरित्युच्यते । तदा वृत्त्या तत्स्थचिदाभासेन च घटादिर्विषयो व्याप्तो भवति । तत्र वृत्त्या व्याप्तिर्वृत्तिव्याप्यत्वमित्युच्यते । वृत्तिस्थचिदाभासेन व्याप्तिः फलव्याप्यत्वमित्युच्यते ।

प्रत्यक्षप्रमाणम्

वृत्तिस्थचिदाभासः फलशब्देनोच्यते । विषयचैतन्यं च तस्यां वृत्तौ प्रतिबिम्बितं सत्तत्स्थचिदाभासेन सहाभिन्नं भवति । उपाध्योरेकदेशस्थत्व उपधेयभेदस्यासंभवात् । तदा तामसस्य घटादेस्तमोरूपमावरणं तया वृत्त्या विनाश्यते । वृत्तिस्थचिदाभासश्चावरणविनाशे सति परिस्फुरन्विषयचैतन्याभिन्नतया विषयरूपेण परिस्फुरति । इदमेव प्रत्यक्षज्ञानमित्युच्यते । अहं सुखीत्याद्यान्तरप्रत्यक्षस्थलेऽप्येवमेव । " तत्त्वमसि " ( छा० ६ । ८ । ७ ) इत्यादिमहावाक्यजन्यात्मसाक्षात्कारस्थले तु जीवब्रह्मणोरेकत्वस्याज्ञानेनावृतत्वात्तस्याज्ञानस्य निवृत्तये वाक्यजन्ययाऽहं ब्रह्मास्मीत्येवमाकारयाऽन्तःकरणवृत्त्या व्याप्तिरपेक्ष्यते । स्वस्यैव स्फुरणरूपत्वात्तदर्थं चिदाभासव्याप्तिर्नापेक्ष्यते ।

तच्च प्रत्यक्षं सविकल्पकनिर्विकल्पकभेदेन द्विविधम् । विकल्पो वैशिष्ट्यम् । घटमहं जानामीत्यादि वैशिष्ट्यावगाहि ज्ञानं सविकल्पकम् । घटरूपविशेषणविशिष्टज्ञानावगाहित्वात् । " तत्त्वमसि " ( छा० ६ । ८ । ७ ) इत्यादिमहावाक्यजन्यमहं ब्रह्मास्मीति ज्ञानं निर्विकल्पकम् । प्रत्यक्षज्ञानसामग्रीसत्त्वे शब्दादपि प्रत्यक्षं जायते । एकस्मिन्नेव ज्ञाने तत्तन्निमित्तभेदेन शाब्दत्वं

प्रत्यक्षावान्तरभेदः

प्रत्यक्षत्वं च वर्तत एव । न चास्य प्रत्यक्षस्य शाब्दत्वे शाब्दस्य च ज्ञानस्य पदार्थसंसर्गावगाहित्वेन कथं निर्विकल्पकत्वमिति वाच्यम् । नहि सर्वत्र शाब्दं ज्ञानं पदार्थसंसर्गावगाह्येवेति नियमः । किंतु वक्तृतात्पर्यविषयविषयकमेवेति नियमः । " तत्त्वमसि " ( छा० ६ । ८ । ७ ) इत्यत्र तु " सदेव सोम्य " ( छा० ६ । २ । १ ) इति पूर्वप्रक्रमानुरोधेन निर्विशेषासङ्गब्रह्मैव श्रुतितात्पर्यविषयीभूतम् । तथा चास्य निर्विकल्पकत्वं सिद्धम् ।

अनुमितिस्तु व्याप्यव्यापकयोर्द्वयोर्मध्ये व्याप्येन व्यापकस्य ज्ञानम् । यथा

अनुमानम्

धूमेनाग्नेः । यथा वास्य दृश्यमानस्य जगतो ब्रह्माभिन्नत्वेन मिथ्यात्वं ज्ञायते । तत्करणमनुमानम् ।

वने गवयं दृष्ट्वा तत्र गोसादृश्यं ज्ञात्वा यद्गवि गवयसादृश्यं ज्ञायते सोपमितिः। सादृश्यज्ञानस्यैवोपमितित्वात्। तत्करणं गोसादृश्यज्ञानं तदेवोपमानम्।

उपमानम्

नेयमुपमितिः प्रत्यक्षान्तर्गता। गोरसंनिकर्षात्। नाप्यनुमितिः। हेतुभूतस्य गोसादृश्यस्य गवयनिष्ठत्वेन साध्यस्य च गवयसादृश्यस्य गोनिष्ठत्वेन हेतुसाध्ययोः सामानाधिकरण्याभावात्। व्याप्तिस्मृत्यादेरत्रानपेक्षणाच्च।

पदसमूहो वाक्यम्। तस्माज्जायमानं ज्ञानं शाब्दम्। तत्करणं शब्दः। तत्र वेदस्येश्वरप्रणीतत्वात्प्रामाण्यम्। सृष्ट्यारम्भे परमेश्वरेण पूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीको वेदो विरच्यते। स्मृतिपुराणादीनां तु वेदमूलकत्वे प्रामाण्यम्। वेदविरुद्धार्थकानां तु न प्रामाण्यम्। अविरुद्धार्थकानां तन्मूलभूतवेदाज्ञाने तु तदर्थकं वेदमनुमाय प्रामाण्यं कल्पनीयम्। तात्पर्यानुपपत्तौ लक्षणयाऽन्यार्थप्रतिपादकत्वेऽपि प्रामाण्यमस्त्येव। यथा "तत्त्वमसि" (छा० ६।८।७) इत्यादेः।

शाब्दज्ञानम्

पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र पीनत्वोपपत्तये यद्रात्रिभोजनं कल्प्यते सार्थापत्तिः। नेयमनुमानेन गतार्था। दिवाऽभुञ्जाने पीने पुरुषे प्रथमतो दृष्टेऽन्वयव्याप्तिदृष्टान्तासंभवात्। यद्यपि यत्र यत्र रात्रिभोजनाभावस्तत्र तत्र दिवाऽभुञ्जानत्वसमानाधिकरणपीनत्वस्याभावः, यथा दिवा रात्रौ चाभोजीति व्याप्तिः संभवति तथापि न सा पीनत्वरात्रिभोजनयोर्हेतुसाध्ययोः। किंतु तदभावयोः। किं चात्र व्याप्तिस्मृत्यादेरपेक्षापि न दृश्यत इत्यर्थापत्तिः प्रमाणान्तरमेव साधीयः।

अर्थापत्तिः

एवमनुपलब्धिरपि, प्रमाणान्तरमेव। यद्यत्र भूतले घटोऽभविष्यत्तदा भूतलमिवाद्रक्ष्यदित्येवं घटाद्यनुपलब्ध्या घटाद्यभावो ज्ञायते। अत्र नेन्द्रियं करणम्। तस्याधिकरणग्रहेणोपक्षीणत्वात्। अभावेन सह तत्संनिकर्षाभावाच्च। किंचात्र ज्ञानस्य प्रत्यक्षत्वाङ्गीकारेऽपि तत्प्रमाणस्यानुपलब्धिरूपस्येन्द्रियाद्भेदेन प्रमाणसंकराभाव एवेति।

अनुपलब्धिः

तदेवं प्रमाणैर्जायमानं लौकिकं ज्ञानं साश्रयं सविषयं च। तदभिव्यञ्जकमन्तःकरणम्। अन्तःकरणवृत्तिरेव हि लौकिकं ज्ञानम्। अत एव तत्र ज्ञातृत्व-

मन्तःकरणस्य तदुपाधिकस्य जीवस्य वा। न तु शुद्धस्यात्मनः। तस्य ज्ञानस्वरूपत्वेन ज्ञातृत्वासंभवात्। अहं जानामीत्येवं भासमानं ज्ञातृत्वमपि नात्मनः। किं त्वहमर्थस्य। अहमर्थस्तु नात्मा। किंत्वविद्यापरिणामान्तर्गतोऽहंकारः। अहंकारे चात्मत्वमारोपितं भासते न तु वास्तविकम्। एवं मनसीन्द्रियेषु प्राणे देहादौ चात्मत्वमारोपितमेव भ्रमेण भासते। एतादृशभ्रमनिवृत्तिमन्तरा मोक्षो दुर्लभः। भ्रमनिवृत्तिश्च ब्रह्मज्ञानेनैव।

अन्तःकरणस्य ज्ञातृत्वम्

ब्रह्मज्ञानेऽधिकारी च साधनचतुष्टयसंपन्न एव। साधनचतुष्टयसंपत्त्यभावे ब्रह्मविचारस्यानपेक्षणात्। तदुत्तरं ब्रह्मविचारस्यावश्यापेक्षणाच्च। साधनचतुष्टयं च (१) नित्यानित्यवस्तुविवेकः (२) इहामुत्रार्थफलभोगविरागः (३) शमादिषट्कसंपत्तिः (४) मुमुक्षुत्वं चेति। तदुक्तं वराहोपनिषदि—

साधनं प्रभवेत्पुंसां वैराग्यादिचतुष्टयम्।
नित्यानित्यविवेकश्च इहामुत्र विरागता॥
शमादिषट्कसंपत्तिर्मुमुक्षा तां समभ्यसेत्॥ (व० २।३) इति।

शमदमोपरतितितिक्षाश्रद्धासमाधानानि शमादिषट्कम्। लौकिकव्यापारान्मनस उपरमः शमः। बाह्येन्द्रियनिग्रहो दमः। कर्मसंन्यास उपरतिः। शीतोष्णादिद्वंद्वसहनं तितिक्षा। आस्तिक्यबुद्धिः श्रद्धा। निद्राया आलस्यस्य प्रमादस्य च त्यागेन मनःस्थितिः समाधानम्। "तस्माच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" (बृ० ४।४।२३) "शान्तो दान्त उपरतस्तितिक्षुर्योऽनूचानो ह्यभिजज्ञौ समानः" (शाट्या० ५) इत्याद्याः श्रुतयोऽपि शमादीनामात्मसाक्षात्कारसाधनत्वं प्रतिपादयन्ति। एतान्यन्तरङ्गसाधनानि।

साधनचतुष्टयम्

कर्म तु चित्तशुद्धिद्वारा ज्ञानसाधनमिति बहिरङ्गम्। अन्तरङ्गतरसाधनं तु श्रवणमनननिदिध्यासनरूपं त्रयम्। "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ० २।४।५) इति श्रुतेः। द्रष्टव्यः, अहं ब्रह्मेत्येवं साक्षात्करणीयः। तदुपायः श्रोतव्य इत्यादिनोक्तः श्रवणादिः। श्रवणं नाम वेदान्तवाक्यानामद्वितीये ब्रह्मणि तात्पर्यनिर्णयः। श्रुतार्थस्योपप-

श्रवणादिसाधनत्रयम्

त्तिभिश्चिन्तनं मननम् । विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणं निदिध्यासनम् । तदुक्तम्—

शब्दशक्तिविषयं निरूपणं युक्तितः श्रवणमुच्यते बुधैः ।
वस्तुतत्त्वविषयं निरूपणं युक्तितो मननमित्युदीर्यते ॥
चेतसस्तु चितिमात्रशेषता ध्यानमित्यभिवदन्ति वैदिकाः ।
अन्तरङ्गमिदमित्युदीरितं तत्कुरुष्व परमात्मबुद्धये ॥ इति ।

तत्र वेदान्तवाक्यान्यद्वितीये ब्रह्मणि प्रमाणं न वेति संशयः श्रवणेन निवर्तते । मननेन त्वनेके संशया निवर्तन्ते । ते यथा—प्रपञ्चः सत्यो मिथ्या वा, आत्माऽऽनन्दस्वरूपो न वा, आत्मा देहातिरिक्तो न वा, जीवस्य परमात्मना सहैक्यं संभवति न वा, आत्मज्ञानं मोक्षसाधनं न वा, मोक्षसाधनत्वेऽपि कर्मसमुचितं तन्मोक्षसाधनमथवा केवलम्, आत्मा ज्ञानस्वरूपो वा ज्ञानगुणको वेत्यादयः । मननं हि तर्कात्मकम् । यदि प्रपञ्चः सत्यः स्यात्तर्ह्यद्वितीयश्रुतिविरोधः स्यादिति तर्केण प्रपञ्चे सत्यत्वधीर्निवर्तते । आत्मानन्दस्वरूपो न स्याच्चेत्तत्प्राप्तये न कोऽपि व्याप्रियेतेति तर्के आत्मन आनन्दरूपतायां प्रमाणम् । देह एवात्मा चेज्जन्मान्तराभावेन कृतनाशाकृताभ्यागमप्रसङ्गः । जीवब्रह्मणोर्भेदे "तत्त्वमसि" ( छा० ६ । ८ । ७ ) इत्यादिश्रुतिविरोधः । आत्मज्ञानस्य मोक्षसाधनत्वाभावे कर्मसमुचितस्य वा तस्य मोक्षसाधनत्वे "नान्यः पन्था विद्यतेऽयनाय" ( श्वे० ३ । ८ ) इति श्रुतेरप्रामाण्यापत्तिः । आत्मा ज्ञानगुणकश्चेत् "निर्गुणम्" (चू० ७ । २) इति श्रुतिर्न संगच्छेतेत्यादयस्तर्का यथायथं स्वयमूह्याः । निदिध्यासनेन त्वहमज्ञ इत्यादिभ्रमो निवर्तते ।

श्रवणाद्युपयोगः

एवं श्रवणादिभिः संशयभ्रमनिवृत्तावन्यप्रतिबन्धाभावे सत्यहं ब्रह्मास्मीत्यपरोक्षप्रमा जायते । अन्यप्रतिबन्धश्च भूतभाविवर्तमानभेदेन त्रिविधः । पूर्वानुभूतविषयस्यावेशेन पुनःपुनः स्मरणं भूतप्रतिबन्धः । अयं च यस्य विषयस्य स्मरणं तत्रत्ये नामरूपे पलालवत्परित्यज्य तदन्तःस्थं तत्त्वं धान्यवत्स्वीकृत्य निवारणीयः । अत्र परित्यागश्चाननुसंधानरूपः । स्वीकारश्चानुसंधानरूपः । प्रारब्धकर्मशेषो भाविप्रतिबन्धः । कर्मशेषश्च फलभोगोत्तरमेव निवर्तते ।

मोक्षप्रतिबन्धनिरासः

तत्र प्रबलस्य काम्यकर्मणः शेषश्चेत्स ज्ञानप्रतिबन्धको भवति । दुर्बलस्य काम्यकर्मणः शेषश्चेत्स सामान्यतः शरीरस्थितिं कुर्वन्नपि न ज्ञानप्रतिबन्धको भवति । एवं नित्यकर्मशेषः फलं जनयन्नजनयन्वा पापकर्माभिरुचिनिवृत्तिद्वारा तत्त्वज्ञानानुकूल एव न प्रतिबन्धकः । ब्रह्मलोकप्रापकसुकृतकर्मविशेषानुसारिणी ब्रह्मलोकेच्छापि कस्यचिज्जायमाना भाविप्रतिबन्ध एव । स तु ब्रह्मलोकं गत्वा ब्रह्मणा सह मुच्यते । तदनिच्छुस्तु न तावन्तं कालं प्रतीक्षते । वर्तमानप्रतिबन्धस्तु विषयासक्तिकुतर्कप्रज्ञामान्द्या दिभेदेनानेकविधः । तत्र विषयासक्तिः शमादिभिः पुनःपुनरभ्यस्तैर्निवारणीया । कुतर्काश्च श्रवणादिभिः पुनः पुनरभ्यस्तैर्निवारणीयाः । प्रज्ञामान्द्यनिवारणाय राजसतामसान्नं त्याज्यम् । तथापि तन्निवृत्तिः शनैरेव भवेज्जन्मान्तरे वा । गुरुप्रसादादिना तु तस्मिन्नपि जन्मनि भवति ।

तदेवं कस्यचित्प्रतिबन्धकस्याभावेऽहं ब्रह्मास्मीत्यप्रतिबन्धसाक्षात्कारेणाज्ञाने निवृत्ते मुमुक्षुरखण्डैकरससच्चिदानन्दब्रह्मात्मनावतिष्ठते । यथा राजकुले जातोऽपि कर्णो जन्मप्रभृति व्याधकुल एव संवर्धितस्तज्जातीयसहवासादिजनितभ्रान्तिलक्षणाविद्यया स्वात्मानं राधेयं मन्यते न तु स्वतः सिद्धं विद्यमानमपि कौन्तेयत्वमनुभवति । ततश्च कौन्तेयत्वप्रयुक्ताच्छ्रेयसः सकाशात्प्रच्युतः सर्वत्र नानाविधशापावमानादिलक्षणं बहुविधं दुःखं प्राप्तवान् ।

मोक्षः

स च कदाचिद्भगवता सूर्येण "कर्ण कौन्तेयोऽसि त्वं न राधेयः" इत्युपदेशं कुर्वता स्मारितनिजरूपस्तया स्मृत्या व्याधत्वराधेयत्वादेरविद्याकृतस्य निवृत्तौ सत्यां व्याधत्वादिकृतं दुःखं त्यक्त्वा कौन्तेयत्वप्रयुक्तं श्रेयः प्राप्तवान् । तथा ब्रह्माप्यनादिसिद्धया स्वाविद्ययाऽऽवृतनिजरूपं सज्जीवभावं प्राप्य स्वतः सिद्धान्नित्यनिरतिशयानन्दस्वरूपानुभवात्प्रच्युतं सत्संसरति । तच्च संसरद्ब्रह्म कदाचित्स्वाविद्याकल्पितेन गुरुणा शास्त्रेण चोत्पादितया स्वगोचरविद्यया जीवभावादिप्रयोजकाविद्यानिवृत्तौ नित्यसिद्धनिरतिशयानन्दस्वरूपेणावतिष्ठते ।

इयं च मुक्तिर्जीवतोऽपि भवति । बाधकाभावात् । इयमेव जीवन्मुक्तिः ।

जीवन्मुक्तिः

तदुक्तं वराहोपनिषदि—

यस्मिन्काले स्वमात्मानं योगी जानाति केवलम् ।
तस्मात्कालात्समारभ्य जीवन्मुक्तो भवेदसौ ॥ ( वरा० २।४२ ) इति ।

तथा—

नोदेति नास्तमायाति सुखे दुःखे मनःप्रभा ।
यथाप्राप्तस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥ ( वरा. ३ । २२ )

इत्यादिश्रुतौ विस्तरेण जीवन्मुक्तावस्था वर्णिता । आत्मोपनिषदि च—

शिव एव स्वयं साक्षादयं ब्रह्मविदुत्तमः ।
जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः ॥ ( आत्मो० २० ) इति ।

जीवन्मुक्तावस्थाप्रयोजनानि तु ज्ञानरक्षा तपो विसंवादाभावो दुःखनिवृत्तिः सुखाविर्भावश्चेति पञ्च । उत्पन्नब्रह्मसाक्षात्कारस्य पुरुषस्य पुनः संशयविपर्ययानुत्पत्तिर्ज्ञानरक्षा । सा च " संशयात्मा विनश्यति " ( गी० ४ । ४० ) इत्युक्त्या संशयसत्त्वे तन्मूलकप्राप्तप्रच्युतेर्वारणायावश्यकी जीवन्मुक्त्यवस्थायां सुलभा । तथा तस्यामवस्थायामखिलवृत्तीनामनुदयाच्चित्तैकाग्र्यं भवति । तदेव तपः ।

मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः ।

इत्युक्तेः । तेन च लोकसंग्रहो जायते ।

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । ( गी० ३ । २१ )

जीवन्मुक्तिप्रयोजनानि

इत्युक्तेः । तथा जीवन्मुक्तस्य व्युत्थानदशायां केनचिन्निन्दायां कृतायामपि तादृशचित्तवृत्त्यनुदयाद्विसंवादो न भवति । तदुक्तम्—

ज्ञात्वा वयं तत्त्वनिष्ठां ननु मोदामहे वयम् ।
अनुशोचाम एवान्यान्न भ्रान्तैर्विवदामहे ॥ इति ।

तथा जीवन्मुक्तस्य भ्रान्तेर्निवृत्ततया चित्तस्यात्मैकाकारतया च प्रारब्धभोगे सत्यपि समस्तदुःखनिवृत्तिः । तथा च श्रुतिः—

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ ( शाट्या० २२ ) इति ।

तथा जीवन्मुक्त्यवस्थायां ज्ञानयोगाभ्यासेनाविद्याकृतावरणस्य सर्वथा निवृत्त्या परिपूर्णब्रह्मानन्दानुभवसुखाविर्भावो भवति । तथा च श्रुतिः—

समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ॥ इति ।

ततः प्रारब्धकर्मसमाप्त्या देहावसाने तदुत्तरं विदेहमुक्तिः । तदप्युक्तं श्रुतौ—

प्रारब्धक्षयपर्यन्तं जीवन्मुक्ता भवन्ति ते ।
ततः कालवशादेव प्रारब्धे तु क्षयं गते ॥
वैदेहीं मामकीं मुक्तिं यान्ति नास्त्यत्र संशयः ॥ ( मुक्ति० ४३ )
जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ ( मुक्ति० ७६ ) इति ।

आत्मोपनिषद्यपि—

घटे नष्टे यथा व्योम व्योमैव भवति स्वयम् ।
तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्स्वयम् ॥ ( आत्मो० १।२२ ) इति ।

विदेहमुक्तिः

मुक्तावविद्यामूलकस्याभासस्य सर्वथाऽभावान्न तत्र लेशतोऽप्यहंभावः । अहंभावस्याविद्यापरिणामविशेषत्वात् । एवमविद्यामूलको जीवब्रह्मभेदोऽपि तत्र सुतरां न भासते । तदुक्तम्—

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥
( वि० पु० ६।७।९४ ) इति ।

मुक्तेः स्वरूपावस्थानमात्रत्वेन तत्र पूर्वोक्तभेदत्रयस्याभावेन सुखदुःखहेतोर्द्वितीयस्याभावात्तदानीं न सुखं न वा दुःखम् । भोक्तृत्वोपाधेरन्तःकरणस्य विनाशेन भोगासंभवाच्च । तस्मात् "ब्रह्मविद्ब्रह्मैव भवति" ( मु० ३।२।९ ) इतिश्रुतिप्रतिपादितो ब्रह्मभावलक्षणो मोक्षो भवतीति सिद्धम् ॥

श्रीशंकराचार्यकालः

श्रीमच्छंकराचार्याश्च शालिवाहनशके खेन्दुहयमिते ( शके ७१०, इसवी सन ७८८ ) संवत्सरे प्रादुरभूवन् । तैश्चाद्वैतात्मवादे सर्वत्र प्रकाशिते दर्शनान्तराणि प्रायो विरलप्रचाराणि बभूवुः । महाप्रभावभाजां श्रीमदाचार्यपादानां पुरतश्च न कोऽपि दर्शनान्तराभिमानी विवदितुमुत्सहते स्म । अल्पेनैव कालेन प्रायः सर्वत्र शिष्यगणेन सह संचारं कृत्वा चतसृषु दिक्षु मठान्संस्थाप्य तत्र तत्राद्वैतात्मवादप्रख्यापनकुशलान् शिष्यान्संयोज्य स्वीयावतारकृत्ये परिपूर्णतामाकलय्य शालिवाहनशके पक्षवेदर्षिपरिमिते ( शके ७४२, इसवी सन ८२० ) संवत्सरे स्वस्वरूपं प्रापुराचार्यचरणाः । अन्ये तु 'शम्यग्निरसयुग्म ( २६३१ ) परिमिते युधिष्ठिरशके वैशाखशुक्लपञ्चम्यां श्रीमच्छंकराचार्याणां जन्माभूत् । तथाऽग्निरसरसयुग्म ( २६६३ ) परिमिते युधिष्ठिरशके कार्तिकशुक्लपौर्णमास्यामाचार्या ज्योतीरूपतां ययुः ' इति कथयन्ति ।

ततो मोहान्धतमसे निमग्नोऽपि तच्छात्रगणो गुरुचरणप्रसादलब्धज्ञानज्योतिःसाहाय्येन द्युमणावस्तंगते दीप इव कर्मवशप्राणिनिकायस्वान्तप्रविष्टाज्ञानतिमिरवृन्दं विनाशयितुमशकत् । अद्वैतात्मवादश्च प्रायः सर्वत्रास्खलितप्रचारः समजनि। अयमद्वैतात्मवाद एव मायावाद इति लोके गीयते ।

श्रीरामानुजाचार्यकालः

ततः सप्ताधिकसंवत्सरशतत्रयानन्तरं शके ग्रहवेदाकाशेन्दुपरिमिते ( शके १०४९ इसवी सन ११२७ ) रामानुजाचार्याः प्रादुरभूवन् । मायावादमसहमानानामेषां मायावादनिरसनाय प्रवृत्तिरिति तत्र तत्र तत्प्रणीतेषु श्रीभाष्यादिप्रबन्धेषु मायावादिमतमुल्लिख्य तत्रापरितोषमुद्भावयद्भिस्तैरेव प्रकटीकृतम् । किं त्वयं तेषां यत्नः कियतांशेन सफली बभूवेति विभावनीयं सूरिभिः । रामानुजाचार्याश्च त्रिचनापल्लीसंज्ञकप्रदेशे भूतपुरीग्रामे हारीतान्वयसंभवात्केशवभट्टेति सुगृहीतनाम्नो द्राविडब्राह्मणात्सकाशात्कान्तिमत्यां समभूवन् । एते शेषावतारभूता इति तत्संप्रदायः । बौधायनकृतवृत्त्यादिप्रयत्नेन कुर्वद्रूपतां प्रापितो द्रमिडाचार्यप्रणीतभाष्येण टङ्काचार्यविरचितवार्तिकेन चाङ्कुरितो विशिष्टाद्वैतदर्शनमहीरुहो यामुनाचार्यादिनिर्मितसिद्धित्रयादिग्रन्थैः पुष्पितो रामानुजाचार्यप्रणीतवेदार्थसंग्रहादिना फलितोऽभवत् । रामानुजाचार्यैश्च वेदार्थसंग्रहे विशिष्टाद्वैतानुसारेण श्रुत्यर्थोऽवधारितः । तथापि ब्रह्मसूत्रकाराणामसंमतोऽयं विशिष्टाद्वैतवाद इति लोकानां मतिः स्यात्तन्निराकरणाय ब्रह्मसूत्रव्याख्यारूपः श्रीभाष्यप्रबन्धस्तैरेव निरमायि । तत्र च विशिष्टाद्वैतदर्शनानुसारेण ब्रह्मसूत्राणि व्याख्यातानि । वेदान्तसार-वेदान्तदीप-गीताभाष्य-नित्याराधनविधि-श्रीगद्यप्रभृतयोऽन्येऽपि ग्रन्था रामानुजाचार्यैर्विरचिता इति प्रसिद्धिः।

---

श्रीमद्रामानुजाचार्या विशिष्टाद्वैतवादिनः ।
चक्रुर्मायामनाश्रित्य प्रस्थानत्रययोजनम् ॥ ३ ॥

अथ सुखबोधाय रामानुजदर्शनं प्रदर्श्यते ।

नित्यं हेयगुणावधूननपरा नैर्गुण्यवादाः श्रुतौ
स्पष्टार्थाः सगुणोक्तयः शुभगुणप्रख्यापनाद्ब्रह्मणः ।
अद्वैतश्रुतयो विशिष्टविषया निष्कृष्टरूपाश्रया
भेदोक्तिस्तदिहाखिलश्रुतिहितं रामानुजीयं मतम् ॥ ४ ॥

प्रमाणसिद्धं वस्तु तत्त्वशब्देनोच्यते । तच्च तत्त्वं त्रिविधम् । जडजीवेश्वरभेदात् । जडं प्रसिद्धं पाञ्चभौतिकं शरीरादिकमखिलं जगत् । तदेव भोगसाधनम् । तदपेक्षया स्वरूपतः स्वभावतश्चात्यन्तविलक्षणस्तदन्तर्यामी जीवात्मा । स च बद्धो मुक्तो नित्यश्चेति त्रिविधः । जीवस्याप्यन्तर्यामीश्वरः । अयं च निखिलहेयगुणराहित्येन कल्याणैकतानत्वेन च जीवापेक्षयाऽत्यन्तविलक्षणः । ईश्वरश्च सर्वावस्थाञ्जीवाञ्जडांश्च पदार्थान्व्याप्नोति । जडानां जीवानां चान्तर्यामी भूत्वा तेषां नियन्ता च भवति । तथा च श्रुतयः—'यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरः० यः पृथिवीमन्तरो यमयति' ( बृ० ३ । ७ । ३ ) 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः० य आत्मानमन्तरो यमयति' ( बृ० ३ । ७ । २२ ) 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' ( ना० १३ । १ ) 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' (श्वे० ६ । १६ ) इति । न चायं जीवेश्वरयोर्भेद औपाधिक इति मन्तव्यम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति (मु० ३।१।३) इत्यादिश्रुतिषु, मुक्तोपसृप्यव्यपदेशाच्च ( ब्र० सू० १ । ३ । २ ) भोगमात्रसाम्यलिङ्गाच्च ( ब्र० सू० ४ । ४ । २१ ) इत्यादिसूत्रेषु,

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ( गी० १४ । २ )

इति गीतायां च सर्वाविद्योपाधिविनिर्मुक्तस्य जीवस्य मोक्षावस्थायामपीश्वरापेक्षया भेदप्रतिपादनात् । न हि स्वस्य स्वेनैव साम्यं भवति । न वा स्वयमेव स्वस्योपसृप्यो भवति । मुक्तैरुपसृप्यो मुक्तोपसृप्यः । मुक्तप्राप्य इति यावत् ।

त्रिविधं तत्त्वम्

प्रकारान्तरेण पुनस्तत्त्वं द्विविधम् । द्रव्यं गुणश्चेति । उपादानत्वं गुणाश्रयत्वं स्वाश्रयादन्यत्र वर्तमानत्वं संकोचविकासावस्थाश्रयत्वं वा द्रव्यत्वम् । तत्र द्रव्यं षड्विधम्—ईश्वरो जीवो नित्यविभूतिर्ज्ञानं प्रकृतिः कालश्चेति । ईश्वरः परमात्मा ब्रह्मशब्दवाच्यः सर्वाधारः सर्वकर्ता । जीवो नित्यविभूतिः प्रकृतिः कालश्चेति द्रव्यचतुष्टयमीश्वरस्य शरीरभूतम् । ईश्वरस्य स्वरूपं ज्ञानं शरीरं चेति त्रयमपि व्यापकमेव । स चेश्वरः पञ्चविधः—परव्यूहविभवान्तर्याम्यर्चावतारभेदात् । तत्र परो वैकुण्ठे श्रिया सहितोऽनन्तगरुडादिभिर्नित्यजीवैः सह क्रीडन्नास्ते । अयमेव मुक्तप्राप्यः । पर एवोपासनार्थं वासुदेवसंकर्षणप्रद्युम्नानिरुद्धभेदेन चतुर्धाऽवस्थितो व्यूह इत्युच्यते । जगत्स-

द्रव्यनिरूपणम्

ईश्वरभेदाः

जेनमुपासकानुग्रहः संसारिरक्षणं चास्यैव कृत्यम् । तत्र वासुदेवः षड्गुणपूर्णः । ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि षड्गुणाः । ज्ञानं नाम सर्वदा सर्वविषयप्रकाशकः स्वप्रकाशो गुणविशेषः । शक्तिर्जगत्प्रकृतिभावः, अघटितघटनासामर्थ्यं वा । बलं जगत्कारणत्वप्रयुक्तश्रमाभावः, सकलवस्तुधारणसामर्थ्यं वा । ऐश्वर्यं स्वातन्त्र्येण कर्तृत्वं, सकलजीवजडनियमनसामर्थ्यं वा । वीर्यं जगदुपादानकारणत्वेऽपि स्वरूपविकाराभावः । तेजः सहकारिनैरपेक्ष्यं पराभिभवनसामर्थ्यं वा । संकर्षणप्रद्युम्नानिरुद्धेषु संकर्षणे ज्ञानबलयोराधिक्यम् । प्रद्युम्ने ऐश्वर्यवीर्ययोराधिक्यम् । अनिरुद्धे तु शक्तितेजसोः । विभवस्तु मत्स्यकूर्मादिः । अन्तर्यामी तु तत्तत्प्राणिनां हृदयप्रदेशेऽवस्थितो योगिभिः स्वहृदये ध्येयः । अयं च जीवेन सह विद्यमानोऽपि जीवगतदोषैर्न लिप्यते । अर्चावतारस्तु भक्तकल्पितप्रतिमादिपदार्थं शरीरतया स्वीकृत्योपासकाधीनस्नानादिमान्सर्वसहिष्णुर्देवालयादिषु विद्यमानो मूर्तिविशेषः । व्यूहादिषु चतुर्षु पर एव क्वचिच्छक्त्यावेशेन क्वचित्स्वरूपावेशेन चावतिष्ठते । आवेशश्चायं क्वचित्पूर्णत्वेन क्वचिदंशेन च भवति ।

परमात्मगुणाः

परमात्मनः स्वरूपनिरूपका धर्माश्च सत्यत्वज्ञानत्वानन्दत्वामलत्वादयः । एते सर्वासु विद्यास्वनुवर्तन्ते । सर्वविद्यास्वेते धर्मा उपास्या इति यावत् । उक्तैर्धर्मैः स्वरूपे निरूपिते तद्विशेषका ज्ञानबलादयो धर्माः । सौशील्यादयो धर्मास्तु ज्ञानादिधर्मविततिरूपाः । सर्वज्ञत्वसर्वशक्तित्वादयो धर्मा जगदुत्पादन उपयुज्यन्ते । वात्सल्यसौशील्यसौलभ्यादय आश्रयण उपयुज्यन्ते । वात्सल्यादीन्दृष्ट्वोपासकाः परमात्मानमाश्रयन्ति । कारुण्यादयो धर्मा भक्तरक्षण उपयुज्यन्ते ।

जीवभेदाः

जीवः प्रतिशरीरं भिन्नोऽणुपरिमाणः स्वयंप्रकाशो नित्यश्च । अस्य कर्तृत्वमीश्वराधीनम् । स च त्रिविधः बद्धमुक्तनित्यभेदात् । ब्रह्मदेवप्रभृतयः स्तम्बपर्यन्ताः संसारिणो जीवा बद्धाः । परमात्मोपासनया त्यक्तसूक्ष्मशरीरा वैकुण्ठनिवासिनो मुक्ताः । तेषां ब्रह्मानुभवोऽनन्त एव । न तस्य चरमावधिः । बद्धदशायां तिरोभूतं गुणाष्टकं मुक्तदशायामाविर्भवति । गुणाष्टकं त्वप्राकृतशब्दस्पर्शरूपरसगन्धशक्तिज्ञानानन्दरूपम् । अनन्तगरुडविष्वक्सेनादयो जीवा नित्याः ।

नित्यविभूतिः

नित्यविभूतिर्नाम शुद्धसत्त्वात्मकः स्वयंप्रकाशो देशविशेषः । इदं च शुद्धसत्त्वं द्रव्यात्मकं गुणसत्त्वाद्विलक्षणं गुणसत्त्वस्याश्रयभूतं च । देशविशेषश्चायमधः परिच्छिन्नः । ऊर्ध्वं त्वस्य परिच्छेदो न विद्यते । परमात्मनो मुक्तानां नित्यजीवानां च भोगस्थानमेतत् ।

ज्ञानम्

ज्ञानं बुद्धिः । अर्थप्रकाश इति यावत् । तच्च सदा सविषयं स्वप्रकाशं विभु च । इदं च द्रव्यं सदेव गुणात्मकमपि भवति । नियमेन जीवेश्वरान्यतरवृत्तित्वात् । यथा दीपस्य प्रभा द्रव्यरूपापि दीपगुणभूता भवति तद्वत् । जीवेश्वरस्वरूपभूतं ज्ञानं त्वेतस्मादन्यत् । तच्च केवलं द्रव्यमेव । न तु गुणः । जीवेश्वरयोः केवलद्रव्यत्वात् । तत्र यथा

स्वस्यैव भासको दीपः स्वस्य चान्यस्य च प्रभा ।

तद्वज्जीवेश्वरस्वरूपभूतं ज्ञानं स्वस्यैव प्रकाशकम् । गुणभूतं ज्ञानं तु स्वस्य चान्यस्य च प्रकाशकं भवति । तच्च गुणभूतं ज्ञानमीश्वरस्य नित्यानां च जीवानां सदाविर्भूतमेव न तु कदापि तिरोहितं भवति । बद्धानां जीवानां त्वंशेनाविर्भूतं भवति । मोक्षप्राप्त्यनन्तरं तु कार्त्स्न्येनाविर्भूतं भवति तारुण्यावस्थायां पुंस्त्ववत् । तच्च ज्ञानं नित्यमेव । ज्ञानमुत्पन्नं ज्ञानं नष्टमित्यादिव्यवहारस्तु ज्ञानस्य संकोचविकासावस्थामादायोपपादनीयः । घटादिविषयप्रत्यक्षकाले जीवात्मनिष्ठमेतज्ज्ञानमिन्द्रियद्वारा बहिर्निःसृत्य घटादिविषयेण संनिकृष्यते । आत्मगुणभूतस्याप्यस्य ज्ञानस्य द्रव्यरूपत्वाङ्गीकारेण स्वाश्रयादन्यत्र गमनं बहिर्निःसरणादिक्रियावत्त्वं च न विरुध्यते । तदुक्तं यामुनाचार्यैः—

आश्रयादन्यतो वृत्तेराश्रयेण समन्वयात् ।
द्रव्यत्वं च गुणत्वं च ज्ञानस्यैवोपपद्यते ॥ इति ।

प्रकृतिः

प्रकृतिस्तु सत्त्वरजस्तमोरूपगुणत्रयवती नित्या चतुर्विंशतितत्त्वात्मिका । इयमेव विचित्रसृष्टिकरत्वान्मायाशब्देन व्यपदिश्यते । तथा ज्ञानविरोधित्वादविद्याशब्देन नित्यत्वाच्चाक्षरशब्देन व्यपदिश्यते । इयमेव सर्वजगतो मूलप्रकृतिः । चतुर्विंशतितत्त्वानि तु प्रकृतिमहदहंकारमनःपञ्चज्ञानेन्द्रियपञ्चकर्मेन्द्रियपञ्चतन्मात्रपञ्चभूतानि । त्रिगुणात्मिकायां प्रकृतौ भगवत्संकल्पाधीनगुणवैषम्यात्कार्योन्मुखावस्थाऽव्यक्तशब्देनोच्यते । तस्मादव्यक्तान्महतत्त्वमुत्प-

द्यते। बुद्धिसामान्यस्य महत्तत्त्वमिति पारिभाषिकी संज्ञा। तच्च सात्त्विकं राजसं तामसं चेति त्रिविधम्। महत्तत्त्वादहंकार उत्पद्यते। अयमेव देहात्माभिमानादिजनकः। अयमपि सात्त्विकराजसतामसभेदेन त्रिविधः। राजसाहंकारसहकृतात्सात्त्विकाहंकाराज्ज्ञानेन्द्रियषट्कं कर्मेन्द्रियपञ्चकं चेत्येकादशेन्द्रियाणि जायन्ते। मनःश्रोत्रचक्षुर्घ्राणरसनात्वग्भेदेन ज्ञानेन्द्रियं षड्विधम्। एषु षट्स्वन्तरिन्द्रियं मनः। श्रोत्रादीनि पञ्च बाह्येन्द्रियाणि। तत्र मनः संकल्पस्मृत्यादौ कारणं भवति। बाह्येन्द्रियाणां विषयप्रवृत्तौ सहकारि च भवति। एतदेव मनः शब्दादिविषयासक्त्यवस्थायां बन्धकारणम्। यदा तु बाह्यविषयाञ्छब्दादीन्विमुच्यात्मरूपविषयासक्तं भवति तदा तदेवापवर्गकारणं भवति। श्रोत्रचक्षुर्घ्राणरसनात्वगाख्यानि पञ्चेन्द्रियाणि क्रमेण शब्दरूपगन्धरसस्पर्शग्राहकाणि। त्वगिन्द्रियं चक्षुरिन्द्रियं च द्रव्यग्राहकमपि यथायोग्यं भवति। आकाशादीनि पञ्चमहाभूतानि क्रमेण श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानां पञ्चानामिन्द्रियाणां पोषकाणि भवन्ति। इन्द्रियाणि चाभरणे रत्नानीव शरीरमाश्रित्य तिष्ठन्ति। वाक्पाणिपादपायूपस्थात्मकानि कर्मेन्द्रियाणि पञ्च। एतानि वचनादानविहरणोत्सर्गानन्दात्मकानि कार्याणि क्रमेण जनयन्ति। आकाशवायुतेजोजलपृथिव्याख्यानि पञ्चमहाभूतानि। एतान्येव भूतानि सूक्ष्माणि प्रागवस्थास्थितानि तन्मात्रशब्देनोच्यन्ते शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रं चेति। दध्यवस्थातः प्राक्कललरूपेण क्षीरपरिणामवत्।

भूतोत्पत्तिक्रमः

भूतानां तन्मात्राणां चोत्पत्तावनेकं दर्शनम्। तत्र तामसाहंकारात्पञ्चापि तन्मात्राण्युत्पद्यन्ते, तेभ्यश्च क्रमेण पञ्चभूतान्युत्पद्यन्ते इत्येकम्। तामसाहंकाराच्छब्दतन्मात्रमुत्पद्यते। शब्दतन्मात्रादाकाशः। आकाशात्स्पर्शतन्मात्रम्। स्पर्शतन्मात्राद्वायुः। वायो रूपतन्मात्रम्। रूपतन्मात्रात्तेजः। तेजसो रसतन्मात्रम्। रसतन्मात्राज्जलम्। जलाद्गन्धतन्मात्रम्। गन्धतन्मात्रात्पृथिवीति द्वितीयम्। तामसाहंकाराच्छब्दतन्मात्रमुत्पद्यते। शब्दतन्मात्रादाकाशः स्पर्शतन्मात्रं चेति द्वयमुत्पद्यते। तथा स्पर्शतन्मात्राद्वायू रूपतन्मात्रं चोत्पद्यते। रूपतन्मात्रात्तेजो रसतन्मात्रं चोत्पद्यते। रसतन्मात्राज्जलं गन्धतन्मात्रं चोत्पद्यते। गन्धतन्मात्रात्पृथिव्युत्पद्यत इति तृतीयम्। आकाशादिषु पञ्चसु भूतेषु शब्दादीनां पञ्चानां गुणानामुत्तरोत्तरमेकैकाधिक्यमस्ति। तथा चाकाशे शब्दो वायौ शब्दस्पर्शौ तेजसि शब्दस्पर्शरूपाणि जले शब्दस्पर्शरूपरसाः पृथिव्यां शब्दस्पर्शरूप-

रसगन्धा इति । इह गुणभूतानां शब्दादीनां पञ्चानां शब्दतन्मात्रस्पर्शतन्मात्रादि-पञ्चतन्मात्रस्वरूपभूतेभ्यः शब्दादिभ्यो भेद एव न तु नामैक्यादभेद इति भ्रमितव्यम् । महदादिकार्याणामुत्पत्तिर्नाम कारणस्यावस्थान्तरापत्तिरेव । न तु नैयायिकानामिवापूर्वकार्यारम्भः । पञ्चमहाभूतानां पञ्चीकरणप्रक्रिया पूर्ववदेव (पृ० १४) बोध्या ।

**कालः**

कालस्तु जडो विभुर्द्रव्यविशेषः । स च द्विविधः खण्डोऽखण्डश्च । खण्डो निमेषकाष्ठाकलामुहूर्तादिरनित्यः । अयमेव युगपत्क्षिप्रादिव्यवहारहेतुरतीतादिव्यवहारहेतुश्च । अखण्डकालस्तु नित्यः । ईश्वरश्च वैकुण्ठलोकातिरिक्तस्थले कालाधीन एव सृष्ट्यादिकं करोति । वसन्त एव पुष्पोद्गम इत्येवं कालविशेषनियमेनैव तत्तद्विकारजातोत्पत्तेः । ईश्वरः स्वसंकल्पितकालनियमानुरोधेनैवाखिलकार्याण्युत्पादयति । एतदेवात्र कालस्य स्वातन्त्र्यम् । वैकुण्ठे तु विभुत्वाद्विद्यमानस्यापि कालस्येश्वराधीनत्वमेव न कथमपि स्वातन्त्र्यम् । न कालस्तत्र वै प्रभुरिति वचनात् । अत एव तत्रेश्वरः सर्वदा सर्वं यदृच्छयोत्पादयति ।

**द्रव्याणां मिथः साधर्म्यम्**

ईश्वरो जीवो नित्यविभूतिर्ज्ञानं प्रकृतिः कालश्चेत्येतेपूक्तेषु षट्सु द्रव्येष्वीश्वरादिचतुष्टयमजडम् । प्रकृतिः कालश्चेति द्वयं जडम् । ईश्वरो जीवश्चेति द्वयं प्रत्यगित्युच्यते । नित्यविभूतिर्ज्ञानं चेति द्वयं परागित्युच्यते । स्वस्मै भासमानत्वं प्रत्यक्त्वम् । परस्मा एव भासमानत्वं पराक्त्वम् ।

**गुणाः**

गुणास्तु दशविधाः सत्त्वरजस्तमःशब्दस्पर्शरूपरसगन्धसंयोगशक्तिभेदात् । सत्त्वरजस्तमोरूपं गुणत्रयमतीन्द्रियं तत्तत्कार्येणानुमेयम् । सत्त्वगुणः स्वाश्रये प्रकाशसुखलाघवादि जनयति । तच्च सत्त्वं द्विविधं शुद्धं मिश्रं चेति । रजसा तमसा चास्पृष्टं शुद्धम् । तच्च वैकुण्ठलोकवर्ति वैकुण्ठलोकसंबन्धात्परमेश्वरे चेति द्रव्यद्वयनिष्ठम् । रजसा तमसा च स्पृष्टं मिश्रम् । तत्त्रिगुणात्मकप्रकृतिनिष्ठं प्रकृतिसंबन्धाज्जीवे चेत्येतदपि द्रव्यद्वयनिष्ठम् । प्रकृतिस्वरूपभूतेभ्यः सत्त्वादिभ्य उक्तं सत्त्वादिगुणत्रयं भिन्नमेव । रजोगुणस्तु स्वाश्रये रागलोभप्रवृत्त्यादिकं जनयति । तमोगुणस्तु स्वाश्रये मोहप्रमादाप्रवृत्त्यादिकं जनयति । रजस्तमोरूपं गुणद्वयं तु प्रकृतौ तत्संबन्धाज्जीवे च वर्तते । सत्त्वगुणः सम्यग्ज्ञा-

नरूपेण सुखादिहेतुर्मोक्षप्रदश्च । रजोगुणो रागादिरूपेण कर्मसङ्गदुःखादिहेतुः स्वर्गादिप्रदश्च । तमोगुणस्त्वज्ञानरूपेणालस्यादिहेतुर्नरकप्रदश्च भवति ।

श्रोत्रेन्द्रियग्राह्यः शब्दः । स च पञ्चभूतवर्ती । त्वगिन्द्रियमात्रग्राह्यः स्पर्शः । स च पृथिव्यप्तेजोवायुवृत्तिः । चक्षुरिन्द्रियमात्रग्राह्यं रूपम् । तच्च पृथिव्यप्तेजोवृत्ति । रसनेन्द्रियग्राह्यो रसः । स च पृथिवीजलवृत्तिः । घ्राणेन्द्रियग्राह्यो गन्धः । स च पृथिव्यामेव । सत्त्वरजस्तमांसि शब्दस्पर्शरूपरसगन्धाश्चेत्येतदष्टकं प्रत्येकं द्विविधम्—पञ्चमहाभूतोपादानभूतं तदनुपादानभूतं च । आद्यं द्रव्यशब्दवाच्यं द्रव्येष्वेवान्तर्भवति । तत्र सत्त्वरजस्तमांसि प्रकृत्यवयवा एव । शब्दादिपञ्चकं तु प्रकृतिविकारभूतं चतुर्विंशतितत्त्वान्तर्गतं तन्मात्रशब्दवाच्यम् । अन्त्यं तु पञ्चमहाभूतनिष्ठं गुणशब्दवाच्यमत्रोक्तम् ।

संयुक्तप्रत्ययहेतुः संयोगः । अयं षड्द्रव्यवृत्तिः सामान्यगुणोऽव्याप्यवृत्तिरनित्यश्च । विभूनामपि संयोगोऽस्त्येव । बाधकाभावात् ।

सर्वकारणानां कारणत्वनिर्वाहिका शक्तिः । शक्तिरपि षड्द्रव्यवृत्तिः सामान्यगुणः । इयं चानित्या कार्यानुमेया च ।

ननु कथं दशैव गुणा इति । तदतिरिक्तस्य ज्ञानाख्यस्य गुणस्य जीवेश्वररूपद्रव्यनिष्ठस्य सत्त्वादिति चेन्न । एतज्ज्ञानं हि द्रव्यगणनायामुक्तमेव । तस्य संकोचविकासरूपावस्थाश्रयत्वेन द्रव्यत्वस्य स्पष्टमेव प्रतिपन्नत्वात् । तस्य च द्रव्यस्यापि सतो जीवेश्वरनिष्ठत्वेन नित्यं परावलम्बित्वस्वभावत्वाद्गुणत्वबुद्धिर्भवति । एवं तेजोद्रव्यान्तर्गतायाः प्रभाया द्रव्यभूताया अपि नित्यं स्वातिरिक्ततेजोन्तरावलम्बित्वस्वभावत्वाद्गुणत्वबुद्धिर्बोध्या ।

ज्ञानस्य द्रव्यत्वमपि

जीवो नित्यविभूतिः प्रकृतिः कालश्चेति चतुष्टयमीश्वरस्य शरीरम् । यस्यात्मा शरीरम् ( बृ० ३ । ७ । २२ ) यस्य पृथिवी शरीरम् ( बृ० ३ । ७ । ३ ) इत्यादिश्रुतेः । यस्य च यच्छरीरं स तस्य शरीरस्यात्मा भवति । आत्मशरीरशब्दौ हि स्वामिभृत्यशब्दवत्ससंबन्धिकार्थकौ आत्मनः शरीरं शरीरस्यात्मेति । अतति व्याप्नोतीत्यात्मा । यच्च येन व्याप्यते, तत्तस्य शरीरम् । ईश्वरेण हि सजीवं सर्वं जगदन्तर्यामिरूपेण व्याप्यते । न तु तमन्यः कश्चनान्तर्यामी भूत्वा व्याप्नोति । अत ईश्वरः परमात्मशब्देनोच्यते । जीवात्मानि नैतादृशं परमत्वम् । ईश्वरस्य जीवान्तर्यामित्वात् । ईश्वरः केवलमात्मैव न तु

शरीरशरीरिभावः

कस्यापि शरीरभूतः। जीवस्त्वीश्वरस्य शरीरं भवति जडस्य चात्मा भवति। जडं तु शरीरमेव न तु कस्याप्यात्मभूतम्।

शरीरशरीरिणोश्च तादात्म्येन व्यवहारो यद्यपि लोके दृश्यते यथा मनुष्योऽहं गौरोऽहं स्थूलोऽहमित्यादौ तथापि स व्यवहारो गौण एव। शरीरप्रतिसंबन्धिन आत्मनो वस्तुतः शरीरापेक्षया भिन्नत्वात्। परमात्मशरीरं च चेतनत्वेन सजातीयं जीवरूपमचेतनत्वेन विजातीयं च जडरूपम्। तथा च परमात्मनि सजातीयाद्विजातीयाच्च भेदः सिध्यति। तथा च श्रुतिः क्षरात्मानावीशते देव एकः (श्वे० १।१०) इति। अत्र क्षरात्मपदवाच्ययोर्जडजीवयोर्नियम्यत्वेन देवपदवाच्यस्य परमात्मनश्च तन्नियन्तृत्वेन प्रतिपादनात्ताभ्यां परमात्मनो भेदः स्पष्ट एव। सूत्रकारैरप्यधिकं तु भेदनिर्देशात् (ब्र० सू० २।१।२२) इत्यादौ जीवेश्वरयोर्भेद उक्तः। तथा ज्ञानशक्तिबलैश्वर्यवीर्यतेजोरूपं गुणषट्कं न परमात्मस्वरूपान्तर्गतं किं तु परमात्मनिष्ठमिति तस्मादपि परमात्मा भिन्न एवेति परमात्मनि स्वगताद्भेदः सिध्यति। तथा च परमात्मनि सजातीयभेदविजातीयभेदस्वगतभेदरूपं भेदत्रयं सिद्धम्।

शरीरशरीरिणोर्भेदः

नन्वेवं सोऽकामयत बहु स्यां प्रजायेय (तै० २।६।१) इति श्रुतिर्विरुध्यते। तत्र ह्यहं बहु स्यामिति परमात्मसंकल्पो दृश्यते न तु स्वेतरद्यत्किंचिन्निर्दिश्य तद्बहु स्यादिति। तथा च कार्यकारणानन्यत्वन्यायेन परमात्मनः सकाशाज्जगतो भिन्नत्वाभावः सिध्यति। उक्तभेदाङ्गीकारे त्वेतच्छ्रुतिविरोधः स्पष्ट इति चेत्सत्यम्। बहु स्यामिति बहुभवनसंकल्पो हि न साक्षात् किंतु शरीरद्वारा। तथा च स संकल्पो नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरकतयैकरूपेणावस्थितस्य विभक्तनामरूपचिदचिद्वस्तुशरीरकतया बहुप्रकारताविषय इत्येवं श्रुतितात्पर्याङ्गीकारान्न विरोधः।

परमात्मनो बहुभवनं शरीरद्वारकम्

ननु यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति (तै० २।७।१) इति श्रुतौ भेदो निषिध्यते। य एतस्मिन्ब्रह्मणि स्वल्पमपि भेदं मन्यते तस्य भयं भवतीति तदर्थादिति चेन्न। श्रुत्यर्थाज्ञानात्। तत्र ह्यन्तरशब्दोऽवकाशवाची। ब्रह्मोपासनाया अवकाशे विच्छेदे सति भयं भवतीत्यर्थः।

यदा ह्येवेतिश्रुत्यर्थः

यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते।
सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया।

इति महर्षिवचनेनोपबृंहणादयमर्थो निश्चीयते।

एकमेवाद्वितीयम् ( छा० ६ । २ । १ ) इति श्रुत्याप्यद्वैतं नापादनीयम्।

अद्वितीयश्रुत्यर्थः

तत्र ह्येकशब्देन ब्रह्मव्यतिरिक्तं जगतो निमित्तकारणं निषिध्यते। कार्यगतबहुत्वावस्था कार्यानुसारेण कारणे ब्रह्मणि कल्पिता स्यात्तन्निवृत्तये एवकारः। अद्वितीयमित्यनेन च ब्रह्मव्यतिरिक्तं जगत उपादानकारणं निषिध्यते।

नेह नानास्ति किंचन ( बृ० ४ । ४ । १६ ) इति श्रुतेस्त्वयमाशयः।

नेह नानेतिश्रुत्यर्थः

यस्य ब्रह्म कारणं न भवति नाप्यन्तर्यामि भवति तादृशं ब्रह्मभिन्नं वस्तु किंचिदपि नास्तीति। न तु ब्रह्मकार्यभूतस्य जगतो निषेधः प्रतिपाद्यते। जगत्कारणत्वस्य श्रुतावेव प्रतिपादनात्। यत्र हि द्वैतमिव भवति ( बृ० २ । ४ १४ ) य इह नानेव पश्यति ( बृ० ४ । ४ । १९ ) इत्याद्याः श्रुतयोऽप्येवमेव योज्याः।

यतश्चायं परमात्मा जगत्कारणत्वस्य, कारणत्वोपयोगिनां सर्वज्ञत्वादिधर्माणां चाश्रयोऽतः स सविशेष एव। सत्यं ज्ञानमनन्तं ब्रह्म ( तै० २।१।१ ) इति श्रुतावपि सत्यत्वादयो विशेषाः प्रतिपादिताः। तथा हि। छत्री कुण्डली वासस्वी देवदत्त इत्यत्रेव सत्यं ज्ञानमिति वाक्ये सत्यादिपदानां सामानाधिकरण्यं दृश्यते। सामानाधिकरण्यं च भिन्नप्रवृत्तिनिमित्तकानां शब्दानामेकस्मिन्नर्थे प्रवृत्तिः।

परमात्मनः सविशेषत्वम्

तथा च सत्यादिपदप्रवृत्तिनिमित्तीभूतानां सत्यत्वादीनां ब्रह्मगतानां धर्माणामनपलपनीयत्वेन ब्रह्मणः सविशेषत्वं सिध्यति। युक्तं चैतत्। ब्रह्मणो जगत्कारणत्वं यतो वा इमानि भूतानि जायन्ते ( तै० ३।१।१ ) इत्यादिश्रुतिसिद्धं निर्विवादमेव। तथा च जगद्रूपकार्योत्पादनोपयोगी सामर्थ्यविशेषस्तत्रावश्यमास्थेयः। लोके घटपटादिकार्याण्युत्पादयतां कुलालकुविन्दादीनां तत्तत्कार्योत्पत्त्युपयोगिसामर्थ्यविशेषस्य दर्शनात्। तथा च ब्रह्मणोऽपि सामर्थ्यविशेषोऽनुमीयते येन स सूक्ष्मचिदचिद्रूपशरीरद्वारेण सृष्टेरुपादानकारणं भवति, येन च जीवानां

स्वप्नावस्थायां तत्तत्पुरुषमात्रानुभाव्यांस्तत्तत्कालावसानांश्च हस्त्यादीन्पदार्थान्क्षण-मात्रेण सृजति । एवं च परमात्मनः सविशेषत्वं सिद्धम् ।

स च परमात्मा सगुण एव न तु निर्गुणः । निर्गुणे जगत्कारणत्वस्य सुतरामसंभवात् । गुणाश्च केचित्स्वरूपप्रतीत्यनुबन्धिनः । यथाऽऽनन्दो ब्रह्म ( तै० ३ । ६ ), सत्यं ज्ञानमनन्तं ब्रह्म ( तै० २ । १ ) इत्यादिश्रुतिप्रतिपादिता आनन्दसत्यत्वादयः । एते हि ब्रह्मस्वरूपप्रतिपत्तावेवोपयुज्यन्ते । आनन्दादिगुणविशिष्टस्यैव ब्रह्मत्वेन तेषां ब्रह्मस्वरूपान्तर्गतत्वात् । अत एवैते वस्तुस्वरूपप्रतीतिकाल एव प्रतीयन्ते । यथा लोके कस्मिंश्चित्पुरुषे दृष्टे तदैव तद्गता ह्रस्वत्वोन्नतत्वादयः प्रतीयन्ते । एते च स्वरूपान्तर्गतत्वात्सर्वासूपासनास्वनुवर्तन्ते । कारुण्यादयो गुणास्तु यद्यपि परमात्मानं न कदापि व्यभिचरन्ति तथापि ते स्वरूपानन्तर्गतत्वान्न सर्वासूपासनास्वनुवर्तन्ते । किं तु ये यत्रोक्तास्त एव तत्र भावनीयाः । ज्ञानशक्तिबलैश्वर्यवीर्यतेजोरूपं गुणषट्कमपि कारुण्यादिवदेव न ब्रह्मस्वरूपान्तर्गतम् । किं तु ब्रह्मणा नित्यसंबद्धम् । यत्संबन्धं विना न कदापि ब्रह्मणोऽवस्थितिर्ब्रह्मसंबन्धं विना च न क्षणमपि तेषामवस्थितिः । प्रियशिरस्त्वादयो ब्रह्मगता गुणास्तु न ब्रह्मणा सह नित्यसंबद्धाः । किंतूपासनाविशेषे कल्पिताः । तेऽपि यत्रोक्तास्तत्रैवोपासनायां भावनीयाः । यस्यामुपासनायां न केऽपि गुणा निर्दिष्टास्तस्यामपि ब्रह्मस्वरूपान्तर्गता गुणा भावनीया एवेति सर्वासूपासनासु प्राप्यं ब्रह्म सगुणमेव । निर्गुणम् ( चू० ७ । २ ) इति श्रुतिस्तु हेयगुणरहितमित्यर्थेन योजनीया । हेया गुणास्तु पातकजरामरणशोकक्षुधातृपादयः । अत एव छान्दोग्ये "अपहतपाप्मा विजरः" ( छा० ८ । १ । ५ ) इत्येवं त एव विशेषतः प्रतिषिद्धाः । तदग्रे च सत्यकामः सत्यसंकल्पः ( छा० ८ । १ । ५ ) इत्येवं शुभा गुणा उक्ताः । सर्वगुणनिषेधे हि सत्यकाम इतीयं श्रुतिर्विरुध्यते । अतस्तदानुगुण्येन निर्गुणमिति श्रुतेर्हेयगुणरहितमित्येवार्थः स्वीकार्यः ।

परमात्मनः सगुणत्वं गुणेष्ववान्तरभेदश्च

ज्ञानमप्यात्मनो गुण एव । न च ज्ञानस्यात्मगुणत्वे विज्ञानघनः ( बृ० २ । ४ । १२ ) इतिश्रुतिविरोध इति वाच्यम् । तत्र परमात्मस्वरूपभूतस्य ज्ञानस्य निर्देशात् । आत्मगुणभूतज्ञानादात्मस्वरूपभूतं ज्ञानं पार्थक्येनास्माभिरङ्गीक्रियते । विज्ञानघनः ( बृ० २ । ४ । १२ ) विज्ञानमानन्दं ब्रह्म ( बृ० ३ । ९ । २८ ) इत्यादिश्रुतिषु विज्ञानस्य ब्रह्मतादात्म्यं प्रतीयते । विज्ञातारमरे केन

विजानीयात् ( बृ० २ । ४ । १४ ) जानात्येवायं पुरुषः इत्यादिश्रुतिषु विज्ञानस्य ब्रह्मणः सकाशाद्भेदः प्रतीयते । द्विविधश्रुतिनिर्वाहाय द्विविधज्ञानाङ्गीकार एव साधीयान् । एतेनानन्दो ब्रह्म ( तै० ३ । ६ । १ ) ब्रह्मण आनन्दः ( तै० २ । ८ । १ ) इत्येवमानन्दविषयेऽपि द्विविधा श्रुतिर्व्याख्याता । आनन्दस्य ज्ञानादनतिरेकात् । ज्ञानमेव ह्यनुकूलमानन्दशब्देनोच्यते । ये चात्मस्वरूपभूतज्ञानात्पार्थक्येन गुणभूतज्ञानं नाङ्गीकुर्वन्ति तेषां मत आत्मनो ज्ञातृत्वं न सिध्यति । यतो ज्ञातृत्वं ज्ञानगुणाश्रयत्वमेव । विज्ञातारमरे केन विजानीयात् ( बृ० २ । ४ । १४ ) न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते ( बृ० ४ । ३ । ३० ) एष हि द्रष्टा ( प्र० ४ । ९ ) इत्यादिश्रुतिसिद्धमेव ज्ञातृत्वम् । सूत्रकारैरपि ज्ञोऽत एव ( ब्र० सू० २ । ३ । १९ ) इत्युक्तम् । जानातीति ज्ञः । ज्ञानाश्रय इति यावत् ।

ज्ञानद्वैविध्यम्

परमात्मा च ज्ञानविषयो भवत्येव । बाधकाभावात् । न हि परमात्मनो ज्ञानस्वरूपत्वं ज्ञातृत्वं वा ज्ञेयत्वेन साकं विरुध्यते । ज्ञानस्वरूपस्य ज्ञातुश्च जीवात्मनोऽहमिति मानसप्रत्यक्षविषयत्वस्यानुभवारूढत्वात् । शरीरे चेष्टादिलिङ्गदर्शनेन तदन्तर्यामिणं जीवात्मानमनुमिन्वन्ति लोकाः । तथा चानुमानविषयत्वमवर्जनीयम् । एवं परमात्मनः स्वप्रत्यक्षविषयत्वे नित्यसिद्धमुक्तजीवनिष्ठप्रत्यक्षानुमानविषयत्वे च न किंचिदपि बाधकं दृश्यते । किं च परमात्मनो ज्ञेयत्वाभाव आगमगम्यत्वस्य सुतरामसंभवेन किमिति श्रुतिरुपनिषत्सु परमात्मानं प्रतिपादयितुं प्रवृत्ता स्यात् । न च परमात्मनो ज्ञेयत्वे मनोगम्यत्वस्यावश्यकत्वेन यन्मनसा न मनुते ( के० ५ ) इतिश्रुतिविरोध इति वाच्यम् । श्रुतौ साकल्येनेत्यध्याहृत्य यद्ब्रह्म मनसा साकल्येन न मनुत इति श्रुतितात्पर्याङ्गीकारेणाविरोधात् । अत एव तदेव ब्रह्म त्वं विद्धि ( के० ४ ) इति ब्रह्मविषयकवेदनविधिः संगच्छते । अव्यक्तोऽयमचिन्त्योऽयम् ( गी० २ । २५ ) यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम् ( वि० पु० ६ । ५ । ६६ ) इत्यादौ ब्रह्मणोऽचिन्त्यत्वोक्तिरपि कार्त्स्न्येनाचिन्तनीयत्वाभिप्रायिका बोध्या । न च परमात्मनो ज्ञेयत्वाङ्गीकारे परमात्मा जडो ज्ञेयत्वाद्घटवदित्यनुमानेन परमात्मनो जडत्वापत्तिरिति वाच्यम् । ज्ञेयत्वहेतोरप्रयोजकत्वात् । न हि यद्य-

परमात्मनो ज्ञेयत्वम्

ज्ज्ञेयं तत्तज्जडमिति व्याप्तिग्रहे कार्यकारणभावसामान्यविशेषभावादिमूलकः कश्चनानुकूलस्तर्को दृश्यते।

स च परमात्मा कूटस्थनित्यः। एकेनैव रूपेण सदा वर्तमानः कूटस्थ इत्युच्यते। ननु परमात्मा जगत उपादानकारणं निमित्तकारणं च स एवेति सिद्धान्तः। उपादानकारणत्वं च विकारयोग्यस्यैव वस्तुनः संभवति मृदादेरिव। तथा च परमात्मनो विकारित्वे कथं तस्य कूटस्थत्वमिति चेन्न। परमात्मनो जगदुपादानकारणत्वं न साक्षात्। किंतु शरीरद्वारा। सूक्ष्मं परमात्मशरीरं प्रधानशब्दवाच्यं स्थूलजगद्रूपेण परिणमते। तथा च परमात्मशरीरस्य सूक्ष्मस्य स्थूलरूपेण परिणामेऽपि शरीरान्तर्यामिणः परमात्मस्वरूपस्य कूटस्थत्वानपायात्। शरीरविशिष्टस्य तु परमात्मन उक्तरीत्या विकारित्वेऽपि न क्षतिः। तत्त्वमसि (छा० ६। ८। ७) इदं सर्वं यदयमात्मा (बृ० २। ४। ५) इत्यादिश्रुतिभिर्जीवानां जडानां च यद्ब्रह्मणा सहैक्यप्रतिपादनं तच्छरीरशरीरिभावमूलकं गौणमेव न तु वस्तुतः। अद्वैतवादश्च शरीरविशिष्टः परमात्मैक एवेत्यभिप्रायेण योजनीयः। यद्ब्रह्मणः शरीरभूतं न भवति तादृशं ब्रह्मव्यतिरिक्तं किंचिदपि नास्तीति तात्पर्यम्।

परमात्मनः कूटस्थनित्यत्वम्

एतदेव विशिष्टाद्वैतं प्रकार्यद्वैतमिति चोच्यते। ब्रह्मणः प्रकारीभूता येऽनन्ता जीवा जडाश्च पदार्थास्तेषां नानात्वेऽपि ब्रह्मणः सकाशात्तेषां भेदेऽपि च तद्विशिष्टस्य प्रकारिणो ब्रह्मण एकत्वात्। जीवैक्यमिति व्यवहारस्य त्वयमभिप्रायः। जीवाः परस्परं वस्तुतो भिन्ना एव। किं तु भिन्नानामपि तेषां ज्ञानस्वरूपेणैकजातीयत्वाज्जीवैक्यमिति व्यवहारो भवति। ऐक्यं तुल्यत्वम्। स चायं च व्रीहिरेक एव तच्चेदं चौषधमेकमेवेत्यत्रेवात्राप्येकशब्दस्तुल्यार्थकः। जीवाद्वैतमिति व्यवहारस्याप्येतदेव तात्पर्यम्। जीवानां मिथो भेदेऽपि तद्गतप्रकारस्यैक्यात्। एतदेव प्रकाराद्वैतमित्युच्यते। जीवभेदनिषेधकवचनानि तु न जीवगतस्य वास्तविकभेदस्य निषेधकानि। किं तु शरीरभेदमूलको यो जीवेष्वारोपितो भेदोऽयं मनुष्योऽयं पशुरित्याकारकस्तन्निषेधकानि बोध्यानि।

विशिष्टाद्वैतम् प्रकार्यद्वैतम् प्रकाराद्वैतम्

जीवस्य प्रतिशरीरं भिन्नत्वादेव सुखदुःखादिवैचित्र्यमुपपद्यते। किं च जीवस्यैक्ये देवदत्तेनानुभूते विषये यज्ञदत्तस्यापि स्मरणप्रसङ्गः। संस्कारनाश-

त्स्मरणं न भवतीति चेद्देवदत्तस्यापि स्मरणं न स्यात्। देवदत्तीयसंस्कारो न विनष्ट इति चेज्जीवैक्यपक्षेऽमुक्तस्य संस्कारो नष्टोऽमुक्तस्य न नष्ट इति वक्तुमशक्यम्। किं च जीवैक्ये कश्चिद्बद्धः कश्चिन्मुक्तः कश्चिच्छिष्यः कश्चिदाचार्य इति व्यवस्था न सिध्यति। देवमनुष्यतिर्यगादिभेदेन सृष्टिवैषम्यं च नोपपद्यते। कर्मभेदेन विषमा सृष्टिरिति तु न। जीवैक्यपक्षेऽमुक्तस्येदं कर्म नामुक्तस्येतिनियमासंभवात्। एवमिदमन्तःकरणममुकस्यैव नान्यस्येत्यस्यापि नियमस्य जीवैक्यपक्षेऽसंभवेनान्तःकरणभेदोऽपि न सुखदुःखादिवैषम्यस्य नियामको भवति। किं च जीवस्याणुत्वं वक्ष्यते। तथा चैकस्याणोर्जीवस्यानन्तशरीरसंबन्धः सुतरां न संभवति। देवदत्तात्मा यज्ञदत्तात्मनः सकाशाद्भिन्नो यज्ञदत्तानुभूतसुखाद्यनुसंधानशून्यत्वादित्यनुमानादपि जीवभेदसिद्धिः।

जीवनानात्वोपपत्तिः

परमात्मा ज्ञानगुणक इत्युक्तम्। तच्च ज्ञानं न सन्मात्रस्वरूपम्। सन्मात्रं ह्यस्तित्वमात्रम्। ज्ञाने च घटोऽस्तीत्यादौ घटादिरिव तदस्तित्वं विषयो भवति। विषयविषयिणोश्च भेदो लोकप्रसिद्ध एव। न हि घटादिर्विषयो ज्ञानस्वरूप इत्येवं कोऽपि प्रत्येति। तथा चास्तित्वरूपाद्विषयाद्विषयिणो ज्ञानस्य भेदोऽवश्यं स्वीकार्यः।

सदनुभूत्योर्भेदः

स्थूलं जगत्तत्कारणीभूतं सूक्ष्मं च जगत्परमात्मनः सदा शरीरभूतमेव। परमात्मनो जगदुपादानकारणत्वं तु सूक्ष्मशरीरद्वारैव न तु साक्षादित्युक्तम्। जगतः साक्षादुपादानकारणं तु परमात्मशरीरभूतं प्रधानादिकं सूक्ष्मं जगदेव। प्रधानादिकं चान्तर्यामिरूपेण चित्संबन्धादेव परिणमते न तु स्वातन्त्र्येण। प्रधानं च त्रिगुणात्मकमविद्यामायाशब्दवाच्यमपि नानिर्वचनीयम्। अविद्यामायाशब्दयोः प्रधानरूपेऽर्थेऽनिर्वचनीयत्वरूपेणाप्रवृत्तेः। तयोः प्रवृत्तिनिमित्तं तु प्रागुक्तमेव (पृ० २७।२५)। अतश्च प्रधानपरिणामभूतं जगदपीदं सत्यमेव न तु प्रातिभासिकत्वेन मिथ्यात्वं जगतः कल्पनीयम्। किं चास्य प्रधानपरिणामभूतस्य जगतो ज्ञानिदृष्ट्याप्यबाध्यमानत्वेन न कथमपि मिथ्यात्वस्योपपत्तिर्भवति।

जगतः सत्यत्वम्

अयं च परिणामवादो ब्रह्मसूत्रकाराणामभिमत इति परिणामात् ( ब्र० सू० १।४।२७ ) इति सूत्राद्गम्यते। 'स्वभावतो निरस्तनिखिलदोषस्य

निरतिशयज्ञानानन्दैकतानस्य परस्य ब्रह्मणोऽनन्तापुरुपार्थास्पदप्रपञ्च-रूपेण बहुभवनं नोपपद्यत इति बहुभवन-

परिणामवादः

संकल्पबोधिका सोऽकामयत बहु स्यां प्रजायेय (तै० २ । ६) इति श्रुतिर्विरुध्यते' इत्याशङ्का-पनोदाय हि तत्सूत्रं प्रणीतम् । प्रलयावस्थायामतिसूक्ष्मशरीरकं ब्रह्म पूर्वव-त्स्थूलचिदचिन्मिश्रप्रपञ्चशरीरकं स्यामिति संकल्प्यात्मानं शरीरद्वारा स्थूलरू-पेण परिणमयतीति न परमात्मनः कश्चिदपुरुपार्थगन्ध इति तत्सूत्रतात्पर्यम् । नन्वेवं प्रपञ्चस्य सत्यत्वे तत्प्रतीतिर्न भ्रान्तिरूपेति तत्त्वज्ञानेन तस्या नाशो न स्यादिति चेदिष्टापत्तिः । तत्त्वज्ञानं तु न व्यर्थम् ।

तत्त्वज्ञानोपयोगः

देहात्मभ्रमस्वातन्त्र्यभ्रमादीनां सत्त्वेन तन्निरा-करणार्थमात्मस्वरूपप्रतिपत्त्यर्थं च तस्यावश्यक-त्वात् । तथा हि । देहस्यात्मसंबन्धित्वेऽप्यात्मत्वाभावेन तत्रात्मत्वबुद्धिर्मनुष्योऽहं देवोऽहमित्याकारिका भ्रान्तिरेव । अयमेव देहात्मभ्रम इत्युच्यते । अनात्मनि देह आत्मत्वबुद्धिर्हि देहात्मभ्रमः । न त्वदेह आत्मनि देहत्वबुद्धिर्देहात्मभ्रमः । जीवात्मनि परमात्मदेहत्वस्य वस्तुत एव सत्त्वात् । प्रत्युत तस्य तत्त्वज्ञानान्त-र्गतत्वेनावश्यकत्वमेव । तेन हि जीवे स्वातन्त्र्यभ्रमो निवार्यते । जीवस्य तत्त-त्कर्मकर्तृत्वं तदन्तःप्रविष्टपरमात्माधीनमेव । अन्तः प्रविष्टः शास्ता (तै० आ० ३ । ११ । २) य आत्मनि तिष्ठन् (बृ० मा० ३ । ७ । २२) सर्वस्य चाहं हृदि संनिविष्टः (गी० १५ । १५) ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति (गी० १८ । ६१) इत्यादिश्रुतिस्मृतिभिः परमात्मनो जीवान्तःप्रवेशपूर्वकं तन्नियमनस्य स्पष्टमेव प्रतिपादनात् । परात्तु तच्छ्रुतेः (ब्र० सू० २ । ३ । ४०) इति सूत्रयतां सूत्रकाराणामप्येतत्संमतमेव । दुग्धादीनां जडवस्तूनामहर्निशं जायमानः परिणामोऽप्यन्तर्यामीश्वराधीन एव । शरीरस्य च परिणामो द्विविधः । जीवदेहस्य बाल्याद्यवस्थाभेदेन जायमान एकः ।

जीवानां पारतन्त्र्यम्

मरणोत्तरं च तस्यैव देहस्य जायमानोऽपरः । द्विविधोऽप्ययमीश्वराधीन एव । आद्यो जीवसंब-न्धेन जायमानोऽपि न जीवाधीनः । जीवसंबन्धेनैव तादृशपरिणामस्येश्वरेच्छा-विषयीभूतत्वात् । सर्वथा परमात्मव्यतिरिक्तस्य जीवस्य जडस्य वा न स्वात-न्त्र्यम् । तत्त्वज्ञानेन देहात्मभ्रमे स्वातन्त्र्यभ्रमे च दूरीकृते स्वतन्त्रस्येश्वरस्या-राधनादौ पुरुपः प्रवर्तते नान्यथा । तथा च तत्त्वज्ञानेन देहात्मभ्रमादय एव

निरसनीया न तु प्रपञ्चसत्यत्वं निरसनीयम्। प्रधानपरिणामभूतस्याखिलप्रपञ्चस्य सत्यत्वात्।

सत्ख्यातिः

शुक्तिकायां प्रतीयमानं रजतमपि सदेव प्रतीयते। असतः प्रतीतेरसंभवात्। इतरथा किमिति शुक्तिकायां रजतमेव प्रतीयते न घटपटादयः। सादृश्याद्रजतं प्रतीयत इति तु न संभवति। यतः शुक्तिकायां रजतसादृश्यं रजतसंस्कारोद्बोधनद्वारा रजतस्मृतिं जनयेन्न तु रजतप्रत्यक्षम्। शुक्तिकायां रजतस्य सत्त्वं त्वित्थम्। पञ्चानां पृथिव्यादीनां भूतानां पञ्चीकरणेन सर्वत्र सर्वेषां सत्त्वेन शुक्तिकारूपपृथिव्यां तेजसो रजतस्यांशतः सत्त्वात्। किं च—

तदेव सदृशं तस्य यत्तद्द्रव्यैकदेशभाक्।

इत्युक्तरीत्या स्वसदृशे वस्तुनि स्वस्यांशतः सत्त्वमवर्जनीयमेव। एवमेव रज्ज्वादौ प्रतीयमानानां सर्पादीनामपि सत्यत्वं वेदितव्यम्। 'शुक्तिकादौ रजतादिप्रतीतिर्भ्रान्तिः' इति व्यवहारस्तु शुक्त्यंशापेक्षया रजतांशस्याल्पत्वान्न तु रजतस्यांशतोऽप्यभावात्। जपाकुसुमसमीपवर्तिस्फटिकमणौ प्रतीयमानो रक्तिमापि सत्य एव। यथा जलान्तर्गततेजोद्रव्यगतः सत्य एवोष्णस्पर्शः संयुक्तसमवायेन जले भासत उष्णं जलमिति तथा स्फटिकसंयुक्तायां जपाकुसुमप्रभायां विद्यमानः सत्य एव रक्तिमा स्फटिके भासते रक्तः स्फटिक इति। नैतावता विषयस्यासत्यत्वम्। जपाकुसुमप्रभा सर्वतः प्रसृतापि स्फटिकस्य स्वच्छद्रव्यत्वेन तत्रैव स्फुटमुपलभ्यते नान्यत्र। पीतः शङ्ख इति प्रतीतौ प्रतीयमानः पीतिमापि सत्य एव। स च पित्तद्रव्यगतः। द्रष्टृपुरुषनयनगतपित्तद्रव्यसंयुक्तानां नेत्ररश्मीनां शङ्खेन सह संयोगात्। स्वप्ने दृश्यमाना गजाश्वादयः पदार्था अपीश्वरेणोत्पादिताः सत्या एव। यद्यपि ते पदार्थास्तत्तद्द्रष्टृपुरुषेणैवानुभूयन्ते नेतरैस्तथा सद्य एव ते विनश्यन्ति तथाप्यचिन्त्यशक्तेरीश्वरस्य तादृशपदार्थोत्पादने सामर्थ्यसत्त्वान्न दोषः। दर्पणे प्रतीयमानं मुखमपि सत्यमेव। दर्पणप्रतिहतगतीनां नेत्ररश्मीनां ततः परावृत्तानां स्वमुखेन सह संबन्धसत्त्वात्। एवं सर्वत्र सत एव विषयस्य ख्यातिः प्रतीतिर्भवति न तु क्वाप्यसतः प्रतीतिः। इयमेव सत्ख्यातिरिति व्यवह्रियते।

शास्त्रस्य सत्यत्वम्

प्रपञ्चस्य सत्यत्वादेव तदन्तर्गतस्य शास्त्रस्यापि सत्यत्वात्तज्जनितं ज्ञानं सम्यग्ज्ञानमित्युच्यते। अन्यथा ह्यसत्याच्छास्त्राज्जायमानं ज्ञानमप्यसत्यमिति तस्य

मोक्षसाधनत्वं दुरुपपादं स्यात् । न ह्याशामोदकैस्तृप्तिर्भवति । न वा मृगतृष्णोदकेन स्नानादिकार्यं निष्पद्यते ।

तदेवं सर्वत्र विद्यमानस्य विषयस्य या प्रतीतिर्जायते सा प्रमाणत्रयजन्या । प्रमाणत्रयं च प्रत्यक्षानुमानशब्दरूपम् । तत्र साक्षात्कारिप्रमाकरणं प्रत्यक्षम् ।

प्रत्यक्षम्

यथावस्थितव्यवहारानुगुणज्ञानं प्रमा । साक्षात्कारीति प्रमाया विशेषणेनानुमानादिव्यावृत्तिः । अनुमानादौ प्रमायाः साक्षात्कारित्वाभावात् । इन्द्रियसंनिकृष्टघटादिप्रत्यक्षज्ञाने प्रमायाः करणमिन्द्रियं भवति । तदेव प्रत्यक्षप्रमाणम् । तज्जन्यं ज्ञानं च प्रत्यक्षमित्युच्यते । नित्यस्य ज्ञानस्येन्द्रियजन्यत्वमौपचारिकम् । यथा नित्यस्य जीवस्य शरीरसंबन्धादुत्पत्तिरुपचर्यते तथा विषयसंबन्धेन ज्ञानस्य विकासे जायमाने सत्युत्पत्तिरुपचर्यते ।

प्रत्यक्षं द्विविधम् । निर्विकल्पकसविकल्पकभेदात् । प्रथमतो जायमानं गुणसंस्थानादिविशिष्टपिण्डज्ञानं निर्विकल्पकम् । संस्थानमवयवरचनाविशेषः ।

प्रत्यक्षभेदाः

यथा प्रथमत एव गवि दृष्टेऽयं गौरिति ज्ञानम् । अत्र ह्यवयवरचनाविशेषरूपगोत्वविशिष्टगोपिण्डस्य ज्ञानेऽप्येतद्गोत्वमितरगोव्यक्तिसाधारणमित्येवं गोत्वस्यानुवृत्ताकारता न प्रतीयते । अतोऽनुवृत्ताकारतारूपस्य विकल्पस्यात्राप्रतीतत्वादेतन्निर्विकल्पकमुच्यते । द्वितीयादिज्ञानं तु सविकल्पकम् । गोव्यक्त्यन्तरसाधारणमीदृशं गोत्वमिति तत्र गोत्वस्यानुवृत्ताकारताया ज्ञायमानत्वात् । नामजात्यादियोजनाहीनं विशेषणविशेष्यसंबन्धानवगाहि ज्ञानं निर्विकल्पकमिति नैयायिकोक्तं निर्विकल्पकलक्षणं तु न समीचीनम् । तथाविधज्ञानस्य क्वाप्यभावात् । संस्थानरूपजातेर्व्यक्तेश्च समानसामग्रीवेद्यत्वेन केवलजातेः केवलव्यक्तेर्वा प्रत्यक्षं न संभवति । आत्मा मनसा संयुज्यते । मन इन्द्रियेण संयुज्यते । इन्द्रियमर्थेन संयुज्यते । ततः प्रत्यक्षज्ञानं भवति । इन्द्रियार्थयोः संनिकर्षं विना न कदापि प्रत्यक्षं भवति । इन्द्रियाणां प्राप्यवस्तुप्रकाशकारित्वनियमात् । इन्द्रियार्थसंनिकर्षश्च संयोगः संयुक्ताश्रयणं चेति द्विविधः । तत्र द्रव्यप्रत्यक्ष इन्द्रियार्थयोः संयोगः संनिकर्षः । द्रव्यगतगुणादिप्रत्यक्षे तु संयुक्ताश्रयणरूपः । इन्द्रियसंयुक्ते द्रव्ये गुणादीनामाश्रितत्वात् ।

पुनः प्रकारान्तरेण प्रत्यक्षं द्विविधमनर्वाचीनमर्वाचीनं चेति । नित्यानां मुक्तानां च जीवानामीश्वरस्य च जायमानमाद्यम् । अर्वाचीनं त्वस्मदादीनामिन्द्रि-

यापेक्षया जायते। इन्द्रियानपेक्षमर्वाचीनं तु स्वयंसिद्धं दिव्यं चेति द्विविधम्। स्वयंसिद्धं योगिनाम्। दिव्यं तु भगवत्प्रसादजन्यं भगवद्भक्तानाम्। दशमस्त्वमसि, तत्त्वमसि (छा० ६।८।७) इत्यादिवाक्यजन्यं ज्ञानं तु शाब्दज्ञानमेव न प्रत्यक्षम्। तस्य तत्तच्छब्दाज्जायमानत्वेन निरुक्तकारणाजन्यत्वात्।

व्याप्यस्य व्याप्यत्वेन ज्ञानाद्व्यापकस्य यज्ज्ञानं सानुमितिः। तत्करणमनुमानम्। पर्वतो वह्निमान्धूमादित्यत्र पर्वतवर्तिनो धूमस्य 'धूमो वह्निव्याप्य' इत्येवं वह्निव्याप्यत्वानुसंधानात्तद्व्यापकस्य वह्नेर्ज्ञानं जायते। सैवानुमितिः। तत्करणं धूमे वह्निव्याप्तिज्ञानं पक्षवृत्तित्वज्ञानं च। तदेवानुमानम्। व्याप्तिपक्षधर्मताज्ञानानन्तरमनुमितौ जायमानायां मध्ये व्याप्तिविशिष्टपक्षधर्मताज्ञानरूपस्य नैयायिकाभिमतस्य लिङ्गपरामर्शस्य न क्वाचिदपेक्षा दृश्यते। प्रथमतः पर्वते धूमप्रत्यक्षम्। ततो धूमे वह्निव्याप्यत्वज्ञानम्। पश्चादनुमितिरित्येवं क्रमस्यानुभविकत्वेन परामर्शस्याप्रयोजकत्वात्। यत्र धूमस्तत्र वह्निरित्येवं नियतसंबन्धो व्याप्तिः। सा चान्वयव्यतिरेकभेदेन द्विविधा। साधनविधौ साध्यविधिरूपेण प्रवृत्ता व्याप्तिरन्वयव्याप्तिः। यथा यो यो धूमवान्स सोऽग्निमानिति। साध्यनिषेधे साधननिषेधरूपेण प्रवृत्ता व्याप्तिर्व्यतिरेकव्याप्तिः। यथा योऽनग्निः स निर्धूम इति। तथा च द्विविधव्याप्तिसत्त्वाद्धूमो हेतुरन्वयव्यतिरेकी। कश्चिद्धेतुः केवलान्वयी। यथा ब्रह्म शब्दवाच्यं वस्तुत्वाद्घटवदिति। अत्र यच्छब्दवाच्यं न भवति तद्वस्त्वपि न भवतीति व्यतिरेकव्याप्तेर्न क्विमप्युदाहरणं संभवति। केवलव्यतिरेकी तु हेतुर्न क्वापि दृश्यते। पृथिवी गन्धवती पृथिवीत्वादित्यादौ तु गन्धवत्त्वरूपसाध्यस्यान्यत्र क्वाप्यप्रसिध्या तदभावव्याप्तेर्दुर्ग्रहत्वेन व्यतिरेकव्याप्तेरसंभवात्।

अनुमानं च स्वार्थपरार्थभेदेन द्विविधम्। तत्र परार्थानुमानेऽनुमानबोधकवाक्यं प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपपञ्चावयवसंयुक्तमिति नैयायिकाः। ते चावयवास्तार्किकग्रन्थेभ्योऽवसेयाः। प्रतिज्ञाहेतूदाहरणरूपत्र्यवयववादिनो मीमांसकाः। उदाहरणोपनयरूपावयवद्वयवादिनः सौगताः। वस्तुतस्त्ववयवसंख्याया अनियम एव। यतो मन्दबुद्धीनां पञ्चावयवापेक्षा। तीक्ष्णबुद्धीनामवयवत्रयेणैव सिद्धिः। तीक्ष्णतरबुद्धीनां त्ववयवद्वयेनैवेति।

अनुमानम्

अनुमानभेदाः

अनाप्तोक्तभिन्नाद्वाक्याज्जायमानं तदर्थज्ञानं शाब्दज्ञानम् । तत्करणं तादृशवाक्यरूपः शब्दः । वेदोऽपौरुषेयत्वादीश्वरप्रणीतत्वाभावेनाप्तोक्तो न भवति । अत आप्तोक्तादित्यनुक्त्वाऽनाप्तोक्तभिन्नादित्युक्तम् । स च वेदोऽनाप्तेनोक्तो न भवतीत्यतः प्रमाणमेव । मनुस्मृतिभारतादयस्तु मन्वादिभिराप्तैरुक्तत्वेनानाप्तोक्तभिन्नत्वात्प्रमाणम् । तत्र वेदः सर्व एव प्रमाणम् । अप्रामाण्यं हि कर्तृदोषाद्बाधकप्रत्ययप्रामाण्याद्वा ज्ञायते । वेदस्य नित्यत्वेनाकर्तृकत्वान्न कर्तृदोषसंभवः । न वा वेदप्रतिपादितार्थस्य प्रमाणभूतः क्वचिदपि बाधकः प्रत्ययः । स्मृत्यादीनां तु वेदविरुद्धार्थप्रतिपादकानां तदंशेनाप्रामाण्यम् । इतरांशेन तु प्रामाण्यमेव । श्रीपञ्चरात्रागमस्य क्वचिदपि वेदविरोधाभावात्कात्स्न्येन प्रामाण्यम् ।

शाब्दज्ञानम्

पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।

इत्युक्तेस्तत्र कर्तृदोषसंभावनापि न भवति । अत एव वराहपुराणे

अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन हि ।
आचारेण प्रवर्तन्ते ते मां प्राप्स्यन्ति मानवाः ॥

इत्युक्तम् ।

वेदस्य पूर्वो भागः कर्मप्रतिपादकः । उत्तरभागो ब्रह्मप्रतिपादकः । आराधनकर्मप्रतिपादकं पूर्वकाण्डम् । आराध्यप्रतिपादकमुत्तरकाण्डम् । पूर्वभागे कर्ममीमांसा । तत्र जैमिनेः सूत्रं द्वादशाध्यायात्मकम् । उत्तरभागे ब्रह्ममीमांसा । तत्र व्याससूत्रं चतुरध्यायात्मकम् । उभयोर्मीमांसयोः संभूयैकशास्त्रत्वम् । उभयत्रापि धर्मस्यैव प्रतिपाद्यमानत्वात् । अलौकिकं श्रेयःसाधनं हि धर्मः । स च साध्यरूपः क्रियादिः पूर्वभागेण प्रतिपाद्यते । सिद्धस्तु ब्रह्मरूपो धर्म उत्तरभागेण प्रतिपाद्यते ।

वेदस्य भागद्वयम्

वाक्यं द्विविधम्—वैदिकं लौकिकं च । द्विविधमपीदं मुख्यया वृत्त्या गौण्या चार्थं प्रतिपादयति । मुख्यया वृत्त्या प्रतिपादितेऽर्थे तात्पर्यानुपपत्तिश्चेद्गौणी वृत्तिः स्वीकार्या । यथा गङ्गायां घोष इत्यत्र गङ्गाशब्दस्य तीरे लक्षणा । तथा तत्त्वमसि ( छा० ६ । ८ । ७ ) इत्यत्र ब्रह्मवाचकस्य तच्छब्दस्य ब्रह्मशरीररूपेऽर्थे लक्षणा । लक्षणा च सर्वत्र जहल्लक्षणैव । कुन्ताः प्रविशन्ति काकेभ्यो दधि रक्ष्यतामित्यत्र कुन्तशब्दस्य कुन्तवदर्थं काकशब्दस्य दध्युपघात-

वृत्तिभेदाः

केऽर्थे लक्षणायां लक्ष्यार्थे शक्यार्थस्य कुन्तस्य काकस्य च प्रवेशेऽपि शक्यतावच्छेदकरूपेणाप्रवेशात्स्वार्थत्याग एव।

उपमानार्थापत्त्यनुपलब्धिरूपप्रमाणत्रयस्योक्तेषु त्रिष्वेवान्तर्भावः। तथाहि। गवयमजानानः कश्चन पुरुषो यथा गौस्तथा गवय इति कुतश्चिदारण्यकाद्वाक्यं श्रुत्वा वनं गतो वाक्यार्थं स्मरन्यदा गोसादृश्यविशिष्टं पिण्डं पश्यति तदा तद्वाक्यार्थस्मरणसहकृतगोसादृश्यविशिष्टपिण्डज्ञानं जायते तदुपमानमित्युच्यते। अस्य च स्मरणरूपत्वात्प्रत्यक्षेऽन्तर्भावः। व्याप्तिग्रहणापेक्षत्वादनुमानेऽन्तर्भावः। वाक्यजन्यत्वाच्छब्दे चान्तर्भावः। स्मरणात्मकं ज्ञानं च प्रत्यक्षविशेष एव।

उपमानं न प्रमाणान्तरम्

अर्थापत्तिश्चानुपपद्यमानेनार्थेन स्वोपपादकस्यार्थस्य कल्पनम्। यथा दिवाऽभुञ्जाने देवदत्ते पीनत्वं दृष्टं चेत्तेनानुपपद्यमानेन पीनत्वेन स्वोपपादकस्य रात्रिभोजनरूपस्यार्थस्य कल्पनम्। अस्य चानुमानेऽन्तर्भावः। उपपादकं हि रात्रिभोजनादिकमुपपद्यमानस्य पीनत्वादेर्व्यापकमेव दृश्यते। यत्र यत्र दिवाऽभुञ्जानत्वसमानाधिकरणं पीनत्वं तत्र तत्र रात्रिभोजनमिति। तदुक्तम्—

अर्थापत्तिर्न प्रमाणान्तरम्

अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः।

इति। अनियम्यस्याव्याप्यस्य। युक्तिरुपपत्तिः। अयुक्तिरनुपपत्तिः। कल्पनीयस्य वस्तुनोऽभावे कल्पकस्यानुपपत्तिश्चेत्तत्तस्य वस्तुनः कल्पकं भवति। कल्पकस्याव्याप्यत्वे तु कल्पनीयाभावेऽपि तस्यानुपपत्तिरेव नास्ति। तथाऽनियन्ताऽव्यापको नोपपादक इति तदर्थः। तथा चोपपाद्योपपादकयोर्व्याप्यव्यापकभावावश्यंभावादनुमानेनैव सिद्धिरित्यर्थापत्तिर्न पृथगङ्गीकार्या।

एवमनुपलब्धिः प्रत्यक्षेऽन्तर्भवति। अनुपलब्धिप्रमाणेन हि सर्वत्राभावस्यैव ग्रहणं न भावस्य। यथा गृहे मनुष्योपलम्भाभावेन गृहे मनुष्याभावो ज्ञायते। परं त्वभावो न भावातिरिक्तः कश्चन पदार्थः। किं तु भावान्तरस्वरूप एव। तथा हि। गृहे मनुष्याभावः केवलगृहस्वरूपः। केवलगृहं शून्यगृहम्। तच्च भावरूपं प्रत्यक्षेणैवोपलभ्यते। एवं घटप्रागभावो मृदेव। घटध्वंसश्च कपालमेव। घटभेदश्च पटादेरवयवरचनाविशेष एवेति।

अनुपलब्धिर्न प्रमाणान्तरम्

उक्तैस्त्रिभिः प्रमाणैर्जायमानं दृष्टादृष्टविषयाणां ज्ञानं वस्तुत एव जीवनिष्ठं जीवगुणभूतम् । न त्वस्य प्रमाणजन्यज्ञानस्य

गुणभूतज्ञानोपपत्तिः

जीवस्वरूपभूतज्ञानेन गतार्थता वक्तुं शक्या । अहं जानामि ज्ञानं मे जातमित्येवं मानसप्रत्यक्षेण जीवात्पार्थक्येन तज्ज्ञानस्यानुभवात् । तथा मुखप्रसादमुखमालिन्याभ्यां तथाविधचेष्टया वा यदानुकूलप्रतिकूलविषयकं देवदत्तादिषु ज्ञानमनुमीयते तदापि पक्षभूताद्देवदत्तादेः सकाशात्साध्यभूतं ज्ञानं तन्निष्ठतया पार्थक्येनैवानुमीयते । तथाऽऽत्मा वा अरे द्रष्टव्यः ( बृ० २ । ४ । ५ ) इत्यादिश्रुतिपूपदिश्यमानं ज्ञानविशेषरूपं परमात्मदर्शनादिकं द्रष्टुर्जीवात्पार्थक्येनैवोपदिश्यते । न हि क्वापि कर्तैव क्रिया भवति । न च जीवो ज्ञानस्वरूप एव सन्भ्रमेण ज्ञानाश्रय इति भासत इति वाच्यम् । नाहं ज्ञानाश्रयः किंतु ज्ञानस्वरूप एवेत्येवं बाधकप्रत्ययस्य कदाप्यदर्शनात् । किंच जीवस्य ज्ञातृत्वं श्रुत्यादिसिद्धं जीवात्पृथग्भूतेनैव तन्निष्ठेन ज्ञानेनोपपाद्यते । तथा हि श्रुतयः—अथ यो वेद ( छा० ४ । १२ । ४ ), यो वेद निहितं गुहायाम् ( तै० २ । १ । १ ), जानात्येवायं पुरुषः, न पश्यो मृत्युं पश्यति ( छा० ७ । २६ । २ ), एवमेवास्य परिद्रष्टुः ( प्र० ६ । ५ ) इति । स्मृतिरपि

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ( गी० १५ । १९ )

इति । ज्ञोऽत एव ( ब्र० सू० २ । ३ । १९ ) इति सूत्रस्वरसतश्च जीवस्य ज्ञातृत्वं सिध्यति ।

अहं जानामीति प्रत्यये ज्ञानमहंकारनिष्ठं भासते नत्वात्मनिष्ठमिति तु न वक्तव्यम् । आत्मन एव तत्राहंशब्दार्थत्वात् । तथा हि । अहंकारोऽहंभावश्च द्वावप्यहंशब्देनोच्यमानौ मिथो भिन्नौ । तत्राहंकारो

अहंभावोऽहंकारश्च भिन्नः

गर्वापरनामा मनोवृत्तिविशेषः । अयं च विद्याविरोधित्वान्मुमुक्षुणा त्याज्य एव । अयमेवाहंकारः क्षेत्रान्तर्भूतत्वेन गीतायां महाभूतान्यहंकारः ( गी० १३ । ५ ) इत्यत्रोक्तः । अहंभावस्तु न विद्याविरोधी । एतद्वाचकोऽहंशब्द आत्मस्वरूपं परामृशति । अयमहंभावो जाग्रतौ स्वप्ने सुषुप्तौ मोक्षे च सर्वत्रैव वर्तते । अयं च न केवलं जीवस्यैव । किं तु परमात्मनोऽपि । हन्ताहमिमास्तिस्रो देवताः ( छा० ६ । ३ । २ ) इत्यत्र श्रुतौ जगदुत्पत्तेः प्रागजगदुत्पत्तिविषयके परमात्मसंकल्पे स्वात्मस्वरूपप्रदर्शकाहंशब्दप्रयोगदर्शनात् । एवंभूताहंशब्दप्रयोगो गीतायामपि दृश्यते न त्वेवाहम् ( गी० २ । १२ ), अहं

कृत्स्नस्य ( गी० ७ । ६ ) इत्यादौ । एवं चाहं जानामीति प्रत्ययेऽहंशब्द आत्मस्वरूपनिदर्शक इति ज्ञानमात्मनिष्ठमेव न त्वहंकारनिष्ठमिति सिद्धम् ।

तच्च जीवात्मगुणभूतं ज्ञानं न रूपादिवदाश्रयमात्रव्यापि । यथा दीपस्य रूपस्पर्शसंख्यापरिमाणादयो गुणा दीपस्वरूपमात्रवर्तिनस्तथा ज्ञानं न जीवस्वरूपमात्रवर्ति । किं तु यथा दीपस्य प्रभा दीपाश्रयेण विद्यमानापि दीपाधिकरणीभूतं सकलं गेहं व्याप्नोति तथा जीवाश्रयेण विद्यमानमपि ज्ञानं जीवाधिकरणीभूतं कृत्स्नं शरीरं व्याप्नोति । जीव एव कृत्स्नशरीरव्यापक इति तु न मन्तव्यम् । तस्याणुपरिमाणत्वात् ! तथा च श्रुतिः—आराग्रमात्रो ह्यवरोऽपि दृष्टः ।

जीवोऽणुः । ज्ञानं शरीरव्यापि ।

बालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ( श्वे० ५।८।९ ) इति ।

आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा ( बृ० ४ । ४ । ६ ) इत्युत्क्रान्तिश्रुतिरप्यत एव संगच्छते । सूत्रकारैरप्युत्क्रान्तिगत्यागतीनाम् ( ब्र० सू० २ । ३ । २० ) इत्यादिसूत्रैर्जीवस्याणुत्वमेवोपपादितम् । जीवस्याणुत्वे शरीरव्यापिसुखाद्यनुभवो न संभवतीति तु न शङ्कनीयम् । धर्मभूतज्ञानव्याप्त्यापि तस्योपपत्तेः ।

तदिदं जीवगुणभूतं ज्ञानं बद्धावस्थायां कर्मणा संकुचितस्वरूपं भवति । परं ज्योतिरुपसंपद्य कर्मरूपबन्धक्षये सति मोक्षावस्थायां विकसितं भवति । अतस्तदर्थमवश्यं यत्न आस्थेयः । इत्थं हि तत्र क्रमः परिलक्ष्यते । उपनयनोत्तरं स्वाध्यायोऽध्येतव्य इति विध्यनुसारेणादौ साङ्गवेदाध्ययने प्रवृत्तिः । तत आपाततो वेदार्थमवगम्य तन्निर्णयाय पूर्वमीमांसाश्रवणे प्रवर्तते । तत ईदृशं कर्मस्वरूपमीदृशं च तस्य फलमिति निश्चिनोति । तत्र च यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते ( छा० ८ । १ । ६ ) इत्यादिश्रुतिषु कर्मणां फलमल्पमस्थिरं च दृष्ट्वा तथा ब्रह्मविदाप्नोति परम् ( तै० २ । १ । १ ), न पश्यो मृत्युं पश्यति ( छा० ७। १६। २), स स्वराड्भवति ( छा० ७ । २५ । २ ) इत्यादिश्रुतिषु ब्रह्मज्ञानस्य फलमनल्पं स्थिरं च दृष्ट्वा तन्निर्णयायोत्तरमीमांसाश्रवणे प्रवर्तते । स्वर्गादिफलाभिसंधिपूर्वकं कृतात्कर्मणो न केवलं मोक्षरूपेष्टानवाप्तिः प्रत्युत ज्ञानसंकोचरूपानिष्टा-

कर्मज्ञानानन्तरं ब्रह्मविचारः

वाप्तिः । अतस्तादृशं कर्म परित्यज्य भक्तियुक्तान्तःकरणेन परमपुरुष आराधनीयः । तेन च स्वीयत्वेनाङ्गीकृतस्तेन सहानन्तान्भोगानश्नुते ।

जीवन्मुक्तिर्नास्ति

इयं च स्थितिर्न जीवतः । कर्मसंपादितैतच्छरीरसत्त्वे तदुपभोग्यसुखदुःखानामवर्जनीयत्वात् । प्राकृतेन च तेन शरीरेण दिव्यभोगासंभवाच्च । किं च तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये ( छा० ६ । १४ । २ ) इति श्रुतिर्ज्ञानिनः सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इति वदन्ती जीवन्मुक्तिं वारयति ।

परमात्मकैंकर्यं मोक्षः

एतद्देहपातोत्तरं तु मुक्तो दिव्यदेहधारी भूत्वा दोषलेशेनापि शून्यं निःसीमानन्देन युक्तं सविभूतिकं समस्तकल्याणगुणात्मकं परमात्मानं याथात्म्येनानुभवन्परमात्मसंकल्पितानेनेकान्दिव्यभोगानुपभुञ्जानः परमात्मकिंकरोऽहमिति भावयन्नास्ते । ननु मुक्तस्य परमात्मकिंकरत्वे सेवायां दुःखस्यावर्जनीयत्वेन मोक्षसुखस्य पुरुषार्थत्वानापत्तिः ।

सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ( मनु० ४।६ )

इतिस्मृत्युक्तप्रकारेण मोक्षे लोकानां प्रवृत्त्यनुपपत्तिश्चेति चेन्मैवम् । सेव्यसेवकयोरुभयोः प्रीतिकारितायां सेवायां दुःखलेशस्याप्यभावात् । तदुक्तं परमसंहितायाम्—

किंकरा मम ते नित्यं भवन्ति निरुपद्रवाः । इति ।

मुक्तौ जीवात्मपरमात्मनोरैक्यमिति तु न । भिन्नयोरभेदासंभवात् । बद्धावस्थायां जीवात्मपरमात्मनोर्भेदस्तु प्रागुपपादित एव । विष्णुपुराणेऽप्यभेदो न संभवतीत्युक्तम्—' अन्यद्रव्यं हि नैति तद्द्रव्यतां यतः ( वि० पु० २ । १४ । २७ ) इति ।

पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति । ( श्वे० १ । ६ )

इतिश्रुतेर्मोक्षावस्थायामपि भेदस्य सिद्धत्वाच्च । मोक्षावस्था च कालतश्चरमावधिरहिता । न स पुनरावर्तते ( छा० ८ । १५ । १ ) इति श्रुत्या मुक्तस्य संसारे पुनरावृत्त्यभावबोधनात् । अनावृत्तिः शब्दात् ( ब्र० सू० ४ । ४ । २२ ) इति ब्रह्मसूत्रेण चैतदेव प्रतिपादितमिति ।

एवं रामानुजमतानुसारेण ये पदार्थाः प्रतिपादितास्तदपेक्षयाऽतिरिक्तत्वेन भासमानास्तार्किकादिभिः पदार्थान्तरत्वेन स्वीकृता ; अपि पदार्था वस्तुतो

नातिरिच्यन्ते । किंतूक्तेष्वेवान्तर्भवन्ति । तथा हि । पृथिव्यप्तेजोवाय्वाकाशम-

इतरपदार्थानामन्तर्भावः

नसां प्रकृतिमूलकत्वात्प्रकृतावन्तर्भावः । तमस्तु पृथिव्येव नातिरिक्तम् । पूर्वदक्षिणादिदिशामाकाशेऽन्तर्भावः । पूर्वादीनां सूर्यसंयोगविशिष्टतत्तदाकाशभागस्वरूपत्वात् । विभागः संयोगाभाव एव । एवं पृथक्त्वमपि । संख्यापरिमाणद्रवत्वस्नेहानां तत्तदाश्रयस्वरूपत्वम् । देशकृतपरत्वापरत्वयोर्देशरूपत्वम् । कालकृतपरत्वापरत्वयोः कालरूपत्वम् । धर्मश्चेश्वरप्रीतिरूपः । अधर्मश्च तादृशप्रीत्यभावरूपः । प्रीतिश्च ज्ञानविशेष एव । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नभावना ज्ञानविशेषरूपा एव । वेगः कर्मविशेषः । स्थितिस्थापकः संयोगविशेषः । उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणानां गमनेऽन्तर्भावः । गमनं च संयोगविशेष एव । गुरुत्वं शक्तिविशेषः । घटत्वादिजातिस्तु तत्तदाकारविशेषरूपा । प्रमेयत्वाकाशत्वेश्वरत्वदेवदत्तत्वादयो धर्मा आश्रयरूपाः । अभावस्य च नातिरिक्तत्वं किंतु भावान्तररूपत्वमेवेति प्रागुपपादितम् ( पृ० ४२ । २५ ) । तथोपमानादिप्रमाणानामप्यन्तर्भावः प्रागुक्तः ( पृ० ४२ । ५ ) । कामक्रोधादयो जीवात्मगुणास्तु जीवात्मगुणभूतज्ञानस्यैवावस्थाविशेषाः । कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव ( बृ० १ । ५ । ३ ) इति श्रुतिस्तु कामादेर्मनःसहकारित्वनियमेनौपचारिकी बोध्येति ।



प्रदर्शितमेतच्छ्रीमच्छंकराचार्याणां रामानुजाचार्याणां च दर्शनम् । अधुना- त्रत्यमुख्यसिद्धान्तावबोधसौलभ्यायैतद्दर्शनद्वयं सक्षेपेणोच्यते—

| अद्वैतवादिनां शांकरमतानुयायिनां दर्शनम्— | विशिष्टाद्वैतवादिनां रामानुजीयानां दर्शनम्— |
|---|---|
| १ आत्मरूपमेकमेव तत्त्वं नान्यत्किंचित् । | चिदचिद्रूपशरीरविशिष्ट आत्मैक एव न तु तस्मात्तच्छरीराच्चान्यत्किंचित् । |
| २ आत्मनोऽन्यत्किंचिदपि न सत्यमात्मसजातीयमात्मविजातीयमात्मनिष्ठं वा । स्वगतसजातीयविजातीयभेदत्रयशून्य एवात्मा । | आत्मा चेतनत्वेन स्वसजातीयेभ्यो जीवेभ्योऽचेतनत्वेन विजातीयेभ्यो जडेभ्यः प्रधानादिभ्यः स्वगतेभ्यः कल्याणकारकगुणेभ्यश्च भिन्नः । |
| ३ स चात्मा निर्विशेषः । ईदृशस्तादृश इत्येवं केनापि प्रकारेण वक्तुं न शक्यते । | स चात्मा सविशेषः । सर्वज्ञत्वनित्यत्वव्यापित्वादिविशेषयुक्तः सर्वज्ञो नित्यो व्यापीत्यादिशब्दैर्वक्तुं शक्यते । |
| ४ अत एव च स निर्गुणः । न तत्र कल्याणकारका अपि गुणा वस्तुतः सन्ति । | आत्मा स्वभावत एवापहतपाप्मत्वाद्यनेककल्याणकारकगुणगणाश्रयः । न तत्र हेयगुणाः सन्ति । |
| ५ ज्ञानरूपोऽपि गुणो न तत्र वर्तते । स्वयमेव स ज्ञानस्वरूपः । | ज्ञानस्वरूपोऽपि स ज्ञानगुणाश्रयः । गुणभूतज्ञानं च स्वरूपभूतज्ञानाद्भिन्नमेव । |
| ६ अत एव न तत्र वस्तुतो ज्ञातृत्वम् । विज्ञातृत्वोक्तिस्त्वौपचारिकी । | अतोऽस्य वस्तुत एव ज्ञातृत्वम् । अत एव च स विज्ञातेति व्यवह्रियते । |
| ७ ज्ञेयत्वमपि तस्य नास्ति । स्वस्मिन्स्वाश्रयत्वस्य स्वविषयत्वस्य चासंभवात् । | ज्ञेयत्वमपि तस्यास्त्येव । गुणभूतज्ञानस्यात्मनः सकाशाद्भिन्नत्वेन तदाश्रयत्वस्य तद्विषयत्वस्य चात्मनि संभवात् । |
| ८ परमात्मा स्वेन रूपेण कूटस्थनित्यः । तेनैव रूपेणाद्वितीयश्च । | परमात्मा स्वेन रूपेण कूटस्थनित्यः । चिदचिद्रूपशरीरविशिष्टरूपेण तु परिणामिनित्यः । विशिष्टरूपेणैवाद्वितीयः । |
| ९ अत एव ब्रह्माद्वैतमित्युच्यते । | ब्रह्माद्वैतं तु न प्रकाराद्वैतम् । किंतु प्रकार्यद्वैतम् । ब्रह्मप्रकारीभूतानां |

| | |
|---|---|
| | जीवानां जडानां चानेकत्वेऽपि प्रकारिणो ब्रह्मण एकत्वात् । |
| १० परमात्मनः सन्मात्ररूपत्वात्तदभिन्नं ज्ञानमपि सद्रूपमेव नतु सद्विषयकम् । | तच्च गुणभूतं ज्ञानं न सन्मात्ररूपं किं तु सद्विषयकम् । |
| ११ परमात्मन एव मायोपाधिकमीश्वरत्वमविद्योपाधिकं च जीवत्वम् । जडं तु प्रातिभासिकं मिथ्यैवेत्येकमेव तत्त्वम् । | परमात्मैवेश्वरः । तच्छरीरभूतो जीववर्गो जडवर्गश्च ततो भिन्न एवेति चिदचिदीश्वररूपं तत्त्वत्रयम् । |
| १२ परमात्मनः सकाशादभिन्नापि भिन्नेव त्रिगुणा परमात्मशक्तिरज्ञानादिपदवाच्या । तदुपहितः परमात्मा जगतो मूलप्रकृतिः । | परमात्मनः सकाशाद्वस्तुतो भिन्नं त्रिगुणात्मकं प्रधानं जगतो मूलप्रकृतिः । |
| १३ अज्ञानेन परमात्मन्येवेदं जगद्भासते । अयं विवर्तवादः । | प्रधानमेवान्तर्यामीश्वरसांनिध्याज्जगदाकारेण परिणमते । अयं परिणामवादः । |
| १४ परमात्मविवर्तभूतं प्रातिभासिकं चेदं जगन्मिथ्यैव न तु सत्यम् । | प्रधानपरिणामभूतं चेदं जगत्सत्यमेव न तु मिथ्या । |
| १५ अनिर्वचनीयं चेदं जगदज्ञानदोषेण भासत इत्यनिर्वचनीयख्यातिः । | वस्तुतः सत्यमेव जगत्प्रतीयत इति सर्वत्र सत्ख्यातिः । |
| १६ शुक्तिरजतस्थले स्वप्नादौ चानिर्वचनीया एवार्थाः प्रतिभासन्ते । | शुक्तिरजतस्थले स्वप्नादौ च सत्या एवार्थाः प्रतीयन्ते । |
| १७ शास्त्रमपि जगदन्तर्गतत्वादसत्यमेव । तथापि तत्तत्त्वज्ञानसाधनं भवत्येव स्वाप्नपदार्थवत् । | शास्त्रस्य सत्यत्वादेव तस्य तत्त्वज्ञानसाधनत्वम् । असत्यात्सत्योत्पत्तेरसंभवात् । |
| १८ अर्थज्ञानसाधनीभूतानि प्रमाणानि प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिरूपाणि षट् । | अर्थज्ञानसाधनीभूतानि प्रमाणानि प्रत्यक्षानुमानशब्दरूपाणि त्रीणि । |
| १९ प्रमाणैश्च यज्ज्ञानं जायते तत्रान्तःकरणं ज्ञानाभिव्यञ्जकं भवति । | प्रमाणैर्जायमानं ज्ञानं च वस्तुत एव जीवनिष्ठम् । |

| | |
|---|---|
| २० परमात्मनः सकाशादभिन्नाना जीवानामपि परमात्मवदेव ज्ञानस्वरूपत्वं न तु वस्तुतो ज्ञानाश्रयत्वम् । किंत्वन्तःकरणोपाधिकं ज्ञातृत्वम् । | परमात्मनः सकाशाद्भिन्नाः परमात्मशरीरभूता जीवा अपि ज्ञानस्वरूपा ज्ञानगुणकाश्चेति तेषां वस्तुत एव ज्ञातृत्वम् । |
| २१ ज्ञानाश्रयत्वेन भासमानोऽहमर्थो न जीवात्मा । किं त्वन्तःकरणविशेषोऽहंकारः । | ज्ञानाश्रयश्चाहमर्थो जीव एव न तु तदतिरिक्तोऽहंकारो ज्ञानाश्रयः । |
| २२ जीवो विभुः । | जीवोऽणुः । |
| २३ स्वरूपत एव तस्य सर्वशरीरावयवेषु व्याप्तिः । | ज्ञानद्वारा च तस्य सर्वशरीरावयवेषु व्याप्तिः । |
| २४ जीवश्च ब्रह्मस्वरूप एवेत्येक एव । जीवानेकत्वं त्वौपाधिकम् । | जीवा वस्तुत एव नानाविधाः । जीवाद्वैतं तु प्रकाराद्वैतम् । |
| २५ साधनचतुष्टयसंपत्त्यनन्तरं ब्रह्मविचारारम्भः । | कर्मस्वरूपज्ञानानन्तरं ब्रह्मविचारारम्भः । |
| २६ प्रत्यक्षसामग्रीसंनिधाने शब्दोऽपि प्रत्यक्षज्ञानं जनयति । | शब्दाज्जायमानं ज्ञानं परोक्षमेव न तु कदाचिदपि प्रत्यक्षम् । |
| २७ महावाक्यादिभिरात्मस्वरूपसाक्षात्कारे सद्य एवाविद्यानिवृत्तिः । | महावाक्यादिजन्योपासनादार्ढ्येन परमात्मा प्रसन्नो भवति । |
| २८ सुखदुःखातीतात्मसाक्षात्कारे लौकिकशरीरसत्त्वेऽपि 'जीवत एव मुक्तिः । | तथापि लौकिकशरीरसत्त्वे सुखदुःखानुभवावश्यकत्वान्न कदापि जीवतो मुक्तिः । |
| २९ प्रारब्धकर्मक्षये शरीरत्यागे सति स्वस्वरूपेणावस्थितिर्भवति । | प्रारब्धकर्मक्षये लौकिकशरीरत्यागे दिव्यदेहप्राप्त्या परमात्मना सह परमं साम्यं भवति । |
| ३० इयं विदेहमुक्तिः | इयमेव मुक्तिः |
| ३१ मुक्तावहंभावो नास्ति । | मुक्तावप्यहंभावोऽस्त्येव । |
| ३२ मुक्तौ जीवब्रह्मणोर्भेदो नास्ति । | मुक्तावपि जीवब्रह्मणोर्भेदोऽस्त्येव । |
| ३३ अस्यामवस्थायां न लेशतोऽपि दुःखं नापि सुखं भवति । | अस्यामवस्थायां दुःखलेशेनाप्यसंभिन्नं सुखाधिक्यमनुभूयते । |

प्रदर्शितमेतन्मायावादिनां विशिष्टाद्वैतवादिनां च दर्शनम् । अयं च मायावादः श्रीमच्छंकराचार्यैरपूर्व एव स्वकपोलकल्पनयोद्भावित इति न भ्रमितव्यम्।

मायावादारम्भः

यतो मायावादमसहमानैरपि रामानुजाचार्यैः सूत्रकारात्प्रागप्ययं मायावाद आसीदित्यङ्गीकृतम्। तथा च श्रीभाष्ये (पृ०२३६।२०) 'सर्वत्र प्रसिद्धोपदेशात्' (ब्र०सू०१।२।१) इति सिद्धान्तसूत्रं प्रणयद्भिः सूत्रकारैर्मनस्यनुसंहितः पूर्वपक्षः प्रदर्शितः—' अयं जीवात्मा स्वतोऽपरिच्छिन्नरूपत्वेन ब्रह्मभूतः सन्नाद्यविद्यया देवतिर्यङ्मनुष्यस्थावरात्मनावतिष्ठते ' इति । तथा तत्रैव '( श्रीभा० पृ० ३३६ । ३ ) सुपुप्त्युत्क्रान्त्योर्भेदेन ' ( ब्र० सू० १ । ३ । ४३ ) इत्येतत्सूत्रनिरसनीयत्वेन सूत्रकृदभिमताऽऽशङ्का प्रदर्शिता—' प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरमेव नास्ति । ऐक्योपदेशात् । द्वैतप्रतिषेधाच्च । शुद्धावस्थ एव हि प्रत्यगात्मा परमात्मा परं ब्रह्म परमेश्वर इति व्यपदिश्यते ' इति । तथा च सूत्रकारात्प्रागप्ययं मायावाद आसीदिति सिद्धम् ।

अयं च मायावादो ब्रह्मसूत्रकाराणामनभिमत इति तु न कल्पनीयम् ।

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ( श्वे० ४ । १० )

इति श्रुतावेव मायावादस्योपन्यासात् । सूत्रकारैश्च सिद्धान्तदर्शने ' मायामायिनौ'(ब्र०सू०सि०१।१।२) इति सूत्रे मायावादः स्पष्टमेवाभिहितः । न च सत्यायाः प्रकृतेरेव विचित्रार्थसर्गकरत्वान्मायाशब्दवाच्यत्वमिति वाच्यम्। मायाशब्दस्यानिर्वचनीयार्थकत्वेन प्रसिद्धत्वात्।

मायावादः सूत्रकाराभिमतः

'तस्मिन्मरुशुक्तिकास्थाणुस्फटिकादौ जलरूप्यपुरुषरेखादिवल्लोहितशुक्लकृष्णा गुणमयी गुणसाम्याऽनिर्वाच्या मूलप्रकृतिरासीत्' इति निरञ्जनभाष्यगृहीतश्रुतिविरोधाच्च । तथा च मायाया अनिर्वचनीयत्वाद्विवर्तरूपं जगदुपादानत्वं ब्रह्मणः सिध्यति । सूत्रकारैश्चायं विवर्तवादः स्पष्टमेवोक्तः । तथा च सूत्रम्—' परिणामिविवर्तिनौ ' ( ब्र० सू० सि० १ । १ । ७ ) इति । अस्यार्थः—द्विविधं ह्युपादानं परिणामि विवर्ति च । तत्र घटाद्युत्पत्तौ मृदादिः परिणामी । शुक्तिरजतादौ तु शुक्तिकादिर्विवर्ती । परिणामश्च पूर्वावस्थात्यागेनावस्थान्तरप्राप्तिः । विवर्तश्च तदपरित्यागेन सा । तथा च प्रपञ्चोत्पत्तौ प्रकृतिः परिणामिनी पुरुषस्तु विवर्तीति ।

विवर्तोपादानभूतः पुरुष एव ब्रह्मशब्देन व्यपदिश्यते । बृंहणाद्ब्रह्म । बृंहणं

ब्रह्मशब्दव्युत्पत्तिः

व्यापनम् । उपादानकारणं हि कृत्स्नं कार्यजातं व्याप्नोत्येव । यत्तु सर्वत्र बृहत्त्वगुणयोगेन ब्रह्मशब्दः । बृहत्त्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयं सोऽस्य मुख्योऽर्थः ( श्रीभा० पृ० २ पं० ९ ) इत्युक्तं तन्न । निर्गुणस्य ब्रह्मणो गुणकृतबृहत्त्वासंभवात् । अथ सगुणमेव ब्रह्मास्माभिरङ्गी क्रियत इति चेत् उच्यते । बृहत्त्वं हि परिणामविशेषः । अनवधिकातिशयबृहत्त्वं च परममहत्त्वमेव । तच्च स्वरूपत एव संभवति न तु गुणतः । गुणेषु महत्त्वासंभवात् । वैशेषिका अपि गुणेषु गुणान्नैवाङ्गी कुर्वन्ति । गुणेष्वप्याश्रयद्वारा गुणाः संभवन्तीति चेत्तस्य स्वरूपगतमहत्त्व एव पर्यवसानमिति गुणैश्चेत्युक्तिर्न विशेषार्थसाधिका । न च रामानुजीयैर्ब्रह्मनिष्ठस्य गुणभूतस्यापि ज्ञानस्य द्रव्यत्वाङ्गीकारात्तत्र महत्त्वस्य संभव इति वाच्यम् । तावतापि गुणैरिति बहुवचनासंगतेस्तादवस्थ्यात् । ननु पूजितत्वमेव बृहत्त्वमिति चेन्न । ईदृशस्य बृहत्त्वस्य लोकाप्रसिद्धत्वात् ।

लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः ।

इति न्यायेन लोकप्रसिद्धार्थकबृहधात्वनुसारेणैव ब्रह्मशब्दव्युत्पत्तेर्वक्तव्यत्वात् । क्वाचित्कप्रयोगस्तु नेप्सितार्थसाधकः । 'बृहत्त्वं च यत्रानवधिकातिशयं सोऽस्य मुख्योऽर्थ' इत्यप्ययुक्तम् । अनवधिकातिशयांशस्य शक्यतावच्छेदकानन्तर्गतत्वात् । गुणवाचकानां हि शब्दानां तत्तद्गुणः सामान्यत एव प्रवृत्तिनिमित्तम् । नतु तत्र निरतिशयत्वाद्यन्तर्भवति । गजप्रासादादिषु महत्त्वस्याकाश इव निरतिशयत्वाभावेऽपि महान्गजो महान्प्रासाद इत्यादयो व्यवहारा मुख्या एव सर्वैरङ्गी क्रियन्ते न तु गौणाः । तथाच बृंहणाद्ब्रह्मेति सिद्धम् । उक्तं जगद्विवर्तोपादानभूतं ब्रह्मैवात्मशब्देन व्यपदिश्यते । एतदेवैकं तत्त्वं न तु तदतिरिक्तं किंचित् । अस्यैवात्मनो ज्ञाने मुक्तिर्भवति ।

ननु कीदृशी मुक्तिः । उच्यते ।

आत्मज्ञानाद्भवेन्मुक्तिः शरीररहितास्थितिः ।
अमृतादिगिरा सैव श्रुतौ समभिधीयते ॥ ५ ॥

सशरीरावस्थायां जायमानं सर्वमपि सुखं दुःखसंभिन्नमेव । केचिद्राजपुत्रादयो यद्यपि सुखातिशयभाजो दृश्यन्ते तथापि न क्वचिदपि तादृक् सुखं यन्न दुःखलेशेनाप्यसंभिन्नम् । क्वचित्सद्यो दुःखाभावेऽपि भाव्यवस्था-

लोचनजं दुःखं सर्वत्राव्यभिचार्येव । स्वर्गेऽप्येवमेव । अहर्निशं विशरणस्वभावं शरीरमनुपश्यतामवश्यंभाविशरीरपातजन्यदुःखचिन्तनस्य सर्वत्र सत्त्वात्।

मोक्षावस्था

अशरीरावस्थायां च लेशतोऽपि न दुःखसंभवः। दुःखानुभवस्य शरीरतन्त्रत्वात् । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ( छा० ८ । १२ । १ ) इति श्रुतेश्च । यद्यपि तस्यामवस्थायां प्रियस्पर्शोऽपि नास्ति तथापि न क्षतिः । दुःखसंभिन्नसुखापेक्षया यत्र लेशतोऽपि न दुःखं तादृशसुखाभावस्याप्येष्टव्यत्वात् । विषबिन्दुस्पृष्टामृतापेक्षया हि वरममृताभावोऽपि । अशरीरावस्था चोक्तश्रुतिप्रामाण्यादेव सिध्यतीति न तत्र मीमांसकानुयायिनाऽन्येन वा केनापि विवदितव्यम् । इयमेवावस्था मोक्षशब्देनाभिधीयते । मोक्षावस्थां प्राप्त एव मुक्तः । नतु स्वर्गसुखभागपि मुक्त इत्युच्यते । मुक्त एव च तमेवं विद्वानमृत इह भवति ( नृ० पू० ६ ) इति श्रुतावमृतशब्देनोच्यते । मुक्तो ह्यशरीरः । अशरीर एव चामृतः । शरीरसत्त्वे मरणस्य नियतत्वात् ।

भयसीमा मृत्युरिति हि लोकवादः । मोक्षस्य तु 'अभयं वै ब्रह्म भवति' ( बृ० ४ । ४ । २५ ) इति श्रुत्या भयात्यन्ताभावरूपत्वं बोध्यते । द्वितीयवस्तुसंबन्धप्रतिभाससत्त्वे कयाऽपि विधया भयसंभावनास्तीति तत्र द्वितीयवस्तुसंबन्धप्रतीत्यभावोऽवश्यं वर्णनीयः । सा च प्रतीतिर्मुक्तस्य स्वदृष्ट्या, परदृष्ट्या चेति द्विविधा । मुक्तिश्च विदेहमुक्तिर्जीवन्मुक्तिश्चेति द्विविधा । द्वितीयवस्तुसंबन्धप्रतीत्यभावश्च क्वचिद्द्वितीयस्य वस्तुन एवाभावेन, क्वचिद्वस्तुसत्त्वेऽपि तत्संबन्धाभावेन, क्वचित्तत्संबन्धसत्त्वेऽपि तत्प्रतीत्यभावेनेति त्रिविधः । तदेवं स्वदृष्ट्या परदृष्ट्या चेति द्विविधप्रतीतेः प्रत्येकं जीवन्मुक्तिविदेहमुक्त्यवस्थाभेदेन द्वैविध्याच्चातुर्विध्ये तत्रापि प्रत्येकं वस्तुसंबन्धप्रतीत्यभावत्रैविध्येन त्रैविध्ये संकलनया द्वादश प्रकारा भवन्ति । तेषु वस्तुतः के संभवन्ति के वा नेति विचार्यते । तत्र विदेहमुक्तौ मुक्तदृष्ट्या द्वितीयं वस्त्वेव नास्तीति कुतस्तत्संबन्धः कुतस्तरां तत्संबन्धप्रतीतिः । इतरदृष्ट्या तु द्वितीयवस्तुनोऽभावः सर्वथाऽसंभव्येव । यतः संसारस्यानादित्वमिदानन्त्यमपि सर्वसंमतमेव नतु सर्वमुक्तिपक्षः कस्यापि संमत इति शुकवामदेवादीनां केषांचिद्विदेहमुक्तावपि बद्धजीवानामनन्तानां सत्त्वेन तद्दृष्ट्या द्वितीयवस्तुनः सत्त्वावश्यंभावात् । तथापि तेन द्वितीयवस्तुना सह विदेहमुक्तस्य संबन्धो न संभवतीति कुत इतरबद्धजीवदृष्ट्यापि मुक्तजीवस्य द्वितीयवस्तुना सह संबन्धः प्रतीयेत । यथाऽऽदर्शाभावे मुखस्य प्रतिबिम्बरूपेण

न भानं तथा विदेहमुक्तौ दर्पणस्थानीयबुद्ध्याद्युपाध्यभावेन न वस्तुसत्प्रतिबिम्बभूतजीवरूपेण स्वस्य परस्य च भानम् । अतः कथं द्वितीयवस्तुसंबन्धप्रतीतिः स्यात् । जीवन्मुक्तौ तु दर्पणस्थानीयबुद्ध्याद्युपाधिसत्त्वेन मुक्तस्यापि जीवस्य प्रतिबिम्बभूतजीवरूपेण भानमवर्जनीयमेव । द्वितीयं वस्तु चास्त्येवेति तत्संबन्धोऽप्यवर्जनीय एव । जीवन्मुक्तस्य च स्वस्यापि जीवरूपेण भानसत्त्वाद्द्वितीयवस्तुसंबन्धस्य च सत्त्वात्तत्प्रतीतिरपि जीवन्मुक्तदृष्ट्या इतरदृष्ट्या च यद्यप्यवर्जनीयैव तथापि सा प्रतीतिः कीदृशीति विचारः कर्तव्यः । तत्र यथा बद्धजीवानां वस्तुतः प्रतिबिम्बभूतस्यापि सतो जीवस्य न प्रतिबिम्बरूपेण भानं किंतु केवलजीवरूपेणैव न तथा जीवन्मुक्तस्य।

जीवन्मुक्तिः

यथा चटकादिः पक्षी आदर्शे स्वप्रतिबिम्बं पश्यन्नपि 'इदं प्रतिबिम्बम्' इत्येवमजानानश्चटकान्तरबुद्ध्या तदभिमुखं गच्छति तथा बद्धो जीवः स्वयं प्रतिबिम्बभूतोऽपि 'प्रतिबिम्बभूतोऽहमित्येवमजानानः स्वस्मिन्नात्मान्तरबुद्ध्या लोके व्यवहरति । बिम्बभूते चात्मनि इदं बिम्बमित्येवमजानानस्तत्रात्मान्तरबुद्ध्या तमुपास्त उपेक्षते वा । यथा च चटकाद्यपेक्षया ज्ञानेनाधिको मनुष्यादिरादर्शे स्वप्रतिबिम्बं पश्यन् 'इदं प्रतिबिम्बम्' इत्येवं जानन् प्रतिबिम्बे कृष्णगौरादिरूपं दैर्घ्याद्याकारविशेषांश्च पश्यन् इदं प्रतिबिम्बमिति ज्ञानसत्त्वात्तत्र प्रतीयमाना धर्माः किं बिम्बगता उतादर्शगता इति विचारं कर्तुं प्रवर्तते तथा बद्धजीवापेक्षया ज्ञानेनाधिको जीवन्मुक्तो बुद्ध्याद्युपाधौ परमात्मप्रतिबिम्बभूतं स्वं पश्यन् 'जीवोऽयं प्रतिबिम्बभूतः' इत्येवं जानन् प्रतिबिम्बभूते जीवे चैतन्यम्, अहंभावं, कर्म, सुखदुःखादिभोगांश्च पश्यन् 'जीवोऽयं प्रतिबिम्बभूतः' इति ज्ञानसत्त्वात्तत्र प्रतीयमानेषु चैतन्याहंभावकर्मसुखदुःखादिषु मध्ये किं बिम्बभूतपरमात्मगतं किंवा बुद्ध्याद्युपाधिगतमिति विचारं कर्तुं प्रवर्तते । तत्र

अहंकारादहंभावं कर्म सत्त्वादितस्तथा ।
मनसः सुखदुःखे च चैतन्यं परमात्मतः ॥

इत्येवमनुवृत्तिर्बोध्या । यथा मनुष्य आदर्शे स्वप्रतिबिम्बे क्वचित्कालिमानमसारल्यं च पश्यन्नपि 'न कालिमासारल्ये बिम्बगते तत्राभावात् किंत्वादर्शगते' इति बुद्ध्वा न व्यथते तथा जीवन्मुक्तो बिम्बस्य निर्विशेषचिन्मात्रस्वरूपत्वेन चैतन्यातिरिक्तस्य सर्वस्याप्यन्यत एव प्रतिबिम्बभूते जीवेऽनुवृत्तिं मन्वानो न व्यथते । यथा प्रतिबिम्बे दृश्यमानं कालिमानमादर्शतोऽनुवृत्तमप्यज्ञानेन बि-

म्वतोऽनुवृत्तं मत्वा बालाः कदाचिद्भ्राम्येयुस्तन्निवृत्तये प्रौढो मनुष्यः स्वयम् भ्रान्तोऽप्यादर्शं परिमार्जयति तत्र हेतुर्बाला अप्येवमादर्शपरिमार्जनं कृत्वा भ्रमं दूरी कुर्युरिति, तथा जनकादिर्जीवन्मुक्तः समीचीनं कर्म फलाननुसंधानेन करोति। तत्रायं हेतुरन्ये बद्धा जीवा अप्येवं समीचीनं कर्म फलमनभिसंधाय कृत्वा चित्तशुद्धिद्वारा स्वभ्रान्तिं दूरी कुर्युरिति। तत्त्वज्ञानमपि यावत्परोक्षं न तावज्जीवन्मुक्तः। प्रत्यक्षज्ञाने सत्येव सः। स्वस्वरूपसाक्षात्कारोत्तरमपि प्रारब्धकर्मणः सत्त्वान्मरणपर्यन्तं पूर्वसंस्कारानुरोधेन बुद्ध्याद्युपाधिसत्त्वात्प्रतिबिम्बस्यावर्जनीयत्वमेव। प्रतिबिम्बे चादर्शगतकालिमेवाहंकारगतोऽहंभावोऽपि भासत एवेति जीवन्मुक्तस्यापि क्वचिदहमर्थपूर्वको व्यवहारो दृश्यते। एतेन जीवन्मुक्तिर्नास्त्येवेति रामानुजोक्तमपास्तम्। तमेवंविद्वानमृत इह भवति (नृ० पू० १।६) इति श्रुताविहशब्देन जीवन्मुक्त्यवस्थायाः स्पष्टमेव प्रतिपादनाच्च।

मुक्तस्य कीदृशं कर्म

अथ मुक्तः कर्म करोति न वा। यदि किंचित्पश्यति तर्हि करोति यदि न पश्यति तर्हि न करोति। अथ पश्यति न वा पश्यति। विदेहमुक्तो न किंचिदपि पश्यति। तदिदमुक्तं 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ० २।४।१४) इति। जीवन्मुक्तस्तु समाधौ नैव किंचित्पश्यति। अन्यदा तु पश्यन्निव लक्ष्यते। तदानीं कर्म करोति। कर्म च द्विविधं–बुद्धिपुरःसरमबुद्धिपुरःसरं च। बुद्धिपुरःसरं द्विविधं–स्वार्थं परार्थं च। स्वार्थमपि द्विविधं शरीरयात्रार्थमधिकोत्कर्षप्राप्त्यर्थं च। आद्यं क्षुत्पीडया भिक्षाटनादि। तच्च जीवन्मुक्तस्य संभवति। द्वितीयं तु स्वर्गाद्युद्देशेन क्रियमाणं यागादिकम्। तच्च जीवन्मुक्तस्य न संभवति। वितृष्णत्वात्। परार्थं च द्विविधं परपरिचर्यादिकमाद्यम्। द्वितीयं च स्वकृतं कर्म दृष्ट्वा लोका अप्येवं करिष्यन्ति इति बुद्ध्या क्रियमाणम्। इदमेव लोकसंग्रहार्थमित्युच्यते। द्विविधमपीदं जीवन्मुक्तस्य संभवति। कर्म कुर्वंश्चायं कैश्चिदज्ञैः स्वार्थं कुर्वन्निव लक्ष्यत इत्यन्यत्। अबुद्धिपुरःसरं च द्विविधम्। किंचित्कर्म कर्मकाले ज्ञातुं न शक्यते। यथा निद्रायां हस्तपादचालनादि। किंचित्तु कर्मकाले ज्ञातुं शक्यते परंतु ज्ञायत एवेति न नियमः। यथा जीवमात्रस्य श्वासोच्छ्वासादिकम्। इदमपि द्विविधं जीवन्मुक्तस्य संभवति। यद्यत्कर्म संभवति तत्सर्वं व्युत्थानदशायामेव। तदपि चाहं करोमीत्यभिमानाभावेन संसारबन्धाय न भवति। तथा च जीवन्मुक्त इतरबद्धजीववन्नैव कर्म करोति किं तु कर्म जायत इत्येव। यतो जीवन्मुक्तेन कृतमप्यकृतमेव तत्। दृष्टमप्यदृष्टमेव।

तस्य चैवंविधस्य मोक्षस्य साधनमात्मतत्त्वज्ञानं नान्यत् । तमेव विदित्वाऽति मृत्युमेति ( श्वे० ३ । ८ ) इतिश्रुतेः । तत्रैव नान्यः पन्था विद्यतेऽयनाय ( श्वे० ३ । ८ ) इत्यनेनान्यस्य मोक्षसाधनस्य स्पष्टमेव निषेधाच्च ।

तत्त्वज्ञानशब्दार्थः

ननु तत्त्वज्ञानादेव मोक्ष इत्येवं सिद्धान्तोऽस्तु नाम । परंतु यस्य तत्त्वस्य ज्ञानान्मोक्षस्तत्तत्त्वं ज्ञेयं भवति न वा । आद्ये ज्ञेयत्वसत्त्वे विषयविषयिभावसत्त्वान्मोक्षावस्थायामपि द्वैतं तदवस्थमेव । अन्त्ये तत्त्वस्य ज्ञानं दुरुपपादमिति चेत् । अत्र केचिदित्थं समर्थयन्ते । तत्त्वज्ञानमिति नायं षष्ठीतत्पुरुषः । किंतु कर्मधारयः । निषादस्थपतिन्यायेन लाघवानुरोधात् । तथा च तत्त्वभूतं यज्ज्ञानं तस्मान्मोक्ष इत्यर्थः । तत्त्वभूतं सर्वबीजभूतं यज्ज्ञानं निर्विशेषानुभूतिरूपं तदेव सर्वेषां जीवानां मूलस्वरूपमिति तत्प्राप्त्या मोक्ष इति यावत् । नन्वेवमपि मोक्षे प्राप्तिप्राप्तव्यभावोऽस्तीति द्वैतापत्तिः । किं च यदि तज्जीवानां मूलस्वरूपं तर्हि तत्सर्वदा प्राप्तमेवेति कथं मोक्षावस्थायां तत्प्राप्तिर्वर्ण्यत इति चेन्न । मूलस्वरूपप्राप्तिरित्यस्य मूलस्वरूपेतरस्याप्रतीतिरित्यर्थपर्यवसानेन द्विविधस्यापि दोषस्याभावात् । वस्तुतस्तु षष्ठीतत्पुरुषनिष्पन्नोऽर्थ एव प्रथमतो बुद्धिमारोहतीति तदङ्गीकारेऽपि न क्षतिः । ननु मोक्षावस्थायामपि विषयविषयिभावसत्त्वेन द्वैतापत्तिरितिचेद्भ्रान्तोऽसि । कारणस्य हि कार्यप्राक्काले सत्त्वमावश्यकम् । कार्यकाले तु तदस्तु वा मास्तु तत्र नाग्रहः । तथा च तत्त्वविषयकज्ञानं मोक्षकारणमिति मोक्षावस्थातः प्राक्सत्त्वं तस्यावश्यकम् । तदा च द्वैताभासस्याङ्गीकृतत्वेन न द्वैतापत्तिर्दोषः ।

तत्त्वज्ञानस्य मोक्षसाधनत्वम्

अथ तत्त्वज्ञानं कया विधया मोक्षकारणं भवतीति चेदित्थम् । मोक्षो हि मुक्तिः । सा च कस्मादित्यवध्यपेक्षायां मोक्षस्य बन्धप्रतिद्वन्द्विभूतत्वेन येन बन्धस्तस्मान्मोक्ष इत्यर्थादेव लभ्यते । बन्धश्चायं संसारबन्धः । संसारश्चेदं चराचरं सर्वं जगत् । तस्मान्मोक्ष उपपादनीयः । किं च संसारः कर्ममूलकः । तथा च कर्मणः सकाशादपि मोक्ष उपपादनीय एव । एवं कस्य तत्त्वं मोक्षार्थं ज्ञातव्यमित्याकाङ्क्षायां मोक्षस्य बन्धप्रतिद्वन्द्विभूतत्वेन बन्धसाधनीभूतस्य संसारस्य तन्मूलभूतकर्मणश्च तत्त्वं ज्ञातव्यमित्युपपादनीयम् । किं च तमेवं विद्वानमृत इह भवति ( नृ० पू० ६ ) इतिश्रुतिमूलक ' आत्मज्ञानान्मोक्षः ' इत्यपि लोके प्रवादो दृश्यते । तथा च तत्त्वज्ञाना-

न्मोक्ष इत्यत्र तत्त्वपदेन आत्मरूपमेव तत्त्वं ग्राह्यमित्यप्युपपादनीयमेव। तदु-च्यते। तत्त्वं सत्यं परमार्थ इति पर्यायाः। कारणं च कार्यस्य तत्त्वम्। परमा-त्मैव च सर्वस्य कारणम्। अतः स एव सर्वस्य तत्त्वभूतः।

अथ कथं कारणं कार्यस्य तत्त्वं भवति। उच्यते। श्रुतौ 'यथैकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृन्मयं घटशरावोदञ्चनादिकं विज्ञातं स्यात्त-
थैकेन परमात्मना विज्ञातेन सर्वं जगद्विज्ञातं भवति'
कार्यस्य कारणं तत्त्वम् (छा० ६ । १) इत्युच्यते । अत्र यद्यपि
मृत्पिण्डज्ञाने जाते घटे दृष्टेऽयं घट इति ज्ञानं न
भवति अतः कथं घटशरावादिकं विज्ञातं स्यात्तथाप्ययं न दोषः। मृत्पिण्डज्ञानेन घटो हि विज्ञातो भवत्येव। घटे 'अयं घट' इति यज्ज्ञानं तज्ज्ञानमित्युच्यते। घटे एव 'इयं मृत्' इति यज्ज्ञानं तद्विज्ञानमित्युच्यते। विशिष्टं ज्ञानं विज्ञानम्। यद्यपि घटज्ञाने जाते जलाहरणादिकार्यं कर्तुं शक्यते तथापि न तद्विज्ञानम्। ज्ञाने विशिष्टत्वं च सूक्ष्मदृष्ट्या कार्यविशेषकरत्वम्। जलाहरणादि तु [illegible] तथा। यथा वृक्षे ज्ञाते तदधो विश्रान्तिः। परं तु तस्मिन्नेव वृक्षे अमुकौषधिरिति [illegible] रोगविनाशादिकं विशिष्टं कार्यं क्रियते। यत्र यो मुख्यो भागस्तदेव तत्र तत्त्वम्। घटे च सारभूतो भागो मृदेव। यथा रत्नादिसंरक्षणार्थं करण्डकः क्रियते। तत्र चाधस्तनपात्रादुपरितने पात्र उद्घाटिते रत्नं दृश्यते। करण्डकस्तु पलालवत्। तथा घटो नामरूपात्मकः करण्डकः। पलालस्येव च नामरूपयोः पृथक्कारे घटे केवलं मृदेव दृश्यते। अतो घटे सारभूतो भागो मृदेव। एवं मृत्तिकादिष्वपि तत्कारणमेव सारभूतो भागः। 'ते यदन्तरा तद्ब्रह्म' (छा० ८ । १४ । १) इतिश्रुतिरप्येतदेव कथयति। ते इत्यनेन पूर्वोक्तयोर्नामरूपयोः परामर्शः। यद्यपि मृत्तिकयेव घटेन पात्रसंशुद्ध्यादिकार्यं कुर्वँल्लोकोपहास्यो भवति तथापि ते लोका-स्तत्राज्ञा एव। यतो मृद्रूपेण क्रियमाणमेव मुख्यं कार्यम्। यतो घटो विनष्टो वाऽविनष्टो वा पूर्णो वैकदेशो वा सच्छिद्रो वाऽसच्छिद्रो वा नूतनो वा जीर्णो वा सर्वदा तत्कर्तुं शक्यम्। न तु जलाहरणादि। अन्यत्र च नेत्रस्फुरणे नेत्रसुवर्णसं-योगरूपं सुवर्णकार्यं सौवर्णेनाङ्गुलीयकेनापि कुर्वन्नोपहास्यो भवति। मणौ वा लोष्टे वा अद्रौ वा हारे वा समदृशां साधूनां यो महिमातिशयस्तत्र तत्र वर्ण्यते स तत्तत्कारणीभूततत्त्वज्ञानमूलक एव। तेषु कारणदृष्ट्यैव साधूनां व्यवहा-रात्। एवं कार्यस्य तत्त्वं कारणमिति सिद्धम्।

नन्वस्तु कार्यस्य तत्त्वं तदुपादानकारणम्। परंतु तज्ज्ञानेन कार्यनाशः कथं

स्यात् । न हि मृत्तिकाज्ञानेन घटो विनश्यति । तथा च संसारतत्त्वभूतस्य संसारबीजस्यात्मनो ज्ञानेऽपि संसारस्य विद्यमानत्वात्कथं मोक्षोपपत्तिः । किं च नाशः सर्वत्रैव सान्वयः । घटादिनाशेऽपि कपालादिरूपेण तदन्वयदर्शनात् । काष्ठे दग्धेऽपि भस्माङ्गारादि दृश्यते । एतद्दृष्टान्तेन तप्तायसि पतितस्योदबिन्दोः सद्यो जायमानो विनाशोऽपि सान्वय एवेत्यनुमेयम् । तदुक्तम्—

नाशस्य सान्वयत्वम्

'उदबिन्दौ च सिन्धौ च तोयभावो न भिद्यते ।
निरस्तेऽप्ययसो बिन्दावस्ति तस्यान्वयोऽम्बुधौ ॥' (गौ०पा०का०)

इति । तथा च संसारनाशेऽपि बीजरूपेण तदन्वयस्य सत्त्वात्सुतरां मोक्षानुपपत्तिरिति चेन्मैवम् । संसारनाशो हि न घटादिनाश इवावयवविश्लेषरूपः । तादृशो विनाशः सान्वयोऽस्तु नाम । ज्ञानेन जायमानः प्रातिभासिकवस्तुविनाशस्तु निरन्वय एव । न हि रज्जुज्ञानेन प्रातिभासिके सर्पे विनष्टे आन्तरस्य बाह्यस्य वा कस्यापि सर्पावयवस्य स्वरूपेणान्यरूपेण वा रज्ज्वां लेशतोऽप्यन्वयो दृश्यते । अयं च विनाशस्तत्त्वज्ञानेनैव भवति । प्रातिभासिकसर्पस्य हि रज्जुरेव तत्त्वम् । यद्यपि मृत्तिकाज्ञानेन घटो न विनश्यति तथापि मृत्तिकाज्ञाने जाते मृत्सत्तैवेयं न ततोऽतिरिक्ता घटसत्तेति ज्ञानाद्विनाशो जातप्राय एव । पृथगस्तित्वप्रतीत्यभाव एव हि नाशः । ननु घटनाशे मृद्रूपेणान्वयो दृश्यत इति नाशः सान्वयस्तथा प्रातिभासिकसर्पविनाशे रज्जुरूपेणान्वयो दृश्यत इति तत्रापि नाशः सान्वय एवेति चेदस्तु । उक्तरीत्या हि सान्वयत्वे स्वीक्रियमाणे संसारनाशे सत्यात्मरूपेण तदन्वयसत्त्वेऽपि न मोक्षे काचिदनुपपत्तिः । इदं सर्वं यदयमात्मा (बृ० २ । ४ । ५) इति श्रुत्या चैतदेव प्रतिपादितम् । एवं रीत्या तत्त्वज्ञानेन सर्वत्र संसारे कार्यमात्रस्य कारणसत्त्वापेक्षया पृथक्सत्त्वाभावेऽवगते मूलकारणीभूताविद्यासत्त्वमवशिष्यते । तावत्पर्यन्तं च ज्ञाता ज्ञानं ज्ञेयं चेति त्रिपुटी चावशिष्यते । तदुत्तरं च तत्रापि किं तत्त्वमिति विचारे ज्ञानमात्रमवशिष्यते । न ज्ञाता न ज्ञेयं नाप्यविद्या । उपपादयिष्यते चेदमग्रे । एतदेव च निर्विशेषं निर्विषयं निराश्रयं ब्रह्मस्वरूपभूतं ज्ञानम् । अयमेव मोक्षः ॥ ५ ॥

मोक्षसाधनीभूतब्रह्मज्ञानसंपादनाय ब्रह्मविचारः कर्तव्यः । तत्र कोऽधिकारीति चेत् उच्यते—

संसाराब्धौ येन लब्धं साधनानां चतुष्टयम् ।
तस्यैव ब्रह्मजिज्ञासा नौकावदुपयुज्यते ॥ ६ ॥

साधनचतुष्टयं च प्राक्प्रदर्शितमेव ( पृ० १९ प०९ ) । अथातो ब्रह्मजिज्ञासा ( ब्र० सू० १ । १ । १ ) इति सूत्रेऽथशब्द आनन्तर्यार्थकः । ब्रह्मजिज्ञासा च योग्यताबलाद्यत्पूर्ववृत्तमपेक्षते तदानन्तर्यं सोऽथशब्दो बोधयति । तत्र चोक्तं साधनचतुष्टयमेव पूर्ववृत्तम् । अनारभ्याधीते हि तस्मिन्सूत्रेऽथशब्दप्रतिपाद्यानन्तर्याक्षिप्तं पूर्ववृत्तं योग्यताबलादेव निर्णेतव्यं भवति ।

ब्रह्मजिज्ञासाधिकारी

ननु कथमेतदनारभ्याधीतमित्युच्यते । पूर्वोत्तरमीमांसयोः संभूयैकशास्त्रत्वात् । 'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः' इति वदता वृत्तिकारेणापि कर्मब्रह्ममीमांसयोरेकशास्त्रत्वमुक्तम् । श्रीभाष्ये ( पृ० २ प० २० ) प्येवमुक्तम् । षोडशलक्षणेनेत्यत्र लक्षणशब्दोऽध्यायवाची । संकर्षकाण्डेन सह जैमिनीयस्य षोडशलक्षणत्वम् । युक्तं चैकशास्त्रत्वम् । उभयत्रापि धर्मस्यैव प्रतिपाद्यमानत्वात् । पूर्वमीमांसायां साध्यरूपः क्रियादिर्धर्मः प्रतिपाद्यते । उत्तरमीमांसायां तु सिद्धो धर्मो ब्रह्मरूपः । संगतिविशेषश्च तयोः श्रीभाष्ये ( पृ० ३ प० १ ) प्रदर्शितः । स यथा—स्वाध्यायोऽध्येतव्य इत्यध्ययनविध्यनुसारेण गृहीतात्स्वाध्यायादापाततः स्वर्गादिफलजनकानि कर्माणि बुद्ध्वा तत्स्वरूपप्रकारविशेषनिर्णयाय पुरुषः पूर्वमीमांसाश्रवणे स्वयमेव प्रवर्तते । तत्र च कर्मणामस्थिरफलत्वं निश्चित्य स्वाध्यायैकदेशोपनिषद्वाक्येषु ब्रह्मज्ञानस्यापाततः स्थिरफलप्रतीतेस्तन्निर्णयायोत्तरमीमांसायां प्रवर्तते । तथा चैकशास्त्रत्वं युक्तमिति ।

अत्रोच्यते । नात्रैकशास्त्रत्वं संभवति । पूर्वमीमांसासूत्रकारो जैमिनिरुत्तरमीमांसासूत्रकारश्च बादरायण इत्येवं सूत्रकारभेदात् । न केवलं सूत्रकारभेदः । किं तु प्रतिपाद्यविषयश्च भिन्नः । पूर्वमीमांसायां कर्मरूपो विषयः प्रतिपाद्यः । उत्तरमीसायां तु ज्ञानरूपः । परस्परविरोधश्चानयोः कर्मज्ञानयोर्दृश्यते । आत्मैक्यज्ञाने कर्मणः सुतरामसंभवात् । किं चोत्तरमीमांसाप्रतिपाद्यो विषयो जैमिनेरसंमत एव । यतः स्वर्गादिप्राप्तिरेव परमपुरुषार्थ इति जैमिनिमतम् । अपि च किमत्र मीमांसाद्वयानुगतमेकं रूपमेकशास्त्रत्वप्रयोजकम् । विचारत्वमिति चेद्व्याकरणन्यायादीनामप्येकशास्त्रत्वं स्यात् । तथा च यथा प्रतिपाद्यविषयभेदेन व्याकरणन्यायादीनां शास्त्राणां भेदस्तथा पूर्वोत्तरमीमांसयोरपि भेद एवोचितः । अथोभयत्रापि धर्मस्यैव प्रतिपाद्यमानत्वेनैकशास्त्रत्वमिति चेन्न । ब्रह्मणो धर्मत्वाभावात् ।

मीमांसाद्वयस्य नैकशास्त्रत्वम्

ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥ ( भा० सभा० ३८।२३ )

इत्यत्र श्रीकृष्णपरमात्मनि धर्मशब्दप्रयोगस्तु धर्मप्रयोजकत्वेनौपचारिकः । प्रचुरप्रयोगाभावेन शक्त्यन्तरकल्पनाया अन्याय्यत्वात् । क्वाचित्कप्रयोगस्य लक्षणयैवोपपत्तेः । अन्यथा लक्षणाया निर्विषयत्वापत्तिः । किं च ब्रह्मणो धर्मत्वं पूर्वमीमांसासूत्रकारस्यैवासंमतम् । चोदनालक्षणोऽर्थो धर्मः ( जै० सू० १ । १ । २ ) इति हि धर्मलक्षणं जैमिनिना प्रतिपादितम् । तद्ब्रह्मणि सुतरां न संभवति । यदि धर्मविचारत्वेनैकशास्त्रत्वं जैमिनेरिष्टं स्यात्तर्हि तेन सिद्ध-साध्यभेदेन द्विविधधर्मसाधारणं धर्मलक्षणं कृतं स्यात् । तथा च शास्त्रकर्तुरेवै-कशास्त्रत्वं यत्र नाभिमतं तत्रान्यैरेकशास्त्रमेकशास्त्रमित्येवं बहुकृत्वोऽप्युद्घोषे कृते न किमपि सिध्येत् । अमुमेव धर्मशब्दार्थं जैमिनिप्रतिपादितं मनसिकृत्य विवरणप्रमेयसंग्रहे ( पृ० २६५ प० १७ ) उक्तम्—'यदि वेदान्तेषु विधिः स्यात्तर्ह्येकैव षोडशलक्षणी धर्ममीमांसा प्रसज्येत' इति । न च मीमांसेति समाख्याया एकत्वादेकशास्त्रत्वमिति वाच्यम् । व्याकरणेति समाख्याया एकत्वेऽप्यैन्द्रचान्द्रादेर्भेदात् । एतेन संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्ष-णेनेति शास्त्रैकत्वसिद्धिरिति वृत्तिकारोक्तमपास्तम् । अत एव शास्त्रषट्कसं-कलने

कपिलस्य कणादस्य गौतमस्य पतञ्जलेः ।
व्यासस्य जैमिनेश्चापि शास्त्राण्याहुः षडेव हि ॥

इत्येवं पूर्वोत्तरमीमांसयोर्भेदेन परिगणनं संगच्छते । संगतिविशेषविचारश्च निष्फलः । यतः संगतिर्नैकशास्त्रत्वप्रयोजिका । किं तर्ह्येकशास्त्रत्वोपपा-दिका । प्रमाणान्तरेण निर्णीते ह्येकशास्त्रत्वे संगतिमन्तरेण कथमेकशास्त्रत्वमित्या-क्षेपश्चेत्तन्निरासाय संगतिविशेषविचार उपयुज्यते । एवं शास्त्रभेदे सिद्धेऽथातो ब्रह्मजिज्ञासा ( ब्र० सू० १ । १ । १ ) इत्यस्यानारभ्याधीतत्वं सिद्धम् । तथा चाथशब्दप्रतिपाद्यानन्तर्याक्षिप्तं पूर्ववृत्तमुत्तरभाविनीं ब्रह्मजिज्ञासामालोक्य तद-नुगुणं किंचिद्योग्यताबलादेव निर्णेतव्यं भवति ।

ननु योग्यताबलाद्गृह्यमाणमपि पूर्ववृत्तं कर्मज्ञानं कुतो न गृह्यत इति चेत्—भवेदेतदेवं यदि कर्मसमुच्चिताज्ज्ञानान्मोक्षः स्यात् । नतु तथा । कर्मज्ञानयोर्विरोधेन समुच्चयासंभवात् । विविदिषन्ति यज्ञेन दानेन ( बृ० ४ । ४ । २२ ) इति

कर्मज्ञानं न पूर्ववृत्तम्

श्रुतावपि सन्प्रत्ययप्रयोगाद्यज्ञादिकर्मणामात्मज्ञानेच्छासाधनत्वं प्रतीयते नतु ज्ञानसाधनत्वम्। नतरां ज्ञानोत्तरकालिकमोक्षसाधनत्वम्। ब्रह्मजिज्ञासायामुद्गीथादिविचारस्तु प्रासङ्गिकतया कृतो न तु मुख्यत्वेन। तेन न तदनुरोधेन कर्मज्ञानस्य पूर्ववृत्तत्वं कल्पनीयम्। यथा महद्दीर्घवद्वा ( ब्र० सू० २। २। ११ ) इति सूत्रे कारणविजातीयकार्योत्पत्तौ दृष्टान्तत्वेन महद्दीर्घादिपरिमाणोक्तिरिति नैतावता तदनुरोधेन वैशेषिकशास्त्रज्ञानस्य पूर्ववृत्तत्वं कल्प्यते तद्वत्।

यत्तु 'अधीतसाङ्गसशिरस्कवेदस्याधिगताल्पास्थिरफलकेवलकर्मज्ञानतया संजातमोक्षाभिलाषस्यानन्तस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी' ( श्रीभा० पृ० १ प० १३ ) इत्युक्तं तत्रोच्यते। अथशब्दप्रतिपाद्यमानन्तर्यं ब्रह्मजिज्ञासायां यन्निरूपितं तत्पूर्ववृत्तं प्रदर्शयितुं हीयं तेषामुक्तिः। सूत्रे च ब्रह्मजिज्ञासारूपं पश्चाद्भावि वस्तु सूत्रकृद्भिर्निर्दिष्टम्। तेन च स्वान्विताथशब्दप्रतिपाद्यानन्तर्यसहकृतेन पूर्ववृत्तस्याक्षेपः कर्तव्यः। यच्च तस्मान्नियतपूर्वभावि तदेव तेनाक्षेप्तुं शक्यते न तु व्यभिचरितम्। कर्मज्ञानं तु व्यभिचरितमेव। विनापि कर्मज्ञानं ब्रह्मजिज्ञासायाः शक्यत्वात्। लोके तथा दृष्टत्वाच्च। यद्यप्यधिगताल्पास्थिरफलकेवलकर्मज्ञानतया संजातमोक्षाभिलाषस्यानन्तस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी ( श्रीभा० पृ० १ प० १३ ) इति ग्रन्थेन नियमो बोधितस्तथापि प्रकृते स नियमो नोपयुज्यते। यतस्तादृशस्थित्युत्तरं ब्रह्मजिज्ञासा नियता भवतु नतु ब्रह्मजिज्ञासायाः पूर्वं तादृशस्थितिर्नियता। यद्यत्र सूत्रकृद्भिस्तादृशस्थितिर्निर्दिष्टा स्यात्तया च स्वनियतपश्चाद्भाविन्या ब्रह्मजिज्ञासाया आक्षेपः कर्तव्यः स्याच्चर्हि तादृशनियमस्योपयोगः स्यान्न तु प्रकृतस्थले। किंच 'अधिगताल्पास्थिरफलकेवलकर्मज्ञानतया संजातमोक्षाभिलाषस्य' इत्युक्तवतस्तवाप्येतत्संमतमेव यत्तादृशकर्मज्ञानं मोक्षाभिलाषमन्तरेण ब्रह्मजिज्ञासां न संपादयतीति। अन्तरेण तु तादृशकर्मज्ञानं मोक्षाभिलाषस्तां संपादयत्येव। तथा चान्वयव्यतिरेकाभ्यां मोक्षाभिलाषस्यैव पूर्ववृत्तत्वमवगम्यते। स चास्मदुक्तसाधनचतुष्टयान्तर्गत एव।

यत्तु 'न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चायकत्वादापातप्रतीतोऽप्यर्थः संशयविपर्ययौ नातिवर्तते। अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्य इति चेत्तथैव धर्मविचारोऽपि कर्तव्य इति पश्यतु भवान्' ( श्रीभा० पृ० ४ प० २० )

इत्युक्तं तत्रोच्यते। यद्यप्यनेन दृष्टान्तेन धर्मविचारस्य कर्तव्यत्वं प्राप्तं तथापि वेदान्तवाक्यविचारात्प्राग्धर्मविचारस्यावश्यकर्तव्यता नैव सिध्यति। तदसिद्धौ हि तस्य पूर्ववृत्तत्वेनाक्षेपो दुर्लभ एव। किंच येषां कर्मणोऽस्थिरफलत्वबुद्ध्या कर्मविचारस्यानावश्यकत्वेन तत्रोदासीनता जायते तेषां मध्ये कस्यचिद्ब्रह्मज्ञानस्य स्थिरफलत्वबुद्धिश्चेत्तन्निर्णयायानधीतपूर्वमीमांसाशास्त्रस्यापि ब्रह्मविचारे प्रवृत्तिः संभवति। तस्मात्साधनचतुष्टयमेव पूर्ववृत्तमिति सिद्धम्।

साधनचतुष्टयसंपत्त्यनन्तरं च महावाक्यादिभ्यो जायमानं ज्ञानं यदि केवलं शाब्दं ज्ञानमेव तर्हि तन्नाविद्यानिवर्तकम्। किं तु महावाक्यादिभ्यो जायमानमात्मप्रत्यक्षमविद्यानिवर्तकम्। ज्ञानत्वव्याप्यजात्योः शाब्दत्वप्रत्यक्षत्वयोः संकरस्तु न दोषावहः। उपाधेयसंकरेऽप्युपाध्योरसंकरात्। वाक्यमपि प्रत्यक्षज्ञानहेतुर्भवत्येव। दशमस्त्वमसीत्यादौ यथा। एतदेव महावाक्यादिभ्यो जायमानमात्मप्रत्यक्षमात्मा वा अरे द्रष्टव्यः (बृ० २।४।५) इत्यनया श्रुत्या विधीयते। द्रष्टव्यः साक्षात्करणीयः। द्रष्टव्य इत्युक्तम्, परंतु कथं दृश्येतेत्याकाङ्क्षायां दर्शनसाधनत्वेन श्रोतव्यो मन्तव्यो निदिध्यासितव्यः (बृ० २।४।५) इत्यत्र श्रवणादिकं विधीयते। न च श्रवणं शाब्दज्ञानसाधनं न दर्शनसाधनमिति कथं दर्शनसाधनत्वेन श्रवणविधानमिति वाच्यम्। वाक्यमपि प्रत्यक्षज्ञानहेतुर्भवत्येवेत्यनुपदमेवोक्तत्वात्। एतेन 'अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं न वाक्यार्थज्ञानमात्रम्। तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः। तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च' (श्रीभा० पृ० ७५० १३) इति परास्तम्। वाक्ये श्रुते तदर्थज्ञानाय विध्यनपेक्षायामपि श्रवणे प्रवृत्त्यर्थं विधेरावश्यकत्वात्। प्रत्यक्षत्वानाक्रान्तेन केवलशाब्दज्ञानेनाविद्याया अनिवृत्तिस्त्वस्माकमपि संमतैव। यत्तु भेदवासनायामनिरस्तायां महावाक्यादिभ्योऽविद्यानिवर्तकज्ञानोत्पत्तिर्न भवतीत्याशङ्क्य 'सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः' (श्रीभा-पृ० ७ प० १८) इत्युक्तं तदिष्टापत्तिग्रस्तम्। ज्ञाने जाते तु न सद्य एव विदेहमुक्तिरिति नियमः। ज्ञानेनाप्यविनष्टस्य प्रारब्धकर्मणः फलभोगसमाप्तिपर्यन्तं भेदज्ञानानुवृत्तेः सत्त्वात्। आप्तवाक्यादिभ्यश्चन्द्रैकत्वनिश्चयेऽपि चक्षुर्दोषस्याविनष्टत्वे द्विचन्द्रज्ञानानुवृत्तिवत्। परं तु तद्विद्यमानमपि भेदज्ञानं छिन्नमूलत्वान्न बन्धाय भवति। यत्तु 'सत्यपि वाक्यार्थज्ञानेऽनादिवासनया भेदज्ञानमनुवर्तत इति भवता न शक्यते वक्तुम्। भेदज्ञानसामग्र्या अपि वासनाया मिथ्या-

आत्मसाक्षात्कारादविद्यानिवृत्तिः

रूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात्। ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ निवर्तकान्तराभावात्कदाचिदपि नास्या वासनाया निवृत्तिः' ( श्रीभा० पृ० ७ प० २० ) इत्युक्तं तन्न। ज्ञानेन या भेदवासनाया निवृत्तिर्भवति सा न ज्ञानसमकालं सर्वथा निवृत्तिः। किं तु ज्ञानसमकालं निवृत्त्यारम्भः। ततो भेदवासनाया न वृद्धिर्नापि पूर्ववत्स्थितिः। कारणाभावात्। प्रत्युत क्रमेण क्षीयमाणा स्वत एव सर्वथा विनश्यति न निवर्तकान्तरमन्यत्किंचिदपेक्षते। यत्तु 'वासनाकार्यं भेदज्ञानं छिन्नमूलमथ चानुवर्तत इति बालिशभाषितम्' ( श्रीभा० पृ० ८ प० ४ ) इत्युक्तं तदेव बालिशभाषितवद्दृश्यते। यतो यथा छिन्नमूलो वृक्षश्छेदसमकालमेव न म्लानो भवति किं तु छेदसमकालं म्लानेरारम्भ एव जायते ततः केनचित्कालेन सर्वथा म्लानो भवति शुष्को भवति पुनः प्ररोहायोग्यश्च भवति तथात्र स्वीकारे बाधकाभावात्। यत्तु 'भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात्तद्विरोधिभावनायाश्चाल्पत्वादनया तन्निरसनानुपपत्तेः' (श्रीभा० पृ० ८ प० ९ ) इत्युक्तं तच्चिन्त्यम्। क्वचिद्भूगृहादौ भूगृहव्यापकमपि बहुकालविद्यमानमपि च तिमिरं सद्यः प्रवेशितोऽल्पोऽपि दीपो विनाशयति तद्वद्भेदवासनाया निराससंभवात्। तथा च महावाक्यादिजन्यात्मसाक्षात्कारादविद्यानिवृत्तिरिति सिद्धम्।

आत्मसाक्षात्कारसाधनम्

महावाक्यादिजन्यात्मसाक्षात्कारश्चानवरतात्मभावनया भवति। अयमेवात्मसाक्षात्कारोऽनुविद्य विजानाति ( छा० ८। ७। १ ) निचाय्य तन्मृत्युमुखात्प्रमुच्यते ( का० ३।१५ ) आत्मा वा अरे द्रष्टव्यः ( बृ० २। ४। ५ ) इत्यादिश्रुतिषु विजानाति निचाय्य द्रष्टव्य इत्यादिशब्दैः प्रतिपाद्यते। विज्ञाय प्रज्ञां कुर्वीत ( बृ० ४। ४। २१ ) इत्यत्राप्येवमेव। आत्मजिज्ञासापरिसमाप्तिकरं ज्ञानं प्रज्ञाशब्देनोच्यते। आत्मसाक्षात्कारस्थिरीकरणमिति यावत्। तत्साधनीभूतानवरतात्मभावना चोमित्येवात्मानं ध्यायत (मु०२।२।६) आत्मानमेव लोकमुपासीत ( बृ० १। ४। १५ ) आत्मा० निदिध्यासितव्यः ( बृ० २। ४। ५) इत्यादिश्रुतिषु ध्यायतेत्यादिशब्दैरुच्यते। आवृत्तिरसकृदुपदेशात् ( ब्र० सू० ४। १। १ ) इति सूत्रेणाप्येतदेवोच्यते। एवमासां श्रुतीनां सामीचीन्येनैकवाक्यता संपद्यते। एतेन 'वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्वि-

धित्सितम्'( श्रीभा० पृ० ८। ११) इत्यपास्तम्। प्रत्यक्षतापन्नस्य वाक्यार्थ-ज्ञानस्य मोक्षसाधनत्वेन प्रागभिहितत्वात्।

यत्तु 'तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते। विद्युपास्त्योरव्यतिरेकेणोपक्रमोपसंहारदर्शनात्। मनो ब्रह्मेत्युपासीत ( छा० ३। १८। १) इत्यत्र भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ( छा० ३। १८। ३)'( श्रीभा० पृ० ९। ५) इत्याद्युक्तं तत्रेत्थमुच्यते। उपक्रमोपसंहारयोरेकवाक्यतायै विद्युपास्त्योरेकार्थतावश्यकीति सत्यम्। किंतु सा विदेरुपासनार्थत्वेनेवोपास्तेर्वेदनार्थत्वेनापि सिध्यतीति 'वेदनमुपासनमित्यवगम्यते' इत्यस्य 'विद्युपास्त्योरव्यतिरेकेणोपक्रमोपसंहारदर्शनात्' इत्ययं हेतुर्न संभवति। किं चोपासनं नामासकृद्वेदनमेव न त्वन्यत्किंचित्। तदनुरोधेन विदेरसकृद्वेदनार्थत्वं त्वस्माभिरपि स्वी क्रियत एव।

या चानवरतभावना 'ध्यायत'( मु० २। २। ६) इत्यादिशब्दैः श्रुतिपूक्ता सैव ध्रुवा स्मृतिरित्युच्यते। ध्यै चिन्तायामिति धात्वर्थानुसारेण ध्यैधात्वर्थस्य ध्यानस्य तैलधारावदविच्छिन्नस्मृतिसंतानरूपत्वात्। यच्च 'ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' ( श्रीभा० पृ० ९। १२) इत्युक्तं तच्च ध्रुवा स्मृतिः स्वजन्यात्मसाक्षात्कारद्वारा सर्वग्रन्थिविमोक्षसाधनमित्येवं स्यात्।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥ ( मु० २।२।८)

इति श्रुतौ तस्मिन्दृष्ट इत्यनेनात्मसाक्षात्कारस्यैव ग्रन्थिविमोक्षसाधनत्वेन श्रवणात्। यत्तु भिद्यत इति श्रुत्यनुरोधेन ध्रुवस्मृतेर्दर्शनरूपत्वं 'सा च स्मृतिर्दर्शनसमानाकारा'( श्रीभा० पृ० ९। १४) इत्युक्तं तन्न। उक्तरीत्यैकवाक्यतासंभवे स्मृतेर्दर्शनरूपत्वकल्पनाया अन्याय्यत्वात्। यच्च तत्रोपष्टम्भकत्वेन 'भवति च स्मृतेर्भावनाप्रकर्षाद्दर्शनरूपता'( श्रीभा० पृ० ९। १८) इत्युक्तं तदपि न। तत्र दर्शनस्य दर्शनाभासरूपत्वात्। किं च दर्शनसामग्रीसत्त्वे दर्शनस्य सत्यत्वेऽपि दर्शनहेतूनां साहाय्यदानेन ध्रुवा स्मृतिर्दर्शनहेतुर्भवेन्न तु दर्शनरूपा। किं च दर्शनसामग्रीसत्वेऽनुभवभिन्नाया अपि स्मृतेः प्रत्यक्षानुभवत्वं स्वीकुर्वता त्वयाऽनुभवविशेषस्यैव महावाक्यादिजन्यस्य शाब्दज्ञानस्य प्रत्यक्षानुभवत्वं न स्वी क्रियत इति महदाश्चर्यम्।

यत्तु 'एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि—

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।

यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ (का० २।२३

इति' ( श्रीभा० पृ० १० । ४ ) इत्युक्तं तच्चिन्त्यम् । अस्यां श्रुतौ स्मृ रुल्लेखाभावेन 'स्मृतिं विशिनष्टि' इत्युक्तेरसामञ्जस्यात् ।

भक्तिशब्दार्थः

यत्तु 'एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते । उपासनपर्यायत्वा द्भक्तिशब्दस्य । अत एव श्रुतिस्मृतिभिरेवमभिधी यते तमेव विदित्वाऽति मृत्युमेति ( श्वे० ३ । ८ तमेवं विद्वानमृत इह भवति ( नृ० पू० उ० ६ नान्यः पन्था अयनाय विद्यते ( श्वे० ३ । ८)

नाहं वेदैर्न तपसा न दानेन न चेज्यया ( गी० ११ । ५३ )
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप । ( गी० ११ । ५४ )
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया । ( गी० ८ । २२ )'

( श्रीभा० पृ० १० । १९ ) इत्युक्तं तन्न । एवंरूपा ध्रुवानुस्मृतिर्हि प्रत्यक्ष पन्ना स्मृतिः । सा तु न भक्तिः । भक्त्या त्वनन्ययेति त्वयैवोदाहृतेन वाक्येन विरोधात् । तत्र ज्ञाने दर्शने तत्त्वेन प्रवेशे च साधनत्वे भक्तिर्निर्दिश्यते । प्रत्यक्षतापन्नायाः स्मृतेरेव भक्तित्वे तु त दर्शनरूपत्वेन दर्शनसाधनत्वासंभवात् । तर्हि का भक्तिरिति चेत्प्रेमवि रूपा मनोवृत्तिरिति गृहाण । किंच त्वदुक्तस्यात एवेत्यस्य कोऽर्थः । ध्रुवानु तेर्भक्तिशब्देनाभिधानादेवेति वा भक्तिशब्दस्योपासनपर्यायत्वादेवेति वा उभयथाऽपि तमेवं विदित्वेत्यादिश्रुतीनामुपन्यासस्तत्साधकत्वेन नोपयुज्य श्रुतिषु भक्तेरनुल्लेखात् ।

यत्तु 'वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्य प्रायणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात्तदुत्पत्तये सर्वाण्याश्रमकर्माणि या जीवमनुष्ठेयानि' ( श्रीभा० पृ० ११ । ८

ज्ञानोत्तरं न कर्मण आवश्यकत्वम्

इत्युक्तं तत्रोच्यते—आ प्रायणादनुवर्तमान यदेतद्ब्रह्मप्राप्तिसाधनस्य वेदनस्योच्यते तत्र त्रावश्यकमेवाथ वा क्वाचित्कम् । नाद्यः । मरण स्प्रागप्यद्वैतात्मसाक्षात्कारसंभवेन तादृशसाक्षात्कारोत्तरं तादृशज्ञाननिष्ठ्या वर्त

भेदस्याभावेनोक्तवेदनस्यासंभवात्। अथ तदानीमपि शरीरमनःप्रभृत्युपाधीनां सत्त्वेनेतरवद्धजीवदृष्ट्या ज्ञानिकर्तृकं वेदनं संभवतीति चेन्न। तस्य ब्रह्मप्राप्त्युत्तरकालभाविनो ब्रह्मप्राप्तिसाधनत्वाभावात्। अन्त्ये त्विष्टापत्तिरेव। यस्य प्रतिबन्धसत्त्वेनास्मिञ्जन्मनि नात्मसाक्षात्कारः किंतु जन्मान्तरे तस्य मरणपर्यन्तं वेदनावृत्तेरावश्यकत्वात्। तदेतदुक्तम्—'आ प्रायणात्तत्रापि हि दृष्टम्' (ब्र० सू० ४।१।१२) इति। तुपनिवृत्तिपर्यन्तं तण्डुलावघातस्येवात्मसाक्षात्कारपर्यन्तं वेदनावृत्तेरावश्यकत्वेन कस्यचिन्मरणपर्यन्तं तदुत्तरं जन्मान्तरेऽपि च वेदनं दृष्टमित्यर्थः। अथवा न तत्सूत्रमात्मविद्याविषयकम्। किंत्वभ्युदयफलकविद्यान्तरविषयकमिति बोध्यम्। एवं चात्मसाक्षात्कारपर्यन्तं वेदनावृत्तिः सिद्धा।

साक्षात्कारोत्तरं च न कर्मणः कश्चिदुपयोगः। न केवलमुपयोगाभावः। किं तु तदानीं भेदस्य सत्यत्वेन प्रतिभासाभावात्कर्मणोऽसंभव एव। लोकसंग्रहार्थं लोकदृष्ट्या क्रियमाणं च कर्म न विद्यायां तत्फले मोक्षे वा कंचिद्विशेषमाधत्ते। कर्म तु बद्धावस्थायां चित्तशुद्ध्यात्मजिज्ञासाद्वारा विद्योत्पत्तावुपयुज्यते। 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' (ब्र०सू०४।१।१६) इति सूत्रेणाप्येतदेवोक्तम्। तत्कार्यायैव विद्याख्यकार्यायैव। 'विविदिषन्ति यज्ञेन' (बृ० ४।४।२२) इति श्रुतौ तथा दर्शनादिति तदर्थः। 'सहकारित्वेन च' (ब्र० सू० ३।४।३३) इति सूत्रस्याप्येतदेव तात्पर्यम्। चोऽप्यर्थे। विद्यासहकारित्वेनापि सत्त्वशुद्धिद्वारा विद्यासाधनत्वेनापि नित्यकर्माण्यनुष्ठेयानीति तदर्थः।

यच्च विवेकादिसाधनसप्तकमुक्तं (श्रीभा० पृ० ११।१५) तदस्मदभिमतसाधनचतुष्टयादिसाधनेषु यथायोगमन्तर्भवति। कामानभिष्वङ्गरूपस्य विमोकस्य शमे, अभ्यासस्य निदिध्यासने, अनवसादस्य दैन्याभावरूपस्य समाधाने, अनुद्धर्षस्यातिसंतोषाभावरूपस्यापि समाधानेऽन्तर्भावः। चित्तशुद्धेश्च ज्ञानसाधनत्वेन तया स्वसाधनीभूतस्य कायशुद्धिरूपस्य विवेकस्य, पञ्चमहायज्ञाद्यनुष्ठानरूपक्रियायाः, सत्यार्जवादिकल्याणानां चाक्षेपः सुलभ एव।

एवं साधनसहितस्य विहितकर्मानुष्ठानं चित्तशुद्धिद्वाराऽऽत्मजिज्ञासां जनयति। यत्तु 'एवं नियमयुक्तस्याश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति' (श्रीभा० पृ० १२।७) इत्युक्तं तन्न। मोक्षसाधनीभूतात्मैक्यविद्यानिष्पत्तौ द्वैतप्रतिभासमूलककर्मानुष्ठानस्य केनापि प्रकारेणोपयोगासंभवात्।

कर्मण उपयोगः

विशिष्टाद्वैतवादिनो भवतो मते चात्मोपासनारूपकर्मण आत्मविज्ञानसाधनत्वेऽप्यग्निहोत्रादिविहितकर्मणश्चित्तशुद्धिद्वारैवात्मविज्ञानसाधनत्वं संभवतीति 'आश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिः' इत्युक्तिश्चिन्त्यैव। एवं च कर्मणश्चित्तशुद्धिद्वाराऽऽत्मैक्यज्ञानसाधनत्वेऽपि साक्षात्तत्साधनत्वाभावेन न विद्यायाः कर्माङ्गकत्वं नतरां कर्मसमुच्चितत्वम्। ननु

विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥ (ई० ११)

इति श्रुतौ सहशब्देन विद्याकर्मणोः साहित्यमुच्यते। अविद्याशब्देन कर्मणोऽभिधानादिति चेत्-भ्रान्तोऽसि। अत्र सहशब्दाभावात्। यतोऽत्र 'स ह' इति पदद्वयमेवोचितम्। यस्तद्वेदेति यच्छब्दस्य नियमेन तच्छब्दापेक्षणात्।

विद्याकर्मणोर्न समुच्चयः

अथ सहशब्दाभावेऽपि चशब्दद्वयेन साहित्यं बोध्यत एवेति चेत्—उच्यते। सहशब्देन चशब्दद्वयेन वा बोध्यमानं विद्याकर्मणोः साहित्यं वेदन एव। यस्तद्वेदेति निर्देशात्। न तु तयोः फलदाने। वेदनेऽपि च तत्साहित्यं यदृच्छया यस्य कस्यचिदेव। यो वेदेति निर्देशात्। न तु सर्वेषां मनुष्याणां साहित्येनैव वेदनमिति नियमः। यश्चैतद्द्वयं तत्त्वतो वेत्ति सोऽनेन साधनद्वयेन तत्तत्कार्यं साधयतीति श्रुतेस्तात्पर्यम्। तत्र मृत्युतरणोपायः कर्म। अमृतप्राप्त्युपायो ज्ञानम्। मृत्युशब्देन च मृत्युप्रापकाः कामादयो मनोमला गृह्यन्ते। एतदुक्तं भवति–फलाभिसंधिरहितेन विहितकर्मणा कामादींश्चित्तमलान्दूरीकृत्य चित्तं संशोध्य मोक्षाधिकारी भूत्वा विद्यया मोक्षं लभत इति। तथा च नेयं श्रुतिर्ज्ञानकर्मसमुच्चयसाधिका। प्रत्युतास्माच्छ्रुतिवाक्यात्कर्मणश्चित्तशुद्धावेवोपयोग इत्यवगम्यते। ननु तर्हि ज्ञानिना जनकेन

इयाज सोऽपि सुबहून्यज्ञाञ्ज्ञानव्यपाश्रयः।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया॥ (वि० पु० ६।६।१२)

इत्येवं कर्म किमर्थं कृतमिति चेत्—उच्यते। जनकस्य मनोमलाः पूर्वं ज्ञानेन दग्धप्राया एव। तथापि निर्वापिताङ्गारतुल्या येऽवशिष्टास्तानपि क्षपयितुं यज्ञादिकं कर्म चकारेति तत्तात्पर्यम्। अनेन चैतादृशा अपि चित्तमला विद्यातका इति बोध्यते। किं च ज्ञानिनोऽपि सततस्तस्य चित्तशुद्धिस्थिरतायै लोकसंग्रहार्थं वा कर्मणि प्रवृत्तिः संभवतीत्यपि बोध्यम्।

यत्तु 'नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न संपत्स्यन्ते । फलसाधनेतिकर्तव्यताधिकारिविशेषनिश्चयादृते कर्मस्वरूपतत्फलतत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात्' (श्रीभा० पृ० १३ प० ५) इत्युक्तं तन्न । वस्तुनो नित्यत्वानित्यत्वादिकं गुरुमुखादिभ्यः श्रुतवतो विश्वासेन च तदेव निश्चितं भावयतः कर्मस्वरूपाद्यनिर्णयेऽपि जैमिनिकृतमीमांसाश्रवणमन्तरेणापि च साधनचतुष्टयसंपन्नत्वसंभवात् । लोके च तादृशानामात्मजिज्ञासादर्शनाच्च । विश्वासो हि किं न साधयति । यथा यज्ञादिकर्म स्वर्गादिसाधनमिति गुरुमुखादिभ्यः श्रुतवतस्तत्र विश्वासेन कर्मानुष्ठानमपि मीमांसाश्रवणमन्तरेण लोकैः क्रियमाणं संदृश्यते तद्वत् । नन्वेवं साधनचतुष्टयसंपत्तावपि साधनचतुष्टयस्य ब्रह्मजिज्ञासासाधनत्वं मीमांसाश्रवणमन्तरेण न संपत्स्यते । श्रुतमीमांसो हि विनियोजकानि श्रुतिलिङ्गादीनि प्रमाणान्यवबुध्यमानस्तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत् (बृ० ४ । ४ । २३) इत्यादौ शमादीनामात्मदर्शने विनियोगं कर्तुं शक्नोति नान्य इति चेन्मैवम् । श्रुत्यादीनां विनियोजकत्वं हि न जैमिनिनाऽपूर्वं प्रतिपाद्यते । किं तु लोकसिद्धमेवानूद्यते । अन्यथाऽश्वमानयेत्यादौ द्वितीयाश्रुत्याऽश्वस्यानयनाङ्गत्वमित्यश्रुतमीमांसेनैतद्वाक्यं श्रुतवताप्यश्वस्यानयनाङ्गता न बुध्येतेति बहुव्याकुली स्यात् । तथा च शब्दशक्तिस्वभावसिद्ध एव विनियोग इति साधनचतुष्टयस्य जिज्ञासासाधनत्वं व्युत्पन्नेन जैमिनिकृतमीमांसाश्रवणं विनाप्यवगन्तुं शक्यते । एतेन 'एषां साधनत्वं च विनियोगावसेयम् । विनियोगश्च श्रुतिलिङ्गादिभ्यः । स च तार्तीयः' (श्रीभा० पृ० १३ प० ८) इत्यपास्तम् । नन्वेवमुत्तरमीमांसाश्रवणं विनापि गुरुमुखादिभ्य आत्मावगतिः स्यादिति चेत्—अस्तु । नैतावताऽऽत्मजिज्ञासापेक्षया नियमेन पूर्ववृत्तत्वं जैमिनिकृतकर्ममीमांसायाः संभवति । न च 'तस्मादेवंवित्' (बृ० ४ । ४ । २३) इति श्रुतावेवंविदित्यनेनात्मज्ञानमनूद्य ततः शमादिसाधनैरात्मानं साक्षात्कुर्यादित्युक्तत्वात्कथं शमादीनां जिज्ञासासाधनत्वमवगम्यत इति वाच्यम् । उक्तश्रुतौ शमादीनामात्मसाक्षात्कारसाधनत्वोक्तावपि तेषां जिज्ञासासाधनत्वस्यानिषेधात् । आत्मज्ञानमनूद्येत्यपि न सम्यक् । एवंशब्दस्य पूर्वोक्तपरामर्शकत्वेन 'एवंवित्' इत्यस्य 'आत्मा कर्मतत्फलसंबन्धशून्यः' इत्यापाततो जानन्नित्यर्थात् । किंच 'प्रशान्तचित्ताय शमान्विताय' (मु० १ । २ । १३)

ब्रह्मजिज्ञासायां न कर्ममीमांसाया अवश्यापेक्षा

इतिश्रुतौ श्रवणात्पूर्वभावित्वं शमादीनां स्पष्टमेवोच्यते। तेन च तेषामात्मविचारापेक्षया पूर्ववृत्तत्वं सिध्यति। आत्मविचारश्च श्रवणादिरूपः। श्रवणादिकाले तदुत्तरमपि च शमादय आवश्यका एवेति त्वन्यत्।

यत्तु 'उद्गीथाद्युपासनानां कर्मस्वरूपाधिगमापेक्षा सर्वसंमता' (श्रीभा० पृ० १३ प० १३) इत्युक्तं तदस्तु नाम। तथापि कथं जैमिनिकृतपूर्वमीमांसाया आत्मविचारापेक्षया नियमेन पूर्ववृत्तत्वं संभवति। तामन्तरेणापि सामान्यतः कर्मस्वरूपाधिगमसंभवात्। उद्गीथादिविचारस्य प्रासङ्गिकत्वाच्च न तेन पूर्ववृत्तत्वं निश्चेतुं शक्यमित्यपि प्रागुक्तं (पृ०६०प०४) न विस्मर्तव्यम्॥ ६॥

ब्रह्मजिज्ञासायां साधनचतुष्टयसंपन्नोऽधिकारी प्रदर्शितः। तेन च मोक्षसिद्ध्यर्थमात्मज्ञानं संपादनीयम्। तत्र कीदृश आत्मेति चेत्—उच्यते।

आत्मा प्रोक्तो निर्विशेषो माया तच्छक्तिरीरिता।
जीवस्तत्प्रतिबिम्बः स्यादीशः सोपाधिकः स्मृतः॥ ७॥

परमात्मा निर्विशेष इति मायावादिनां सिद्धान्तः। यत्तु 'निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनीदं प्रमाणमिति न शक्यते वक्तुम्। सविशेषवस्तुविषयत्वात्सर्वप्रमाणानाम्' (श्रीभा० पृ० २८ प० २) इत्युक्तं तत्रोच्यते। प्रमाणानां प्रमाणान्तरविषयत्वं स्वीक्रियते न वा। आद्ये तेषामपि प्रमाणान्तराणां प्रमाणान्तरविषयत्वं वाच्यमित्यनवस्थापातः। अन्त्ये प्रमाणान्तराविषयत्वात्प्रमाणानामप्रमाणत्वं स्यात्। तथा सति व्यवहारलोपप्रसङ्गः। अथ यदि न प्रमाणानामप्रमाणत्वं किंतु प्रमाणसिद्धत्वमेव। तदर्थं च न प्रमाणान्तरापेक्षा। किंतु दीपस्य स्वप्रकाशत्वमिव प्रमाणानां स्वयंप्रमाणत्वमेवेति चेत्तर्हि सर्वप्रमाणोपजीव्यस्य परमात्मनः स्वयंप्रमाणत्वं कुतो नेष्यते। किं च प्रमाणानि न स्वविषयत्वेन परं ब्रह्म बोधयन्ति। तदुक्तं विष्णुपुराणे 'यस्मिन्ब्रह्मणि सर्वशक्तिनिलये मानानि नो मानिनां निष्ठायै प्रभवन्ति' (वि० पु० ६।८।५७) इति। मानिनां प्रामाणिकानां मानानि प्रमाणानि निष्ठायै परिच्छेदाय न प्रभवन्ति समर्थानि न भवन्तीति तदर्थः। किं तु यतः प्रमाणान्यस्तित्वं प्राप्तानि ततः प्रमाणप्रमेयादिसर्वव्यवहारोपजीव्यं किंचित्स्यादित्येवं दूरत एव स्थित्वा स्वमूलकारणत्वेन सूचयन्ति। न ह्येतावताऽप्रमाणत्वं तस्य। यथा रूपवद्वस्तुप्रकाशने समर्थो दीपः रूपवन्तमप्यन्धकारं स्वयं दूरत एव स्थित्वा सूचयति तद्वत्। तथा च श्रुतौ 'तमसः परस्तात्' (श्वे० ३।८) इत्युच्यते।

आत्मनि प्रमाणम्

यथा च खद्योतस्थं तेज आदित्यं प्रकाशयितुमसमर्थं तथा सर्वप्रकाशक आदित्योऽपि परं ब्रह्म प्रकाशयितुमसमर्थः। एतदभिप्रायेणैव श्रुतौ 'ज्योतिषां ज्योतिः' ( बृ० ४ । ४ । १६ ) इत्युच्यते ।

आत्मशक्तिर्माया

परं ब्रह्म स्वाभिन्नशक्तिमत् स्वापेक्षयाऽभिन्ना या शक्तिस्तदाश्रयम् । शक्तेरनुद्भूतत्वादीदृशं तादृशमिति वक्तुमशक्यं निर्गुणं निर्विशेषमेकं सद्रूपम् । सृष्टिकाले च सा शक्तिः स्वाश्रयमुपजीव्योद्भूताम्बुनः सकाशाद्बुद्बुदवद्भिन्नेव भवति । अतस्तत्प्रतिबिम्बितो जीवः स्वमपि परमात्मनः सकाशाद्भिन्नमात्मानं मन्यते । एवं तादृशशक्तिपरिणामभूतं जगच्च परमात्मनः सकाशाद्भिन्नं मन्यते । उद्भूतशक्तिमद्ब्रह्मैवेश्वरपदवाच्यम् । अयं चेश्वरः सगुणः सविशेष उद्भूतशक्त्या कल्पितः । ननु किमर्थमयं शक्त्या कल्पित इति मन्यते । अयमेव मुख्योऽस्तु न तु तदतिरिक्तं निर्गुणं निर्विशेषं किंचित् । जगदुत्पत्तिस्थितिलयानां तेनैव सिद्धेरिति चेन्न । परमात्मस्वरूपं हि श्रुत्येकसमधिगम्यं यथाश्रुत्येवाङ्गीकार्यम् । श्रुतौ च क्वचिन्निर्गुणं क्वचित्सगुणं च वर्ण्यते । द्विविधश्रुतिनिर्वाहायोक्तरीतिरेव साधीयसी । ननु निर्गुणश्रुतेर्हेयगुणराहित्ये तात्पर्यमस्त्विति चेन्न । गुणशब्दस्य सामान्यमुखप्रवृत्तस्य संकुचितार्थत्वे मानाभावात् । किं च निर्गुणश्रुत्या परमात्मनि गुणानां निषेधः प्रतिपाद्यते । निषेधस्य च प्राप्तिपूर्वकत्वात्परमात्मनि गुणप्राप्तिर्वक्तव्या । सा च न प्रत्यक्षेण । परमात्मनः प्रत्यक्षविषयत्वाभावात् । किं त्वनुमानेन । परमात्मनो जगत्सर्गस्थितिलयकर्तृत्वं ज्ञात्वा तेन हेतुना सर्गाद्युपयोगिनां सर्वज्ञत्वादीनां गुणानां तत्रानुमानं संभवति । न तु हेयगुणानां केनापि प्रकारेण तत्रानुमानसंभवः । तथा च हेयगुणानां प्राप्त्यभावेन कथं तन्निषेधे निर्गुणश्रुतेस्तात्पर्यं कल्पयितुं शक्यते । किंच यो यो विशेषः स स सामान्यप्रकृतिको यथा घटशरावादयस्तत्सामान्यभूतमृत्प्रकृतिका इतिव्याप्तिमूलकेनानुमानेनापि निर्विशेषमेव सिध्यति । तदुक्तं व्यासचरणैः 'सामान्यमात्रोपसंहारे च कृतोपक्षयमनुमानं न विशेषप्रतिपत्तौ समर्थम्' ( योगसू० भा० १ । २५ ) इति । निर्विशेषशुद्धब्रह्माङ्गीकारादेव 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह' ( तै० २ । ४ ) इति श्रुतिसंगतिः । अन्यथा ब्रह्मणः सगुणत्वेन वाग्विषयत्वात्तथा रामानुजीयैरङ्गीकाराच्च तदसंगतिः स्यात् । न च गुणानामसंख्यत्वेनेय-

जीवेश्वरौ

आत्मनो निर्गुणत्वम्

त्ताया अभावात्कार्त्स्न्येन वाग्विषयत्वाभाव इति तच्छ्रुतितात्पर्यमिति वाच्यम्। अप्राप्येतिपदस्वारस्यभङ्गापत्तेः । गुणानामन्तमप्राप्येति व्याख्यानं त्वध्याहारस्वीकारात्क्लिष्टम् । अप्राप्येत्यस्य कर्माकाङ्क्षायां वाङ्निवृत्त्यवधित्वेन यत इति यच्छब्दनिर्दिष्टस्यैव प्रत्यासत्त्या लाभाच्च । न चाप्राप्येत्यस्य कर्माकाङ्क्षायां यच्छब्दनिर्दिष्टस्य कृत्स्नगुणविशिष्टस्य परमात्मन एवाक्षेपो भवतु । तत्र च वाक्कर्तृकप्राप्त्यभावो विशेष्ये परमात्मनि बाधितस्तद्विशेषणीभूतेषु गुणेष्वपि बाधितो विशेषणविशेषणे गुणगतकार्त्स्न्ये पर्यवसितो भविष्यति । 'विधिप्रतिषेधौ विशेषणे पर्यवस्यतः सति विशेष्ये बाधे' इति न्यायादिति वाच्यम् । परमात्मनः कृत्स्नगुणविशिष्टत्वेन तत्राप्रकृतत्वात् । उक्तन्यायेन निर्वाहस्यागतिकगतित्वाच्च। एतेन 'यतो ब्रह्मानन्दात्सकाशात्तस्य पारमप्राप्य वाचां मनसश्च निवृत्तिरित्यर्थः' इत्यपास्तम् । 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः' (तै० २। ८) इत्येवं ब्रह्मानन्दे वाग्विषयतायाः श्रुत्यैव स्वयमङ्गीकृतत्वाच्च । मनुष्यानन्दस्य जीवैरनुभूतत्वेनोत्तरोत्तरं शतगुणितक्रमेण ब्रह्मानन्दस्य मनसा कल्पयितुं शक्यत्वाच्च । निर्गुणस्य तु वस्तुनो लोके क्वाप्यनुभवाभावेन निर्गुणं ब्रह्म न मनसा कल्पयितुं शक्यम् । न च त्वदभिमतस्य निर्विशेषब्रह्मणोऽपि 'निर्गुणम्' (चू० ७) इति श्रुत्या प्रतिपादितत्वेन वाङ्निवृत्तिश्रुतिरसंगतेति वाच्यम् । वाचो निवर्तन्त इत्यस्य वाचो विधिमुखेन प्रतिपादयितुं न प्रभवन्तीत्यर्थात् । निर्गुणमिति श्रुतिस्तु नेदृशमिति प्रतिपादयति । किं तु केवलं गुणान्निषेधति । अवश्यं चैतद्विज्ञेयम् । इतरथा 'वाचो निवर्तन्ते' इति श्रुतिः स्वयमेव वागविषयत्वेन रूपेण ब्रह्म प्रतिपादयन्ती मूकोऽहमित्युक्तिरिव व्याहता स्यादिति ॥ ७ ॥

यदपि 'यस्तु निर्विशेषं वस्तु स्वानुभवसिद्धमिति स्वगोष्ठीनिष्ठः समयः सोऽप्यात्मसाक्षिकसविशेषानुभवादेव निरस्तः' (श्रीभा० पृ० २८ प० ४) इत्युक्तं तत्रोच्यते—

सामान्या धीर्निर्विशेषा न धीत्वात्सविशेषता ।
निर्विशेषे प्रमाणं स्यादागमः सोऽपि लौकिकः ॥ ८ ॥

नास्माभिरिदमहमदर्शमित्यादिर्लौकिकः सविशेषोऽनुभवः परमात्मशक्तिपरिणामभूतजगदन्तर्गतोऽपह्नूयते । किंतु विशेषस्य सामान्यप्रकृतिकत्वाल्लौकिकसविशेषानुभवमूलप्रकृतिभूतो निर्विशेषोऽनुभवस्त्वयाऽपह्नूयत इति वैचित्र्यम्।

यो यो विशेषः स स सामान्यप्रकृतिकः, यथा घटशरावादयस्तत्सामान्यभूतमृत्प्रकृतिका इति व्याप्तिस्तु सर्वत्राव्यभिचारितैव । लौकिकं ज्ञानं मनोवृत्तिविशेषरूपं साश्रयं सविषयं सविकल्पकं च विशेषरूपम् । तदपेक्षया साश्रयं सविषयं निर्विकल्पकं सामान्यम् । तदपेक्षया निर्विषयं साश्रयं सामान्यम् । ज्ञानं हि प्रथमत आश्रमपेक्षते ततो विषयम् । तदपेक्षयापि निराश्रयं सामान्यम् । अत्र च धियो धीत्वं वर्तते । तदपेक्षयापि सद्रूपं सामान्यम् । यत्र च धीत्वमपि न विद्यते । एतन्मूलक एवानुभूतिरेव सतीति सिद्धान्तः । प्रसिद्धश्चायं निर्विशेषानुभवस्तुरीयावस्थायाम् ।

यच्च ' केनचिद्युक्त्याभासेन सविशेषान्निष्कृष्यमाणो निर्विशेषोऽनुभवः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैर्निष्कष्टव्य इति निष्कर्षहेतुभूतैः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैः सविशेष एवावतिष्ठते ' ( श्रीभा० पृ० २८ पं० ७ ) इत्युक्तं तदपि चिन्त्यम् । निष्कर्षो हि पृथक्करणम् । यथा पक्षिणः सकाशात्पशोः । तच्च पशुत्वेन, पक्षाभावेन वा भवति । न हि निष्कर्षो भावरूपेणैव केनचित्स्वभावेन भवतीति राजाज्ञास्ति । तत्र पक्षाभावेन सविशेषत्वं पशोर्न वक्तुं शक्यते । पशुत्वेन तदस्तीत्यन्यदेतत् । तथा च निर्विशेषानुभवस्य विशेषाभावेन पृथक्करणे सविशेषत्वं कथमापाद्यते । नीरूपस्य वायोस्तेजोवत्तापेक्षया रूपाभावेन निष्कर्षे कृते सति तत्र रूपाभावेनैव रूपवत्त्वं बालोऽपि न प्रत्येति । विशेषाभावेनापि विशेषवत्त्वेऽङ्गीकृते स्वभावस्य भावत्वापत्तौ स्वरूपहानिरेव स्यात् । अत एव श्रीमद्व्यासचरणैर्योगसूत्रभाष्ये ( पा० १सू०९ ) ' अनुत्पत्तिधर्मा पुरुष इत्युत्पत्तिधर्मस्याभावमात्रमवगम्यते न पुरुषान्वयी धर्मः ' इत्युक्तम् । न च विशेषप्रकृतिभूतत्वेन मायावाद्यभिमताया निर्विशेषानुभूतेर्विशेषप्रकृतित्वरूपो विशेषोऽवर्जनीय इति वाच्यम् । विशेषप्रकृतित्वस्य विशेषरूपत्वे पुनरपि तादृशविशेषप्रकृतित्वमन्यो विशेष इत्यनवस्थापातात् । तथा च यथा रामानुजमते ब्रह्मणः सविशेषत्वेऽपि सविशेषत्वमेव विशेषश्चेत्तादृशविशेषसहितत्वमन्यो विशेष इत्यनवस्थावारणाय सविशेषत्वं न विशेष इत्यङ्गीकार्यं तथैव मायावादिमतेऽपि विशेषप्रकृतित्वं न विशेष इत्यङ्गी क्रियते । अथ सविशेषत्वं न विशेषः किंतु विशेषराहित्याभावमात्रमिति चेद्विशेषप्रकृतित्वमपि भासमानविशेषानधिष्ठानत्वाभावमात्रमिति गृहाण । एवं धीत्वं न भावरूपो धर्मः । किंतु जडत्वाभावमात्रम् । तथा स्वयंप्रकाशत्वमपि परप्रकाश्यत्वा-

धीत्वादयो न विशेषाः

भावमात्रमेव । एतेन ' धियो हि धीत्वं स्वयंप्रकाशता च ' ( श्रीभा० पृ० २८ प० १२ ) इति सविशेषत्वापादनमपास्तम् । एवं नित्यत्वं विनाशाभावमात्रम् एकत्वं द्वितीयाभावमात्रमिति बोध्यम् । 'निर्गुणम् ' ( चू० ७ । २ ) 'निरञ्जनम् '( श्वे० ६ । १९ ) इत्यादिरागमश्च निर्विशेषे वस्तुनि प्रमाणम् ।

यत्तु ' शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यम् । पदवाक्यरूपेण प्रवृत्तेः । प्रकृतिप्रत्यययोगेन हि पदत्वम् । प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम् । पदभेदश्चार्थभेदनिबन्धनः पदसंघातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेन निर्विशेषवस्तुप्रतिपादनासामर्थ्यान्न निर्विशेषवस्तुनि शब्दः प्रमाणम् ' ( श्रीभा० पृ० २८ प० १९ ) इत्यनेन ग्रन्थेन निर्विशेषवस्तुन

निर्विशेषस्यापि शब्दात्प्रतीतिः

शब्दप्रमाणकत्वाभावप्रतिपादनं तत्सर्वं यदा शब्दो वाच्यवृत्त्या विधिमुखेन स्वरूपलक्षणतश्च किंचिद्वस्तु प्रतिपादयितुं प्रवर्तते तदैव नान्यथा । तथा हि । शब्दस्यार्थप्रतिपादनेऽनेकप्रकारा दृश्यन्ते । शब्दो हि क्वचिद्विधिमुखेनार्थं प्रतिपादयति क्वचिन्निषेधमुखेन तथा क्वचित्स्वरूपलक्षणेन क्वचित्तटस्थलक्षणेन । एवं क्वचिद्वाच्यवृत्त्या क्वचिल्लक्षणयेति । यद्यपि व्यञ्जना वृत्त्यन्तरं तथापि तत्र शक्तिलक्षणान्यतरदावश्यकमेवेति न तस्या विविक्तं किंचिदप्युदाहरणम् । तत्र निर्विशेपं वस्तु 'ईदृक् तादृशम्' इति वक्तुमशक्यमिति यद्यपि शब्दो विधिरूपेण निर्विशेषं वस्तु प्रतिपादयितुं न शक्नोति तथापि निषेधरूपेण प्रतिपादयितुं शक्नोत्येव । यथा निर्गुणम् ( चू० ७ । २ ) निरञ्जनम् ( श्वे० ६ । १९ ) अशब्दमस्पर्शम् ( का० ३ । १५ ) इत्यादि । अत्र च लक्षणावृत्त्या शब्दो निर्विशेषं ब्रह्म बोधयति निर्गुणादिपदवाच्यत्वस्यापि वस्तुतस्तत्राभावात् । तथा यद्यपि शब्दो निर्विशेषं वस्तु स्वरूपलक्षणतो न प्रतिपादयति तथापि तटस्थलक्षणतः प्रतिपादयितुं शक्नोत्येव । यथा ' यतो वा इमानि भूतानि जायन्ते ' ( तै० ३ । १ । १ ) इत्यादि । यद्यप्येतत्तटस्थलक्षणं सोपाधिकस्य सविशेषस्य ब्रह्मणस्तथापि तदुपजीव्यस्य निर्विशेषस्य तद्द्वारा संभवतीति बोध्यम् । आगमप्रतिपाद्यत्वं चैतल्लोकदृष्ट्या बोध्यम् । आगमस्यापि लौकिकत्वात् । श्रुतौ परमार्थसत्त्वाभावस्य 'वेदा अवेदाः'(बृ० ४ । ३ । २२) इति श्रुत्यैव स्वयं प्रतिपादनात् ॥८॥

यत्तु ' प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदभिन्नस्य न निर्विशेपवस्तुनि प्रमाणभावः ' ( श्रीभा० पृ० २९ प० १ ) इत्युक्तं तत्रोच्यते—

सन्मात्रग्राहि संप्रोक्तं प्रत्यक्षं निर्विकल्पकम्।
भेदसंस्थानजातीनां नान्योन्यात्मकता भवेत्॥ ९॥

रामानुजीयैरङ्गीकृतस्य निर्विकल्पकस्य स्वकपोलकल्पितत्वेन तस्य निर्विशेषवस्तुनि प्रमाणभावो मा भून्नाम। वस्तुतो निर्विकल्पकं तु विकल्पेन रहितम्। विकल्पश्च नामजात्यादिर्विशेष एवेति तद्रहितं प्रत्यक्षं निर्विकल्पकम्। यथाऽयं देवदत्त इति विशेषज्ञानात्प्राक् तदपेक्षया सामान्यज्ञानमयं ब्राह्मण इति। ततः प्राक् तदपेक्षया सामान्यज्ञानमयं मनुष्य इति। ततोऽपि पूर्वं तदपेक्षया सामान्यज्ञानमयमुन्नतः पदार्थ इति। ततोऽपि पूर्वमिदं किंचिदिति। अत्र यथाकथंचिच्छब्देन प्रदर्शनीयमित्येव किंचिच्छब्दोपन्यासः। न तु तज्ज्ञानस्य किंचित्त्वधर्मप्रकारकत्वम्। प्राथमिकज्ञाने कोऽपि धर्मो न भासत इत्येवेदं किंचिदितिशब्दप्रयोगतात्पर्यम्। तथैवानुभवात्। इदमेव हि वस्तुतो निर्विकल्पकम्। अस्य च निर्विशेषवस्तुनि प्रमाणभावः संभवत्येव। तुरीयावस्थायां हि तथैव प्रत्यक्षम्। सुप्तोत्थितस्य ब्रहमिदमिति विशेषज्ञानात्प्राक् क्षणं योऽनुभवो यत्र ज्ञातृज्ञेययोरपि ज्ञानात्पार्थक्येन न प्रतीतिस्तद्रूपं हि तत्।

निर्विकल्पकप्रत्यक्षस्य सन्मात्रग्राहित्वम्

यत्तु 'निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणम्। द्वितीयादिपिण्डग्रहणं सविकल्पकमित्युच्यते। तत्र प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताकारता न प्रतीयते। द्वितीयादिपिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिः' (श्रीभा० पृ० २९ पं० ९) इत्युक्तं तदयुक्तम्। इदं किंचिदित्यादिनिर्विशेषप्रतीतेः प्रसिद्धाया अपलापायोगात्। निर्विकल्पकशब्दे विकल्पशब्दस्यानुवृत्त्यर्थकत्वे प्रमाणाभावाच्च। किंच तादृशप्रत्यक्षभेदद्वयस्य निरनुवृत्तिकसानुवृत्तिकशब्दाभ्यामेव व्यवहारो युक्तो न तु निर्विकल्पकसविकल्पकशब्दाभ्याम्। किं च प्रथमप्रतीतिजन्यः संस्कारो यस्य नष्टस्तस्य द्वितीयप्रतीतावप्यनुवृत्तिर्न प्रतीयत इति द्वितीयप्रतीतेरपि निर्विकल्पकत्वं स्यात्। अपि च गवादेः प्रथमप्रतीतावेव सामान्यलक्षणप्रत्यासत्त्या सकलगोव्यक्त्यलौकिकप्रत्यक्षमिति वैशेपिकरीत्यभ्युपगमे तस्य सविकल्पकत्वं स्यादिति यत्किंचिदेतत्।

निष्प्रकारकमेव निर्विकल्पकम्

यत्तु 'प्रत्यक्षस्य सविशेषविषयत्वेन प्रत्यक्षादिदृष्टसंबन्धविशिष्टविषयत्वाद-

अनुमानेन निर्विशेषवस्तुसिद्धिः

नुमानमपि सविशेषविषयमेव' (श्रीभा० पृ० ३० प० १९) इत्युक्तं तदपि चिन्त्यम्। यो यो विशेषः स स सामान्यप्रकृतिको यथा घटशरावादयो भेदास्तत्सामान्यभूतमृत्प्रकृतिका इति प्रागुक्त (पृ०७१।प०१) व्याप्तिसत्त्वाद्विशेषे सामान्यप्रकृतिकत्वेऽनुमिते निर्विशेषस्य सामान्यस्य सिद्धत्वात्। ये तु 'वस्तुगतस्वभावविशेषैस्तदेव वस्तु निर्विशेषमिति वदञ्जननीवन्ध्यात्वप्रतिज्ञावत् स्ववाग्विरोधित्वमपि न जानाति' (श्रीभा०पृ०३१ प०२) इत्युपहासं कुर्वन्ति तैरयमुपहासः कस्य कृत इति त एव प्रष्टव्याः। मायावादिनस्तु भासमानविशेषानधिष्ठानत्वाभावमात्रेण निर्विशेषं वस्तु वदन्ति न तु केनचिदपि स्वभावविशेषेणेति। तादृशं च निर्विशेषं ब्रह्म तुरीयावस्थायां निर्विकल्पकप्रत्यक्षेण गृह्यत इत्यनुपदमेवोक्तम्। अत्र च ज्ञातृज्ञेययोरप्यनवभास एव। किं त्विदं प्रत्यक्षं सन्मात्रग्राहि। न तु भेदविषयम्। अत्र च ग्राह्यग्राहकभेदोऽपि नास्ति किमुत विषयगतो भेदः। सन्मात्रग्राहीत्युक्तिरौपचारिकी। तथा 'निर्विशेषं ब्रह्म निर्विकल्पकप्रत्यक्षेण गृह्यते' इत्युक्तिरप्यौपचारिकी। एतदेवाद्वैतं 'सदेव' (छा० ६।२।१) इत्यादिश्रुतिभिः प्रतिपाद्यत इति शास्त्रप्रत्यक्षयोरविरोध एव। निर्विशेषानुभूतिरूपमिदं ब्रह्मोद्भूतयाऽनाद्यविद्यारूपतच्छक्त्या रूपान्तरं प्राप्तमिव ज्ञातृज्ञेयसहितं यद्भासते तदेवेदं किंचिदित्यादिकं लौकिकं निर्विकल्पकादिकं प्रत्यक्षम्। घटोऽयं न पट इत्यादिलौकिकप्रत्यक्षे तु ग्राह्यग्राहकभेदो घटपटादिभेदश्च भासत एव।

ननु भेदो विकल्पासहत्वाद्दुर्निरूपः। तथा हि—भेदस्तावन्न वस्तुनः स्वरूपम्।

भेदस्य दुर्निरूपत्वम्

वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत्सर्वस्माद्भेदव्यवहारप्रसक्तेः। न च स्वरूपे गृहीतेऽपि भिन्न इति व्यवहारस्य प्रतियोगिसव्यपेक्षत्वात्तत्स्मरणाभावेन तदानीमेव न भेदव्यवहार इति वाच्यम्। स्वरूपमात्रभेदवादिनो हि प्रतियोगिसव्यपेक्षा च नोत्प्रेक्षितुं क्षमा। स्वरूपभेदयोः स्वरूपत्वाविशेषात्। यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षः, भेदव्यवहारोऽपि तथैव स्यात्। हस्तः कर इतिवद्घटो भिन्न इति पर्यायत्वं च स्यात्। नापि धर्मः। धर्मत्वे सति तस्य स्वरूपाद्भेदोऽवश्याश्रयणीयः। अन्यथा स्वरूपमेव स्यात्। भेदे च तस्यापि भेदस्तद्धर्मस्तस्यापीत्यनवस्था। भेदान्तराकल्पने तु प्राथमिको भेदः स्वाश्रयाद्भिन्न इति व्यवहारो न स्यात्। स्वस्मिन्स्वव्यवहारहेतुत्वासंभवात्। किं च जात्यादिधर्मविशिष्टवस्तुग्रहणे सति भेदग्रहणं भेदग्रहणे सति जात्यादिधर्मविशिष्टवस्तुग्रहणमित्यन्योन्याश्रयः। एवं च भेदो दुर्निरूप इति चेदस्तु।

न च दुर्निरूपत्वे घटोऽयं न पट इत्यादिर्भेदप्रतिभासः कथमुपपद्यत इति वाच्यम् । न हि प्रतिभासे परमार्थसद्वस्तुनोऽपेक्षा । शुक्तिरजताद्यवभासानुपपत्तेः । 'बुद्धीनां सालम्बनत्वमात्रनियमात्' ( श्रीभा० पृ० ५६ प० १७ ) इति वदता त्वयापि तथैवाङ्गीकृतम् । किं चेदं भेदस्य दुर्निरूपत्वं तस्याविद्याकार्यत्वं प्रत्याययति । यत्तु भेदो न दुर्निरूप इत्याशयेन 'संवेदनवद्रूपादिवच्च परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वं मायावादिभिरभ्युपेतं भेदस्यापि संभवत्येव' ( श्रीभा० पृ० ३१ प० ९ ) इत्युक्तं तन्न । वैषम्यात् । रूपं हि स्वाश्रये घटे चाक्षुषत्वं जनयत्स्वस्मिन्नपि चाक्षुषत्वं जनयति । परं तु तदेव रूपं स्वाश्रये घटे रूपवानिति व्यवहारं जनयदपि न स्वस्मिंस्तादृशं व्यवहारं जनयति । एवं ज्ञानमपि स्वविषये घटे प्रकाशमानत्वे स्वस्मिन्प्रकाशमानत्वे च कारणं भवति । परं तु तदेव ज्ञानं स्वाश्रय आत्मनि ज्ञानवानिति व्यवहारं जनयदपि न स्वस्मिंस्तादृशं व्यवहारं जनयति । आश्रयाश्रयिभावस्य भेदाधीनस्य स्वस्कन्धारोहणवत्स्वस्मिन्नसंभवात् । तथायं घटगतः पटप्रतियोगिको भेदः स्वाश्रये घटे पटाद्भिन्न इति व्यवहारं जनयन्नपि न स्वस्मिन् भिन्न इति व्यवहारं जनयेत् । भिन्नो नाम भेदवानेव ।

यत्तु 'संस्थानमेव जातिः' (श्रीभा० पृ० ३२ प० १३) 'गोत्वादिजातिरेव भेदः' ( श्रीभा० पृ० ३२ प० १५ ) इत्युक्तं तच्चिन्त्यम् । संस्थानस्य जातिव्यञ्जकत्वात् । संस्थानं नामावयवरचनाविशेषः । न हि स एव जातिः । अणूनां महतां दीर्घग्रीवाणामुन्नतमुखानां विस्तीर्णोदराणां च विविधानां घटानां संस्थानस्य प्रतिव्यक्ति भिन्नस्यानुभवात् ।

संस्थानं जातिश्च पृथगेव

संस्थानानां मिथः केनचिद्धर्मेण साम्यमस्तीत्यन्यदेतत् । द्वयोः कार्षापणयोः संस्थानस्यात्यन्तसाम्येऽप्यैक्याभावात् । एकस्मिन्कार्षापणे छिन्ने तदीय एवाकारश्छिन्नो भवति नान्यकार्षापणीयः । कार्षापणत्वजातिस्तु सर्वेषु कार्षापणेष्वेकैव ।

जातिरेव भेद इत्यपि न सम्यक् । जातेर्भेदबोधकत्वेन तदपेक्षया पार्थक्यात् । किं च जातेरेव भेदत्वे घटोऽयं न पट इति प्रयोगानुपपत्तिः । घटशब्देनैव घटत्वजातेरुक्तत्वेन पुनस्तदर्थकनञः प्रयोगायोगात् । किंच १ गोत्वं, भेदः, अभेदनिवृत्तिश्चेत्येते त्रयोऽर्था मिथो भिन्नाः क्रमेण ज्ञायन्ते, उत २ त्रयमप्येकमेव, अथवा ३ गोत्वं भेदश्चैकोऽभेदनिवृत्तिः पृथक्, आहोस्विद् ४ भेदोऽभेदनिवृत्तिश्चेत्यनयोरैक्यं गोत्वं पृथक् । एवमेते

जातिर्भेदबोधिका न तु भेदः

चत्वारः कल्पाः । तत्र प्रतीतिशरणैस्त्रयोऽप्यर्था भिन्नाः स्वीक्रियन्त इत्याद्यः कल्पः । 'एक एवार्थः । लाघवात् । प्रतीतिस्तु शब्दस्वाभाव्यात्तथा तथा भवति' इति द्वितीयः । प्रतीतिर्लाघवं चेत्युभयानुसारिणां तृतीयचतुर्थौ । तत्र रामानुजीयानां तृतीयः । गोत्वादिरेव भेदः ( श्रीभा० पृ० ३२ प० १५ ) भेदग्रहणेनैव ह्यभेदनिवृत्तिः ( श्रीभा० पृ० ३२ प० १ ) इति वदद्भिः स्पष्टमेव तथाङ्गीकारात् । परं तु तदपेक्षया चतुर्थो युक्तः । अभेदो हि भेदाभावः । तदभावोऽभेदनिवृत्तिः । भेदाभावाभाव इति यावत् । अभावाभावस्य प्रतियोगिस्वरूपत्वं सर्वजनीनमेव । तत्र भेदस्याभेदनिवृत्त्या सहैक्यं प्रसिद्धं परित्यज्य गोत्वस्य भेदेन सहैक्यमप्रसिद्धमपि स्वी क्रियत इति कोऽयं रामानुजीयानां पन्थाः । किं च जातेः प्रतियोग्यनपेक्षत्वेन भेदस्य च प्रतियोगिसापेक्षत्वेन भेदस्यावर्जनीयत्वमेव । न च यथैकस्यैव देवदत्तस्य देवदत्तशब्दवाच्यत्वे प्रतियोग्यनपेक्षत्वं पित्रादिशब्दवाच्यत्वे च तत्सापेक्षत्वं दृश्यते तद्वदत्र स्यादिति वाच्यम् । तत्र व्यक्तेरेकत्वेऽपि देवदत्तत्वपितृत्वयोरुपाध्योर्भेदात् । अत्र त्वेकस्यां घटव्यक्तौ घटभिन्नशब्दप्रवृत्तिनिमित्तयोर्घटत्वभेदयोरुपाध्योरेवाभेदस्त्वयेष्यते । तथा च घटभिन्नशब्दयोः पर्यायता स्यात् । किंच जातिमात्रभेदवादिनो हि प्रतियोगिसव्यपेक्षा नोत्प्रेक्षितुं क्षमा । किं च घटत्वादिजातिरेव भेदश्चेत्तस्य भेदस्य प्रतियोग्यपेक्षायां कः प्रतियोगी । घटत्वावच्छिन्नस्तदनवच्छिन्नो वोभयं वा । आद्ये पटाद्भेदप्रतीतिर्न स्यात् । घटत्वमेव भेद इति तत्प्रतियोगित्वस्य घटत्वावच्छिन्ने वक्तुमशक्यत्वाच्च । अत एव न तृतीयः । द्वितीये त्वेकस्माद्घटाद्घटान्तरे भेदप्रतीतिर्न स्यात् ।

यत्तु 'अपि च सन्मात्रग्राहित्वे घटोऽस्ति पटोऽस्तीति विशिष्टविषया प्रतिपत्तिर्विरुध्यते । यदि च सन्मात्रातिरेकिवस्तुसंस्थानरूपजात्यादिलक्षणो भेदः प्रत्यक्षेण न गृहीतः किमित्यश्वार्थी महिषदर्शनेन निवर्तते । सर्वासु प्रतिपत्तिषु सन्मात्रमेव विषयश्चेत्तत्प्रतिपत्तिविषयसहचारिणः सर्वे शब्दा एकैकप्रतिपत्तिषु किमिति न स्मर्यन्ते । किं चाश्वे हस्तिनि च संवेदनयोरेकविषयत्वेनोपरितनस्य गृहीतग्राहित्वाद्विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यात् । प्रतिसंवेदनं विशेषाभ्युपगमे प्रत्यक्षस्य विशिष्टविषयत्वमेवाभ्युपगतं भवति । सर्वेषां संवेदनानामेकविषयतायामेकेनैव संवेदनेनाशेषग्रहणादन्धबधिराद्यभावश्च प्रसज्येत । न च चक्षुषा सन्मात्रं गृह्यते । तस्य रूपरूपिरूपैकार्थसमवेतपदार्थग्राहित्वात् । नापि त्वचा । स्पर्शवद्वस्तुविषयत्वात् । श्रोत्रादीन्यपि न सन्मात्रविषयाणि । किं तु शब्दरसगन्धलक्षणविशेषविषया-

ण्येव । अतः सन्मात्रस्य ग्राहकं न किंचिदिह दृश्यते' ( श्रीभा० पृ० ३१ प० १४–पृ० ३२ प० ७ ) इत्युक्तं तन्निष्फलम् । अलौकिकप्रत्यक्षस्य सन्मात्रग्राहकस्योक्तत्वात् । लौकिकप्रत्यक्षस्य विशिष्टविषयत्वं त्वस्माभिरङ्गी क्रियत एवेति किमर्थं तत्प्रदर्शनार्थमियान्विस्तर इति ॥ ९ ॥

यत्तु 'निर्विशेषसन्मात्रस्य च प्रत्यक्षेणैव ग्रहणे तद्विषयागमस्य प्राप्तविषयकत्वेनानुवादकत्वमेव स्यात् । सन्मात्रब्रह्मणः प्रमेयभावश्च' ( श्रीभा० पृ० ३२ प० ७ ) इत्युक्तं तत्राह—

सन्मात्रं न प्रमेयं स्याज्जगतोऽपरमार्थता ।
संविदेव सती सा च न परेण प्रकाशते ॥ १० ॥

निर्विशेषसन्मात्रं ह्यलौकिकनिर्विकल्पकप्रत्यक्षसिद्धं न तु लौकिकेन सविकल्पकेन निर्विकल्पकेन वा प्रत्यक्षेण गृह्यते । तथाभूतं च तत्तादृशप्रत्यक्षात्प्रागज्ञातमेव शास्त्रेण बोध्यत इति शास्त्रस्य नानुवादकत्वम् । भवन्मतेऽपि सर्वान्तर्यामित्वेनाज्ञात एव परमात्मा 'य आत्मनि तिष्ठन्' (श० ब्रा० १४।६।७।३० ) इत्यादिशास्त्रेण ज्ञाप्यत इति सममेव । अलौकिकनिर्विकल्पकप्रत्यक्षं च प्रमातृप्रमेयभावरहितमेवेति न सन्मात्रब्रह्मणः प्रमेयभाव इति प्रागुक्त ( ७४ । ११ ) मेव ।

यत्तु घटादीनामपारमार्थ्यमसहमानैरुक्तं 'द्वयोर्ज्ञानयोर्हि विरोधे बाध्यबाधकभावो बाधितस्यैव व्यावृत्तिः । अत्र घटपटादिषु देशकालभेदेन विरोध एव नास्ति । यस्मिन् देशे यस्मिन् काले यस्य सद्भावः प्रतिपन्नस्तस्मिन् देशे तस्मिन् काले तस्याभावः प्रतिपन्नश्चेत्तत्र विरोधाद्बलवतो बाधकत्वं बाधितस्य च निवृत्तिः । देशान्तरकालान्तरसंबन्धितयाऽनुभूतस्यान्यदेशकालयोरभावप्रतीतौ न विरोध इति कथमत्र बाध्यबाधकभावः । अन्यत्र निवृत्तस्यान्यत्र निवृत्तिर्वा कथमुच्यते । रज्जुसर्पादिषु तु तद्देशकालसंबन्धितयैवाभावप्रतीतेर्विरोधो बाधकत्वं व्यावृत्तिश्चेति देशकालान्तरदृष्टस्य देशकालान्तरव्यावर्तमानत्वं मिथ्यात्वव्याप्तं न दृष्टमिति न व्यावर्तमानत्वमात्रमपारमार्थ्ये हेतुः' ( श्रीभा० पृ० ३३ प० ६ ) इति, तत्रेत्थमुच्यते—जीवब्रह्मणोर्भेदाभेदविषये ब्रह्मणः सविशेषत्वनिर्विशेषत्वविषये च रामानुजीयानां मायावादिनां च मतभेदेऽपि चित्पदार्थः स्वरूपेणापरिणामी नित्यश्चेति निर्विवादम् । तथा भूतभौतिकादिर्जडपदार्थः स्वरूपेण परिणाम्यनित्यश्च । तथा स्वप्नस्थरथादयः शुक्तिरजतादयश्च जडा एव

जगन्मिथ्या

तत्तत्कालावसायिनस्तत्तत्पुरुषमात्रानुभाव्या इत्य-पि निर्विवादम् । एवं वस्तुस्थितावविवादे सति केवलं नाममात्रे विवादः। स यथा—चित्, जडा, स्वप्नस्थरथादयश्चेति त्रयोऽप्यपरमार्थशब्दवाच्या उत त्रयोऽपि परमार्थशब्दवाच्या अथवा त्रयाणां मध्ये कश्चित्परमार्थशब्दवाच्योऽन्योऽपरमार्थशब्दवाच्य इति। तत्राऽऽद्यः कल्पः शून्यवादिनां माध्यमिकानाम् । स च न युक्तः । किं नामापर-मार्थत्वम् । परमार्थभिन्नत्वमिति चेत्किमस्ति किंचिद्वस्तु परमार्थशब्दवाच्यम्। साति हि कस्मिंश्चित्परमार्थे वस्तुनि परमार्थशब्देन नञः समास उपपद्यते नान्यथा । किंच शून्यवादे केनापि क्वचिदपि किंचिदपि न दृश्येतेति सर्वस्य लोकव्यवहारस्य लोपः प्राप्नोति। आकस्मिकोत्पत्तिवादश्च न युक्तिसहः । द्वितीयः कल्पो रामानुजीयानाम् । सोऽपि न युक्तः । तथा हि । किं नाम परमार्थत्वम्। अविनाशित्वं चेत्परमार्थत्वेन त्वदभिमतेषु घटादिषु स्वप्नस्थरथादिषु चाव्याप्तिः। प्रतीयमानत्वं परमार्थत्वं चेत्प्रतीयमानत्वापरपर्यायं परमार्थत्वं घटादिषु स्वप्न-स्थरथादिषु चास्तां नाम न नः किंचिच्छिद्यते । प्रतीयमानमेवास्माभिरपरमार्थ-शब्देनोच्यते । यद्यपि ब्रह्मापि प्रतीयमानं तथापि प्रतीतिरूपमेव तत्परमार्थम्। प्रतीयमानं सविक्षेपं त्वौपाधिकमपरमार्थं जीवस्वरूपवत् । 'अविज्ञातं विजानताम्' ( के० ११ ) इति श्रुतेः । अथ सत्यत्वं परमार्थत्वं चेत्किं नाम सत्यत्वम्। असत्यत्वाभावश्चेदसत्यत्वज्ञानाधीनं सत्यत्वं सत्यत्वज्ञानाधीनं चासत्यत्वमि-त्यन्योन्याश्रयः। अथ मिथ्यात्वाभावः परमार्थत्वमिति चेत्किमिदं मिथ्यात्वम्। बाधितत्वमेव मिथ्यात्वमिति चेद्रज्जुसर्पस्थले सर्पज्ञानस्य बाधितत्वं 'रज्जुसर्पा-दिषु तु' ( श्रीभा० पृ० ३३ पं० १३ ) इति ग्रन्थेन त्वयैवोक्तमिति सर्पज्ञा-नस्य मिथ्यात्वापत्तिः । इष्टापत्तौ तु 'रज्ज्वादौ सर्पादिविज्ञानं सत्यमेव भयादिहेतुः' ( श्रीभा० पृ० ५६ पं० १२ ) इति त्वदीयैवोक्तिर्विरुध्यते। किंच रज्जुसर्पस्थले विषयस्य सर्पस्य बाधितत्वमिष्यते न वा। आद्ये त्वदभिमता सत्ख्यातिस्तत्र न सिध्यति । अन्त्ये विषयाणामेव मिथ्यात्वम् ( श्रीभा० पृ० ५६ पं० ६ ) इत्युक्तिविरोधः । किंच सत्ख्यातिवादिनस्तव मते रज्जुसर्पादि-स्थले सर्पादेरपि सत्त्वेन मिथ्यात्वाभावान्मिथ्यात्वस्य क्वापि प्रसिद्धत्वाभावेन मिथ्यात्वाभावो दुर्वचः । अभावज्ञानस्य प्रतियोगिप्रसिद्धिसापेक्षत्वात् । तथा च मिथ्यात्वाभावरूपं परमार्थत्वं दुर्वचम् । किंच 'न व्यावर्तमानत्वमात्रमपार-मार्थ्ये हेतुः' ( श्रीभा० पं० ३३ पं० १६ ) इति वदतस्तव व्यावर्तमानत्वावि-

शेषोऽपारमार्थ्ये हेतुत्वेनेष्ट एव । व्यावर्तमानत्वविशेषश्च तद्देशकालसंबन्धितयैव व्यावर्तमानत्वरूपः । स च रज्जुसर्पादेरिति कथं सत्ख्यातिः सिध्यति । किंच रज्जुज्ञानसर्पज्ञानयोर्विरोधो विषयद्वारैव वाच्यः । स न संभवति । त्वन्मते बुद्धीनां सालम्बनत्वमात्रनियमेन बुद्धेस्तद्विषयास्तित्वावश्यंभावानपेक्षत्वात् । द्वयोर्ज्ञानयोरेकक्षणवृत्तित्वासंभवेन विरोध इति चेत् ‘रज्जुज्ञानमेव बाधकं सर्पज्ञानमेव बाध्यम्’ इत्यत्र विनिगमनाविरहः । किंच रज्जुसर्पादौ घटादौ च को विशेषः । रज्जुसर्पः पूर्वं नाभूत् पश्चान्न भविष्यति । केवलं मध्ये प्रतीयते, घटादिरपि तथैव । रज्जुसर्पः पश्चात् ‘नायं सर्पः’ इति बाध्यते । घटादिरपि नाशोत्तरं कपालाद्यवस्थायां ‘नायं घटः’ इति बाध्यते । ननु पश्चाज्जायमानेन नायं सर्प इति बाधेन ‘प्रतीतिकालेऽप्ययं सर्पो नाभूत्’ इत्येवं प्रातीतिकालिकोऽपि बाध्यते न तथा घट इति चेत्तस्याः प्रातीतिकालिकसत्तायाः क्षणिकतुल्यत्वेन न तया घटादेः पारमार्थिकत्वं शक्यं निश्चेतुम् । वस्तुतस्तु प्रातीतिकालिकस्यापि घटादेस्तत्त्वज्ञानदृष्ट्या बाधोऽस्त्येव । बद्धजीवदृष्ट्या बाधो नास्तीति चेत्—किं तेन । रज्जुसर्पस्थलेऽपि भ्रान्तदृष्ट्या बाधाभावस्य सत्त्वात् । किं च रज्जुसर्पदृष्ट्या भयादिनाऽन्यत्र गमने बाधो नास्तीत्येतावता स किं सर्पः सत्यो भवति । यदि तत्र बाधयोग्यताऽस्त्येव, केवलमन्यत्र गमनेन रज्जुयाथार्थ्यज्ञानं नास्तीत्यतो न बाधस्तर्हि बद्धस्य परमात्मयाथार्थ्यज्ञानं नास्तीत्यतो न बाध इति तुल्यम् ।

ननु तत्त्वज्ञानिदृष्ट्या घटादेर्बाधोऽस्तीत्यत्र किं प्रमाणमिति चेदुच्यते । प्रातीतिकालिकोऽपि हि सर्पः पश्चात्तनजायमानबाधविषयो भवतीत्यत्र कारणं हि प्रतीतिकालेऽपि सर्पस्य सर्पस्वरूपेणासत्त्वम् । सर्पस्य सत्ता हि रज्जुसत्तैव नान्या । तथा मृत्सत्तैव घटसत्ता नान्या । नहि सत्ताद्वयं प्रतीयते । न वा घटकाले मृत्सत्ताया अभावो वक्तुं शक्यः । एवं मृदादिसत्तापि हि तत्कारणसत्तातो नातिरिक्ता भवति । तथा च प्रातीतिकालिकस्यापि घटादेर्बाधो युक्त एव । किं च रज्जुसर्पस्थले प्रातीतिकालिकः सर्प एव बाध्यते न तु सर्पप्रतीतिर्बाध्यते । तस्याः सत्यत्वस्य त्वयैवोक्तत्वात् ( श्रीभा० पृ० ५६ प० १२ ) । घटादिविषये तु न केवलं तत्त्वज्ञानोत्तरं घटादिर्बाध्यते किंतु घटादिप्रतीतिरपि बाध्यते । यतो घटप्रतीतिर्नाम घटाकारोऽन्तःकरणपरिणामः । तस्य च तादात्म्येन ब्रह्मस्वरूपसाक्षात्कारोत्तरमसत्त्वात् । तथा च यत्र केवलं विषयो बाध्यते तत्र तस्यापरमार्थत्वं चेद्यत्र प्रतीत्या सह विषयो बाध्यते तत्र तस्य परमार्थत्वं सुतरां न स्यात् । किं चापरमार्थे

जगतो बाधः

वस्तु किंचिदस्ति न वा। आद्यं दुर्वचम्। त्वन्मतेऽस्तित्वस्य परमार्थत्वव्याप्य-त्वादपरमार्थत्वस्य क्वाप्यसंभवात्। द्वितीये 'अनाशी परमार्थश्च' (वि० पु० २। १४। २४) इत्यादौ परमार्थशब्दोक्त्या किमधिकं कृतं स्यात्।

मायावादिनां तु तृतीयः कल्पः। निर्विशेषं ब्रह्म परमार्थमन्यदपरमार्थमिति। यतस्तदेव परमार्थं यन्न क्वचिदपि कदाचिदपि निषिध्यते। 'अनुवर्तमानत्वात्सत्परमार्थ इति सिद्धमेव' (श्रीभा० पृ० ३३ प० १६) इति त्वयाप्युच्यत एव। सद्रूपेऽर्थे परमत्वं च निरवधिकातिशयवत्त्वम्। यत्सत्तायाः क्वचिदपि कदाचिदपि न निषेधः। 'पटो न घटः, घटो न पटः' इत्येवं सर्वेषां घटादीनां निषेधप्रतियोगिता दृश्यते। यस्य लेशतोऽपि न निषेधस्पर्शस्तदेव वस्तुतः परमार्थशब्दभागिति तद्व्यतिरिक्तं सर्वं प्रतीयमानमपरमार्थमेव। तथाच व्यावर्त-मानत्वमात्रमेवापारमार्थ्ये हेतुरिति सिद्धम्। एतेन 'न व्यावर्तमानत्वमात्रमप-रमार्थ्ये हेतुः' (श्रीभा० पृ० ३३ प० १६) इति परास्तम्। निषेधस्पर्शेना-परमत्वहानेर्दुर्वारत्वात्। निषिध्यमानस्यापि परमार्थत्वं वदता परमार्थशब्दप्र-वृत्तिनिमित्तमेव न ज्ञायते।

परमार्थत्वनिर्वचनम्

यत्तु 'अनुभूतिसद्विशेषयोश्च विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वाद् बाधितत्वाच्चानुभूतिरेव सतीत्येतदपि निरस्तम्' (श्रीभा०पृ०३३प०१८) इत्युक्तं तत्रोच्यते—अनुभूतिसद्विशेषयोर्विषयविषयिभावेन भेदो हि लौकिकप्रत्यक्षसि-द्धोऽस्माभिरङ्गी क्रियत एव। या च लौकिकप्रत्यक्ष-रूपानुभूतिः सैव सतीति नास्माभिरुच्यते लौकिकप्रत्यक्षस्य काल्पनिकत्वात्। न हि रज्जु-सर्पस्थले सर्प एव रज्जुः। किंतु तादृशसर्पाधिष्ठानं रज्जुः। तथा च सकललौकि-कसविषयानुभूत्यधिष्ठानभूता या निर्विषयानुभूतिः सैव सती। किंच—'अनुभूति-सद्विशेषयोर्विषयविषयिभावेन' इति वदताऽनुभूतिसत्सामान्ययोर्विषयविषयिभावः स्वीक्रियते न वा। आद्ये सद्विशेषयोरिति विशेषपदोक्तिर्व्यर्था स्यात्। द्वितीये-ऽनुभूतिसत्सामान्ययोर्विषयविषयिभावाभावे त्वन्मतानुसारेण सत्सामान्यस्या-नुभूतिरूपत्वाभावे च सत्सामान्यस्य प्रमाणसिद्धत्वं न स्यात्। तदेव हि प्रमाण-सिद्धं यत्प्रमाणविषयं स्वयं प्रमाणं वा। अथ सत्सामान्यस्याप्रमाणत्वमिष्टमेवेति चेत्तथात्वे सद्विशेषयोरिति विशेषपदोक्तेर्वैयर्थ्यं तदवस्थमेव। किं चानुभूतिसत्सा-मान्ययोर्विषयविषयिभावाभावे को हेतुः। प्रायशः सर्वं वस्त्वनुभूतिविषयमा-

सदनुभूत्योरैक्यम्

भजते । एवं सत्यपि यतः सत्सामान्यमनुभूतिविषयभावं न भजतेऽतस्तत्र तस्य सत्सामान्यस्यानुभूत्या सहाभेद एव कारणमित्यनिच्छताप्यच्छमतिना स्वीकार्यम् । किं चेयं सद्विशेषविषयानुभूतिः स्वयं सद्रूपाऽसद्रूपा वा । आद्येऽनुभूतिरेव सतीति स्वीकृतं स्यात् । अन्त्ये स्वयमसती कथं सद्विशेषे प्रमाणभावं भजेत ।

यत्तु 'विषयप्रकाशनवेलायां ज्ञातुरात्मनोऽनुभूतेः स्वयंप्रकाशत्वेऽपि न सर्वेषां सर्वदा तथैवेति नियमोऽस्ति । परानुभवस्य हानोपादानादिलिङ्गकानुमानज्ञानविषयत्वात् । स्वानुभवस्याप्यतीतस्याज्ञासिषमिति व्यवहारदर्शनाच्च' (श्रीभा० पृ० ३४ प० १) इत्युक्तं तन्निष्फलम् । न हि मायावादिभिर्लौकिक्याः सविषयानुभूतेः स्वयंप्रकाशत्वनियम उच्यते येनैतत्खण्डनं युज्येत । तथा न तस्याः सविषयानुभूतेरनुभाव्यत्वाभावनियमः । किं तु सर्वाधिष्ठानभूताया ब्रह्मशब्दवाच्याया निर्विषयानुभूतेर्न कदापि परप्रकाश्यत्वं न च कदाचिदप्यनुभाव्यत्वमित्येव । एतेन 'स्वगतातीतानुभवानां परगतानुभवानां चानुभाव्यत्वेनाननुभूतित्वप्रसङ्गात्' (श्रीभा० पृ० ३४ प० ६) इत्याद्युक्तमपास्तम् ।

अनुभूतेः स्वप्रकाशत्वम्

यदपि 'अनुभूतेरननुभाव्यत्वेऽपि गगनकुसुमादेरिवाज्ञानाविरोधित्वमपि प्रसज्यत एव' (श्रीभा० पृ० ३४ प० २०) इत्युक्तं तत्राननुभाव्यत्वाज्ञानाविरोधित्वयोर्व्याप्तिर्न निश्चेतुं शक्यते । अनुकूलतर्काभावात् । दृष्टान्तश्चायुक्तः । धर्मिभूतं गगनकुसुममेव न ज्ञायते दूरे तद्धर्मभूतमज्ञानाविरोधित्वादि । यतोऽज्ञानाविरोधित्वमज्ञानकालेऽस्तित्वमेव नान्यत् । तच्च कुसुमस्यैवास्तित्वं नास्ति कुतस्तद्धर्मस्यास्तित्वं कुतस्तरां तज्ज्ञानम् ॥ १० ॥

यदुक्तम् 'अनुभूतिप्रागभावस्य ग्राहकाभावादभावो न शक्यते वक्तुम् । अनुभूत्यैव ग्रहणात्' (श्रीभा० पृ० ३५ प० ३) इति, तत्राह—

नित्या सामान्यानुभूतिरेका निर्विषया च सा ।
सुप्तौ नाहंभावभानं मुक्तौ नैव च संसृतिः ॥ ११ ॥

अनुभूतिप्रागभावस्य ग्राहकमनुभूतिसामान्यमनुभूतिविशेषो वा । नाद्यः । अनुभूतिसामान्यस्वरूपव्याघातात् । किंचिद्विषयग्राहिकाया अनुभूतेरनुभूतिविशेषत्वात् । न द्वितीयः । किमियं प्रागभावग्राहिका विशेषानुभूतिः स्वप्रागभावं गृह्णाति सामान्यानुभूतिप्रागभावं वा । आद्य इष्टापत्तिः । न हि विशेषा-

अनुभूतेर्न प्रागभावः

नुभूतेरनित्यत्वे वयं विवदामः । अन्त्ये सामान्यानुभूतिप्रागभावग्राहिकेयं विशे-
षानुभूतिः सामान्यानुभूतिं विषयीकृत्यैव तत्प्रागभावं गृह्णीयात् । अभावज्ञानस्य
प्रतियोगिज्ञानसापेक्षत्वात् । सामान्यानुभूतेर्ग्राह्यत्वे तु तस्याः सामान्यस्वरूपव्या-
घातः । ज्ञानविषयीभूताया अनुभूतेरनुभूतिविशेषत्वात् । किं चानुभूतिसामान्यस्य
प्रागभाव एव नास्ति दूरे तद्ग्रहणम् । एतदुक्तं भवति—सर्वाधिष्ठानभूता निरा-
श्रया निर्विषया ब्रह्मशब्दवाच्या याऽनुभूतिस्तदेवानुभूतिसामान्यम् । सामान्यस्य
परा काष्ठा । यदपेक्षयाऽन्यत्सामान्यं किंचिदपि नास्ति । अत एव तत्र स्वगतस-
जातीयविजातीयभेदरूपस्त्रिविधोऽपि भेदो ज्ञातोऽज्ञातो वा वस्तुतो नास्ति । यतो
भेदजनका विशेषाः । विशेषो हि सामान्यपूर्वक एव । सामान्यं तु विशेषस्य
प्रागवस्था । यत्र लेशतोऽपि विशेषो नास्ति तत्र कथं त्रिविधोऽपि भेदोऽस्तित्वं
लभेत । एतेनानुभूतिसामान्यस्य नानात्वं प्रत्युक्तम् । तस्य चानुभूतिसामान्यस्य
प्रागभावोऽपि न वक्तुं शक्यते । कालतो मर्यादितस्यैव हि प्रागभावः । काल-
मर्यादा च विशेषस्यैव न सामान्यस्य । वस्तुकृतस्येव देशकृतस्येव च काल-
कृतस्यापि विशेषस्य सत्त्वात् । अनुभूतिसामान्ये च वस्तुविशेषरूपः काल एव
नास्ति कुतः कालकृतो विशेषः कुतस्तरां तन्मूलकोऽनुभूतिप्रागभावः । अनुभूति-
सामान्ये हि न द्यौर्नान्तरिक्षं न भूतलं न पातालं न सूर्यो न विद्युन्न चन्द्रतारा
न तमो न ज्योतिर्न वायुर्न दिवसो न रात्रिर्न संध्ये न कालो न शरीरं नेन्द्रि-
न प्राणो न मनो न रूपं न जातिर्न संबन्धो न समुद्रो न गिरयो न ज्ञातृत्वं
ज्ञेयत्वं न धर्मी न धर्मो न कोऽपि विशेषः । न तदनुभूतिसामान्यं कस्यापि
ग्राह्यं नापि कस्यचिद्ग्राहकम् । नन्वेवं सर्वविशेषाणामभावे 'अनुभूतिसामान्य'
इत्यपि व्यवहारो न स्यात् । सामान्यस्य विशेषापेक्षत्वादिति चेत्सत्यमेतत्
निरूपकैस्तद्वस्तु केनचिच्छब्देन प्रदर्शनीयमित्येतावतैवायं व्यवहारो न तु त-
भिनिवेष्टव्यम् । तथा चानुभूतिसामान्येन कथं स्वप्रागभावः स्वानित्यत्वं
नानात्वादिकं वा प्रकाश्येत । अप्रकाशितं च नास्त्येव । अस्तित्वे प्रमाणाभावात्
अथ तेनानुभूतिसामान्येन स्वनित्यत्वं स्वैकत्वं स्वप्रकाशत्वादिकं चापि न प्र-
श्येतेति चेदिष्टमेवैतत्संगृहीतम् । न त्वेतावता तस्यानुभूतिसामान्यस्यानित्यत्वादि
किमपि शङ्कनीयम् । संविन्नित्येत्यस्य 'नानित्या' इत्येव तात्पर्यम् । ए-
संविदेका स्वप्रकाशेत्यस्य नानात्वाभावे परप्रकाश्यत्वाभावे च तात्पर्य बोध्य-
मिति । एतेन 'योग्यानुपलब्ध्यैव प्रागभावः समर्थितः' ( श्रीभा० पृ० ३५ पं
२३ ) इति निरस्तम् । अनुपलब्धिप्रमाणस्य रामानुजीयैरनङ्गीकाराच्च । तस्

प्रत्यक्षेऽन्तर्भूतत्वेऽपि वार्तमानकालिकविषयाभावेन प्रत्यक्षस्यात्राप्रवृत्तेः । यत्तु 'किं च प्रत्यक्षज्ञानं स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयत्तस्य न सर्वदा सत्तामवगमयद्दृश्यत इति घटादेः पूर्वोत्तरकालसत्ता न प्रतीयते। तदप्रतीतिश्च संवेदनस्य कालपरिच्छिन्नतया प्रतीतेः। घटादिविषयमेव संवेदनं स्वयं कालानवच्छिन्नं प्रतीतं चेत्तत्संवेदनविषयो घटादिरपि कालानवच्छिन्नः प्रतीयत इति नित्यः स्यात्' (श्रीभा० पृ० ३६ प० १) इत्युक्तं तन्निष्फलम् । सविषयाणामनुभूतिविशेषाणां कालपरिच्छिन्नत्वेऽपि बाधकाभावात् । किं चाग्रे 'क्षेत्रज्ञावस्थायां कर्मणा संकुचितस्वरूपं ज्ञानं तत्तत्कर्मानुगुणतरतमभावेन वर्तते। तच्चेन्द्रियद्वारेण व्यवस्थितम्। इममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्योदयास्तमयव्यपदेशः प्रवर्तते' (श्रीभा० पृ० ४५ प० १७) इति स्वयमेव ज्ञानस्य नित्यत्वं प्रतिपादितमिति पूर्वापरस्वग्रन्थविरोधः ।

यत्तु 'न च निर्विषया संवित्काचिदस्ति । अनुपलब्धेः। विषयप्रकाशनस्वभावतयैवोपलब्धेरेव हि संविदः स्वयंप्रकाशता समर्थिता' (श्रीभा० पृ० ३६ प० १०) इत्युक्तं तच्चिन्त्यम्। विशेषा हि सामान्यपूर्वका एवेति नियमस्य लोकप्रसिद्धस्यानुपदमेवोक्तस्यानपलपनीयत्वात्। स्वयंप्रकाशत्वतात्पर्यस्योक्तत्वाच्च ।

यदपि 'स्वापमदमूर्छासु सर्वविषयशून्या केवलैव संवित्परिस्फुरतीति न वाच्यम्। योग्यानुपलब्धिपराकृतत्वात् । तास्वपि दशास्वनुभूतिरनुभूता चेत्तस्याः प्रबोधसमयेऽनुसंधानं स्यात्। न च तदस्ति' (श्रीभा० पृ० ३६ प० १५) इत्युक्तं तदसंगतम्। स्वयं निर्विषयाया अस्याः संविदः संविदन्तरविषयत्वाभावेन हि तदनुपलब्धिर्न तु तस्या अभावात्। न हि पिशाचस्य प्रत्यक्षाविषयस्यानुपलब्धावपि तस्य योग्यानुपलब्धिपराकृतत्वं मन्यन्ते। योग्यपदस्य ह्येतत्कृत्यम्। तदुक्तं भाषापरिच्छेदे—

केवलायाः संविदः स्फुरणम्

'अस्ति चेदुपलभ्येतेत्येवं यत्र प्रसज्यते ।
सा योग्यानुपलब्धिः स्यादभावज्ञानकारणम्' (भा० प० ६२) इति।

निर्विषयायाः संविदः संविदन्तरविषयत्वाभावेन 'अस्ति चेदुपलभ्येत' इत्येवं प्रसक्त्यभावात् । इयं चानुभूतिर्नानुभूता भवति । अनुभूत्यन्तरविषयत्वाभावात्। तथा च मायावादिभिरस्वीकृतमस्यामनुभूतावनुभूतात्वं हठादारोप्य 'तास्वपि दशास्वनुभूतिरनुभूता चेत्तस्याः प्रबोधसमयेऽनुसंधानं स्यात्' इति प्रबोधसमयेऽनुसंधानापादनं कथं संगतिं लभेत। किं चास्या अनुभूतेर्निर्विषयत्वान्न संस्कारजनकत्वम्। अनुभूतिर्हि स्वाश्रये स्वविषयसंस्कारं

जनयति। न ह्यस्या अनुभूतेराश्रयस्तदानीं कोऽपि भाति, नापि विषयः। तत्कथमियं संस्कारं जनयेत्। एतेन 'अस्मरणनियमोऽनुभवाभावमेव साधयति' (श्रीभा० पृ० ३६ प० २०) इति प्रत्युक्तम्। अस्मरणनियमस्य संस्काराभावमूलकत्वात्। सविषयज्ञानेष्वपि न सर्वेषां संस्कारजनकत्वनियमः। पथि गच्छतोदासीनतया दृष्टेषु गृहवृक्षक्षेत्रारामादिषु सर्वेषां स्मरणनियमादर्शनात्।

यत्तु 'न केवलमस्मरणनियमादनुभवाभावः। सुप्तोत्थितस्येयन्तं कालं न किंचिदहमज्ञासिषमिति प्रत्यवमर्शेनैव सिद्धेः' (श्रीभा० पृ० ३७ प० १) इत्युक्तं तन्न सम्यक्। सौप्तिकज्ञानस्य सविषयत्वाभावेन तादृशप्रत्यवमर्शोपपत्तेः। नञो ज्ञाधात्वर्थान्वयेऽपि तत्कर्मणि निषेधपर्यवसानम्। यथा वनं गच्छति देवदत्ते देवदत्तो न ग्रामं गत इत्यत्र तद्वत्। किं च सौप्तिकज्ञाने विषयस्येवाश्रयस्याप्यहमर्थस्य प्रतिभानं नास्ति। अतोऽपि तादृशप्रत्यवमर्शोपपत्तिः।

सुप्तौ नाहंभावः

ननु 'अर्थान्तराननुभवस्यार्थान्तराभावस्य चानुभूतार्थान्तरास्मरणहेतुत्वं न संभवति' (श्रीभा०पृ०३७प०४) इत्युक्तमिति चेद् भ्रान्तोऽसि। अनुभूतिर्हि स्वाश्रयं स्वविषयसंस्कारं जनयित्वैव स्मरणहेतुर्भवति। तथा चानुभूतिर्यस्यार्थान्तरस्याननुभवे यस्य चार्थान्तरस्याभावे सति संस्कारजनन एवासमर्था तादृशार्थान्तरस्याननुभवस्तादृशार्थान्तराभावश्चास्मरणहेतुर्भवत्येव। विषयाननुभव आश्रयाभावे चानुभूतिः कस्य संस्कारं क जनयेत्। किं च 'न किंचिदवेदिषम्' इत्याकारको ज्ञानप्रत्यवमर्शाभावः सौप्तिकानुभवाभावसाधकत्वेनाभिप्रेत उत 'न किंचिदवेदिषम्' इत्याकारको ज्ञानाभावप्रत्यवमर्शस्तत्साधकत्वेनाभिप्रेतः। आद्ये 'प्रबोधसमयेऽनुसंधानं नास्ति' (श्रीभा० पृ० ३६ प० १७) इत्युक्तमेव पुनरुक्तं स्यात्। तथा च न केवलमिति ग्रन्थासंगतिः। द्वितीये ज्ञानाभावस्य प्रत्यवमर्शश्चेत्सुषुप्तौ ज्ञानाभावोऽनुभूयत एव। प्रत्यवमर्शो हि स्मरणम्। तच्चानुभूतस्यैव। ज्ञानाभावः सुषुप्तावनुभूतश्चेत्सुषुप्तावनुभवः सिध्यतीति प्रत्युत तवैव बाधकम्। सोऽयं घट्टकुटीप्रभातन्यायः।

निर्विषयानुभूतेरुत्पत्त्यभावादन्येऽपि विकारा न भवन्ति। विकारान्तराणामुत्पत्तिव्याप्तत्वेनोत्पत्त्यभावेऽसंभवात्। यत्तु 'प्रागभावव्यभिचारात्' (श्रीभा० पृ० ३७ प० १६) इत्युक्तं तन्न। प्रागभावविनाशस्य विकारत्वाभावात्। अवस्थान्तरापत्तिर्हि विकारः। न चाभावस्यावस्थान्तरं संभवति। किं च

अनुभूतेर्नित्यत्वम्

सत्कार्यवादे कार्यस्योत्पत्तेः प्रागपि कारणरूपेण सत्त्वात्प्रागभाव एव दुर्वचः । कुतस्तत्र व्यभिचारः । सत्कार्यवादश्च रामानुजीयैरपि स्वीकृत एव । यत्तु 'भावरूपा मायावाद्यभिमताऽविद्याऽनुत्पन्नैव विविधविकारास्पदं तत्त्वज्ञानोदयादन्तवती चेति तस्यामनैकान्त्यम्' (श्रीभा० पृ० ३७ प० १८) इत्युक्तं तदसंगतम् । तथा हि सामान्यानुभूतिरूपं ब्रह्म निर्विशेषम् । तच्छक्तिरविद्यापदवाच्या । सा च न ततो भिन्ना । भेदस्य विशेषमूलकत्वात् । अत एव ब्रह्मरूपा सा शक्तिर्नित्यैव । तादृशशक्तिपरिणामस्त्वव्यक्तादिः । स च कर्ममूलकः । तादृशशक्तिपरिणामस्य कर्मणश्च मिथः कार्यकारणभावेऽपि नान्योन्याश्रयदोष आपादनीयः । तयोर्द्वयोरपि बीजाङ्कुरन्यायेन प्रवाहानादित्वात् । बीजाङ्कुरयोर्द्वयोरुत्पत्तौ सत्यामप्युत्पत्तौ प्राथम्यं कस्येति नावधार्यते । अतोऽगत्या प्रवाहानादित्वं स्वीकार्यम् । प्रवाहानादित्वं च नोत्पत्त्यभावः । किंतूत्पत्तिकालानवधारणम् । उत्पत्तिकालानवधारणं च द्विविधम् । क्वचित्कालसत्त्वेऽपि तदज्ञानात् । क्वचिच्च कालाभावादेव तदज्ञानात् । आद्यं बीजाङ्कुरविषये । अव्यक्तादिर्यो ब्रह्मशक्तिपरिणामस्तद्विषये द्वितीयम् । अव्यक्तमहदहंकारोत्पत्त्यनन्तरमेव दिक्कालादिविशेषवस्तूत्पत्तेः । मोक्षावस्थायामपि नित्या ब्रह्मरूपा शक्तिरस्त्येव । अव्यक्तादिस्तत्परिणामो विनश्यति । मोक्षावस्थायां योऽविद्यानाश उच्यते तत्राविद्यापदेनाव्यक्तादिः शक्तिपरिणामो गृह्यते । तत्त्वज्ञानेन जायमानोऽव्यक्तादिपरिणामविनाशश्च तादृशपरिणामाभानरूपः । अभानं च क्वचिद्वस्तुन एवासत्त्वात् क्वचिद्वस्तुसत्त्वेऽपि तदभानात् । क्वचिच्च वस्तुभानेऽपि मिथ्यात्वेन भानात् । भानमपि मिथ्यात्वेन जायमानमभानमेव । आद्यं यथा रज्जुयाथात्म्यज्ञानोत्तरं सर्पस्याभानम् । द्वितीयं यथा सुषुप्तौ घटादेरभानम् । तृतीयं यथाऽऽदर्शे स्वमुखभानम् । अव्यक्तादेर्ब्रह्मशक्तिपरिणामस्याभानं च जीवन्मुक्तावादर्शे स्वमुखभानवदेव । विदेहमुक्तौ तु सुषुप्तौ घटादेरभानवत् । इत्थं सिद्धान्तस्थितौ सत्यां 'यदनुत्पन्नं तदविनाशि' इति व्याप्तेरविद्यायां व्यभिचारापादनं तत्राविद्यापदेन ब्रह्मशक्तिरभिप्रेयत उत तत्परिणामोऽव्यक्तादिरभिप्रेयते । आद्ये सा नान्तवती । अन्त्ये सा नानुत्पन्ना । ततः कथमत्र व्यभिचारः पदमादधीत ।

यत्तु 'यदप्यनुभूतिरजत्वात्स्वस्मिन्विभागं न सहत इति तदपि नोपपद्यते । अजस्यैवात्मनो देहेन्द्रियादिभ्यो विभक्तत्वात् । अनादित्वेन चाभ्युपगताया अविद्याया आत्मनो व्यतिरेकस्यावश्याश्रयणीयत्वात्' (श्रीभा० पृ० ३८ प०

१ ) इत्युक्तं तत्सर्वं दत्तोत्तरम् ( पृ० ८२ ) । यश्च ' स्वसत्तयैव स्वाश्रयं प्रति कस्यचिद्विषयस्य प्रकाशनं हि संवेदनम् । स्वयंप्रकाशता तु स्वसत्तयैव स्वाश्रयाय प्रकाशमानता । प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम् । सर्वकालवर्तमानत्वं हि नित्यत्वम् । एकत्वमेकसंख्यावच्छेदः' (श्रीभा० पृ० ३८ प० १२ ) इतिग्रन्थेन संवेदनस्य, स्वयंप्रकाशतायाः, प्रकाशस्य, नित्यत्वस्य, एकत्वस्य च स्वरूपभेद उक्तः स विशेषावस्थायां न तु तन्मूलभूतसामान्यस्वरूपे । न हि घटशरावोदञ्चनादिभेदो मृदवस्थायां दर्शयितुं शक्यते ।

यत्तु ' संविदि तु स्वरूपातिरेकेण जडत्वादिप्रत्यनीकत्वमित्यभावरूपो भावरूपो वा धर्मो नाभ्युपेतश्चेत्तन्निषेधोक्त्या किमपि नोक्तं भवेत् ' ( श्रीभा० पृ० ३८ प० १८ ) इत्युक्तं तच्चिन्त्यम् । अभावस्य धर्मरूपत्वाभावात् । धर्मो हि धर्म्यपेक्षया सूक्ष्मं धर्मिणः सामान्यावस्थं रूपम् । अत एवाकाशादिविशेषापेक्षया सूक्ष्मेभ्यस्तत्सामान्यावस्थेभ्यः शब्दतन्मात्रादिभ्यः सकाशादाकाशादिविशेषाणामुत्पत्तिरुक्ता सांख्यशास्त्रे । इतरैः प्रायस्तथाङ्गीकृता च । तथा च कथमभावरूपो धर्म इत्युच्यते । किंच ' संविदि जडत्वादयो ज्ञेयधर्मा न सन्ति ' इति वाक्येन न भावरूपः कश्चन धर्मो विधीयते नाप्यभावरूपः । किं तु जडत्वादयो धर्माः केवलं निषिध्यन्त इत्येष एव तद्वाक्यार्थः । ' घटो नास्ति घटाभावोऽस्ति ' अनयोर्वाक्ययोरर्थभेदः प्रसिद्ध एव । पदार्थसंसर्गो हि वाक्यार्थः । घटो नास्तीत्यत्र घटस्यास्त्यर्थेऽन्वयः । तस्य च नञर्थेन संबन्धः । घटाभावोऽस्तीत्यत्र तु घटस्याभावेऽन्वयः । तस्य चास्त्यर्थे । एवं संसर्गभेदे वाच्यवृत्त्यां वाक्यार्थभेदोऽवर्जनीय एव । लक्षणा तु बाधसत्त्व एवेति न लक्षणयाप्यत्र वाक्यार्थैक्यं शङ्कनीयम् । अत एव ' त्वं नासि ' ' त्वदभावोऽस्ति ' इत्यत्र पुरुषव्यवस्था, ' घटा न सन्ति घटाभावोऽस्ति ' इत्यत्र वचनव्यवस्था च संगच्छते । अत एव च विधिवाक्यान्निषेधवाक्यं पार्थक्येन गणयन्ति वाक्यार्थविदः । किं चासमस्तनञः क्रियान्वय एव साधुत्वमिति वैयाकरणानां निकाये प्रसिद्धम् । तथा चाहुः—

संबोधनान्तं, क्त्वोर्थाः, कारकं, प्रथमो वतिः ।
धातुसंबन्धाधिकारनिष्पन्नमसमस्तनञ् ॥
तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम् ।
साधुत्वमष्टकस्यास्य क्रिययैवावधार्यताम् । ( वै० भू० का० १६–१७) इति ।

(Margin: संविदो निर्विशेषत्वम्)

तथा च कथं घटो नास्तीत्यत्र घटाभावप्रतीतिः । एतेन

'न वेद्यं वित्तिधर्मः स्यादिति यत्प्रागुदीरितम् ।
तेनापि साधितं किंचित्संविदोऽस्ति न वा त्वया ।
अस्ति चेत्पक्षपातः स्यान्नचेत्ते विफलः श्रमः' ॥ (सं०सि०पृ०९७)

इति सिद्धित्रयोक्तमपास्तम् ।

यत्तु 'संवित्सिध्यति वा न वा । सिध्यति चेत्सधर्मता स्यान्नो चेत्तुच्छता गगनकुसुमादिवत् । सिद्धिरेव संविदिति चेत्कस्य कं प्रतीति वक्तव्यम् । यदि न कस्यचित् कंचित्प्रति सा तर्हि न सिद्धिः' (श्रीभा० पृ० ३९ प० १) इत्युक्तं तत्रोच्यते—या च सिद्धिः कस्यचित्कंचित्प्रत्येव वक्तुं शक्यते स व्यवहारानुगुणः सिद्धिविशेषः । यच्च सर्वेषां सिद्धिविशेषाणां मूलभूतं प्राणप्रदं च सिद्धिसामान्यं सैव संवित् । न तस्या आश्रयापेक्षा । नापि निरूपकापेक्षा । सामान्या संविदेवात्मा । न त्वात्मधर्मः संवित् । आधाराधेयभावस्यापि विशेषावस्थायामेव सत्त्वेन सामान्यावस्थायां धर्मधर्मिभावस्य वक्तुमशक्यत्वात् । विशेषाणां च सामान्यपूर्वकत्वनियमेनोक्तसामान्यरूपमवश्याश्रयितव्यमनपलपनीयमेवेति प्रागुक्तं (पृ० ६९) न विस्मर्तव्यम् । एवं च 'अनुभूतिरिति स्वाश्रयं प्रति' (श्रीभा० पृ० ३९ प० ९) इत्यादिना ग्रन्थेनानुभूतेरात्मधर्मत्वादि यदुक्तं तत्सर्वं विशेषावस्थायामस्तु नाम न तु सामान्यावस्थायामिति बोध्यम् ॥ ११ ॥

संवित्सामान्यमेवात्मा नाहमर्थः स ईरितः ।
अहंभावः कल्पितः स्यान्मोक्षेऽहंधीः सुखं च न ॥ १२ ॥

यत्तु 'संविन्नाम काचिन्निराश्रया निर्विषया वाऽत्यन्तानुपलब्धेर्न संभवति' (श्रीभा० पृ० ४० प० ४) इत्युक्तं तन्न । प्रागुक्त (पृ० ८२)-रीत्या निर्विषयाया निराश्रयायाः सामान्यानुभूतेरवश्यं स्वीकार्यत्वात् । किं च केयं सामान्यानुभूत्यभावसाधिकाऽनुपलब्धिः । प्रत्यक्षज्ञानाभावश्चेत्परशरीरगतानां जीवानामप्रत्यक्षत्वेनासत्त्वापत्तिः । अथ नेयमत्यन्तानुपलब्धिः । शरीरचेष्टयाऽनुमानेन तत्र जीवोपलब्धेरिति चेदत्रापि विशेषाणां सामान्यपूर्वकत्वनियमेनानुमानप्रमाणं कुतस्ते बुद्ध्यारूढं न भवति । या च निर्विषया निराश्रयानुभूतिः सैव सर्वेषु लोकेष्वहं जानामीत्यादिप्रत्ययेष्वनुवर्तते । ज्ञानसामान्यमनुवर्तते । आश्रयविशेषो विषयविशेषश्च कल्पित एव ।

आत्मनो ज्ञानस्वरूपत्वम्

तथा च ज्ञानाश्रयत्वेन भातोऽहमर्थोऽपि कल्पित एवेति न स आत्मा । किं तु निराश्रयो निर्वि-

पयश्चिद्रूप एवात्मा । अतति व्याप्नोतीत्यात्मा । सामान्यं हि विशेषान् व्याप्नोति। यथा घटशरावादीन्मृत्तिका व्याप्नोति । अतः सर्वापेक्षया यत्सामान्यं तदेव परमार्थत आत्मस्वरूपम् । अथ को विशेषः किं च सामान्यमिति चेदुच्यते— परमाणवः सामान्यम् । द्व्यणुकादयो विशेषाः । रूपरसादयो गुणाः सामान्यम्। गुणी विशेषः । एवमितरत्रापि धर्माः सामान्यं धर्मी विशेषः । सूक्ष्मं सामान्यं स्थूलं विशेषः । आन्तरोऽर्थः सामान्यं बाह्योऽर्थो विशेषः । निराकारं ज्ञानमात्रं सामान्यम् । कल्पितेनाकारेण युक्तं साकारं ज्ञानं विशेषः ।

'अर्थेनैव विशेषो हि निराकारतया धियाम्'

इत्युक्तेः । तथा च सर्वापेक्षया यत्सामान्यं स एवात्मा । तथा हि—मृद्विकारा घटशरावादयो विशेषाः । मृत्तिका सामान्यमिति हि प्रसिद्धमेव । एवं मृदादिषु परमाणवः सामान्यम् । सूक्ष्मत्वात् । परमाणुष्वपि पृथिवीपरमाण्वपेक्षया जलपरमाणवः सामान्यम् । सूक्ष्मतरत्वात् । महाभूतेषु चात्यन्तसूक्ष्मत्वादाकाशं सामान्यम्। आकाशादिमहाभूतापेक्षया तद्गुणाः शब्दस्पर्शादयः सामान्यम् । शब्दतन्मात्रादीनामाकाशाद्यपेक्षयापि सूक्ष्मत्वात् । एवं सकलधर्म्यपेक्षया तद्धर्माः सामान्यम्। तेष्वपि पञ्चमहाभूतेषु तद्धर्मेषु च बाह्यार्थापेक्षयाऽऽन्तरार्थाः सामान्यम् । आन्तरार्थाश्च बुद्धौ कल्पिता इति ज्ञानविशेषा एव ते । तदपेक्षया यज्ज्ञानसामान्यं यदीदृशं तादृशमिति वक्तुं न शक्यते स आत्मा । यत्र धर्मधर्मिभावोऽपि नैव भासते । अत एव निर्विशेषचिन्मात्र आत्मेत्युक्तम् । स एव च सर्वान्बौद्धान्धर्मान्, तद्द्वारा धर्मिणः, आन्तरद्वारा च बाह्यार्थान्, तेष्वपि सूक्ष्मद्वारा स्थूलान्, तत्रापि च मृत्तिकादिद्वारा घटादींश्च सर्वान् व्याप्नोति । सामान्यस्य च विशेषकारणत्वेनात्मनः सर्वकारणत्वात् 'जन्माद्यस्य यतः' (ब्र० सू० १ । १ । २) इति तल्लक्षणं सिद्धम् । बाह्यार्थस्य चान्तरार्थमूलकत्वात्कार्ये च कारणसजातीयत्वकल्पनस्यैवौचित्यात्कारणीभूतस्यान्तरार्थस्येव बाह्यार्थस्य सकलजगतः कल्पितत्वमेव युक्तमित्यपरमार्थत्वं च सिद्धम् । एवं च ज्ञानसामान्यमात्मेति स्थितम् । आश्रयोपाधिका विषयोपाधिकाश्च ये ज्ञानविशेषास्ते सर्वे कल्पिता एवेत्याश्रयो विषयश्च युष्मदर्थ एव । धीविशेषसिद्धो युष्मदर्थ इत्येव वस्तुतो युष्मदर्थस्य लक्षणम् । नायं युष्मदर्थो व्यावहारिकयुष्मदर्थवदस्मदर्थसापेक्षः । तदाग्रहे तु विशेषावस्थोन्मुखं धीसामान्यमेवास्मदर्थ इत्युच्यताम् । व्यावहारिकोऽस्मदर्थस्त्वहंप्रत्ययसिद्धो युष्मदर्थश्च युष्मत्प्रत्ययसिद्ध इत्यत्र न विवादः। किं तु व्यावहारिकस्यास्मदर्थस्यापि 'धीविशेषसिद्धो युष्मदर्थः' इत्येवं युष्म-

दर्थलक्षणाक्रान्तत्वमस्त्येवेति 'अहं जानामीति सिध्यन्नहमर्थश्चिन्मात्रातिरेकी युष्मदर्थ एव' इति मायावाद्युक्तिर्निर्बाधैव । एतेन 'अहं जानामीति सिद्धो ज्ञाता युष्मदर्थ इति वचनं जननी मे वन्ध्येतिव-

अहमर्थो नात्मा

द्व्याहतार्थम्' ( श्रीभा० पृ०४१प०८ ) इत्यपास्तम् । उक्ताभिप्रायाज्ञानात् । व्यावहारिकस्य चाहं जानामीति धीविशेषसिद्धस्याहमर्थस्य न वस्तुत आत्मत्वम् । तस्य स्वविशेषव्यापित्वेऽपि स्वसामान्याव्यापित्वेन सर्वव्यापित्वाभावात् । अत एव तस्य न प्रत्यक्त्वम् । प्रति अञ्चतीति प्रत्यक् सर्वव्यापीत्यर्थः । प्रत्यक्शब्दश्चात्मशब्द-पर्याय एव । स्थावरजङ्गमेषु सकलवस्तुष्वात्मव्याप्तेः सत्त्वेऽपि ब्रह्मादिस्थावरान्तेषु शरीरेषु चित्प्रतिबिम्बभूतजीवरूपेण व्याप्तिरनुभवपथमारोहतीत्यतो लोके जीवः प्रत्यक्शब्देनात्मशब्देन च व्यवह्रियते । स च जीवो ज्ञानव्यञ्जकाहंकारसांनिध्या-त्स्वयमात्मानमहंभावापन्नं मत्वा ज्ञातारं मन्यते । तेनाहं जानामीति धर्मधर्मितया जायमाना व्यावहारिकी धीविशेषरूपा प्रत्यक्षप्रतीतिर्न विरुध्यते । एवं च

'अहमर्थो न चैवात्मा प्रत्यक्त्वं चापि तस्य न' इति सिद्धम् ।

अव्यक्तपरिणामविशेषस्याहंकारस्याहंकारत्वमप्यत एवोपपद्यते । यतोऽय-महंकारः स्वसांनिध्याद्वस्तुतोऽहंभावानापन्नमपि

अहंकारस्वरूपम्

जीवमहंभावापन्नं भासयति । अहंकारशब्दस्य ह्यभूततद्भावेऽर्थे च्विप्रत्ययमुत्पाद्य व्युत्पत्तिर्भवतापि प्रदर्शितैव ( श्रीभा० पृ० ५३ प० ११ ) । अहंकारो हि महत्तत्त्वस्य साक्षात्परिणामः । महत्तत्त्वं हि बुद्धिरूपम् । अहंतेदंते च बुद्धिविशेषौ । अतः स्वभावत एवायमहंभावापन्नोऽहंकारः स्वसांनिध्याद्वस्तुतोऽहंभावानापन्नमपि जीवमहंभावा-पन्नं करोतीति युक्तम् । अथ 'वस्तुतोऽहंभावापन्नो जीवः । वस्तुतोऽहंभावाना-पन्नश्च देहादिः । अव्यक्तपरिणामविशेषश्चाहंकारो देहादिकमहंभावापन्नजीवसांनि-ध्यादहंभावापन्नं करोति' इति चेदव्यक्तपरिणामविशेषस्याहंकारस्याहंभावोऽ-स्ति वा नवा । नास्ति चेत्सोऽव्यक्तपरिणामविशेषः कथं स्वस्मिन्नसन्तमहंभावं जीवनिष्ठं देहादौ प्रदर्शयेत् । न हि हरिद्रा स्वस्मिन्नसन्तं रक्तिमानं जपाकुसुमस्थं जपाकुसुमसंनिहितेऽपि स्फटिके प्रदर्शयितुं प्रभवति । अस्तिचेत्सोऽहंभावः स्वाभाविको नैमित्तिको वा । आद्ये तेनैव जीवे देहादौ चाहंभावोपपत्तौ किमतिरिक्तेन जीवनिष्ठेनाहंभावेन । जीवेऽव्यक्तपरिणामविशेषाहंकारे चेत्युभयत्रापि स्वाभाविकाहंभावकल्पने गौरवम् । किं च तथासति देहादौ सांनिध्यादिनिमित्तवशाद्द्वय-

मानोऽहंभावो वस्तुतोऽव्यक्तपरिणामविशेषनिष्ठ एव न जीवनिष्ठ इत्यत्र नियामकाभावः। तथात्वे तु जीवोऽप्यहंकारपदवाच्यः स्यात्। तच्च तवाप्यनिष्टम्। इष्टत्वे तु मोक्षेऽहंकारविलयस्य त्वत्संमतत्वेन जीवविलयापत्तेः। नैमित्तिकश्चेत्सोऽहंभावो जीवसांनिध्यादिति वक्तव्यम्। तादृशनैमित्तिकाहंभावविशिष्टोऽव्यक्तपरिणामविशेषो यद्देहादावहंभावं प्रदर्शयति तत्किं वास्तविकाहंभावाश्रयजीवसांनिध्ये तदसांनिध्ये वा। आद्ये जीवनिष्ठ एव देहादावहंभावः प्रदृश्येत किं मध्ये गडुभूतेनाव्यक्तपरिणामविशेषेण। अन्त्ये स्वस्मिन्नेवाविद्यमानमहंभावं कथं देहादौ प्रत्याययितुं प्रभवेत्। अहंकारपदवाच्यत्वानुपपत्तिश्च। किं च जीवासांनिध्येऽहंकारस्यापि न स्थितिः। प्रेतीभूते देहेऽहंकारादर्शनात्। किं चास्मिन्नपि पक्षे जीवोऽहंकारपदवाच्यः स्यादिति प्रागुक्तदोषस्तदवस्थ एव। किंच जीवनिष्ठोऽहंभावः कस्मिंश्चिदेवाव्यक्तपरिणामविशेषे प्रतीयते न सर्वेष्वित्यत्र नियामकाभावः। तस्मादिदंभाववदहंभावोऽपि बुद्ध्यैव कल्पित इति वस्तुतोऽव्यक्तपरिणामविशेषनिष्ठ एव सोऽङ्गीकर्तव्यः। तादृशाहंभावाश्रयोऽव्यक्तपरिणामविशेष एवाहंकारः। स एव च देहादाविव जीवेऽप्यहंभावं प्रदर्शयति। युक्तं चैतत्। महत्तत्वं ह्यव्यक्तपरिणामः। महत्तत्वं च बुद्धिः। अहंतेदंते च बुद्धिविशेषभूते इति न जीवात्मनि वास्तविकाहंभावो युक्तः।

मोक्षे नाहंभावः — मोक्षावस्थायां चाहं जानामीत्यपि प्रतीतिर्न भवत्येव। तादृशप्रतीतेः प्रतीतिविशेषत्वेन कल्पितत्वात्। किं चाहं जानामीति प्रतीतिर्धर्मधर्मिभावसापेक्षा। मोक्षे तु धर्मधर्मिभावोऽपि नास्त्येव। यतो धर्मधर्मिभावे स्वगतो भेदो भासते। भेदस्य च भयजनकत्वव्याप्यत्वनियमः प्रसिद्ध एव। भयं च तारतम्येन क्वचिन्महत्क्वचिन्मध्यमं क्वचिन्न्यूनं क्वचिन्न्यूनतरं क्वचिदुद्भूतं क्वचिदनुद्भूतमित्यन्यत्। परं तु भेदस्थले भयलेशोऽपि नास्तीति दुर्वचम्। यतः पुत्रादपि भयं दृश्यते। स्वशरीरस्थादपि दन्तनखादेः सकाशाद्भयमनुभूयते। स्वशब्दादपि च भयं दृश्यते। यथा 'तत्राभिनिविष्टस्य मम मुखात्के शब्दा निर्गच्छन्तीति न जाने। अतस्तत्र गमनमेव न युक्तम्' इति हि लोके प्रतीतिः। 'द्वितीयाद्वै भयं भवति' इत्युक्तिश्चात एव संगच्छते। मोक्षावस्थायां तु 'अभयं वै जनक प्राप्तोऽसि' (बृ० ४।२।४) इति श्रुतिर्भयगन्धोऽपि नास्तीति दर्शयति। तस्मात्तत्र धर्मधर्मिभावो वक्तुमशक्यः। अत एव तत्र ज्ञातृज्ञेयभावो विषयविषयिभावश्च न। नन्वेवं तत्र सुखानुभवोऽपि न स्यात्। तत्प्रतीतौ ह्यनुभूत्यनुभवित्रोर्धर्मधर्मिभावः, सुखानुभवित्रोर्ज्ञेयज्ञातृभावः, सुखानुभूत्योर्विषयविषयिभावश्च

विद्यत इति चेत्सत्यमेतत् । किं तर्हि तत्र सुखलेशोऽपि नास्ति । को ब्रूतेऽस्तीति । मोक्षावस्थाया निरतिशयोत्कर्षे किं निमित्तमिति चेद्दुःखात्यन्ताभाव इति गृहाण । तत्र सुखोक्तिस्तु 'भारापगमे सुखी संवृत्तोऽहमितिवद्दुःखाभावे सुखमुपचर्यते' इत्यभिप्रायेण वोध्या । मोक्षार्थं प्रवृत्तिस्तु दुःखनिवृत्त्यर्थैव । एतेन

निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट् ।
भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ॥

इत्यपास्तम् । मुमुक्षोर्नियमेन तादृक्संकल्पस्यादर्शनात् । क्वचित्तथा संकल्पो दृश्यत इत्याग्रहे तु दुःखात्यन्ताभावस्यौपचारिकसुखत्वेन तत्रानन्तानन्दभ्रान्त्या स योजनीयः ।

नन्वेवमपि प्रागुक्तरीत्या मोक्षेऽहमर्थानुवृत्त्यभावेन 'अहमनन्तानन्दभाग्भवेयम्' इति संकल्पः कथमुपपद्यत इति चेद्भ्रान्तोऽसि । ईदृशसंकल्पोपपादनाय संकल्पकालेऽहंत्वेन प्रतीतस्य वस्तुनो मोक्षकाले सत्त्वमेव केवलमपेक्ष्यते न तु मोक्षकालेऽहंत्वेन प्रतीत्यपेक्षा । प्रतीतेरेव नापेक्षा किमुताहंत्वेन । तथा च संकल्पकाले प्रतीतस्याहमर्थस्य मोक्षावस्थायामनुवृत्त्यभावेऽपि न क्षतिः । 'अहमनन्तानन्दभाग्भवेयम्' इत्येव संकल्पः । न तु 'तदानीमहं तथाविधमात्मानमनन्तानन्दभाक्त्वेनानुसंदध्याम्' इति । लोकेऽपि निद्रातः प्राक् 'अहं निद्रासुखमनुभवेयम्' इति क्वचित्संकल्पो दृश्यते । परं तु तत्रापि सुषुप्तिकाले 'अहमिदानीं सुखमनुभवामि' इत्यनुसंधानं न दृश्यते । एवं च मोक्षे नाहमर्थानुवृत्तिः । प्रागुक्तरीत्या मोक्षे भेदस्य कथमप्यभावेन धर्मधर्मिभावस्य वक्तुमशक्यतयाऽहमर्थानुवृत्तेर्दुरुपपादत्वाच्च । तथा च दुःखात्यन्ताभावायैव मोक्षे प्रवृत्तिरिति सिद्धम् ।

मोक्षशब्दार्थः

लोकेऽपि पञ्जरस्थाः शुकादयो योग्यकाले स्वाद्वन्नं भक्षयन्तोऽपि वने कस्मिन्नपि काले किमपि फलं प्राप्स्यतीति संभावनामात्रेण पञ्जरान्मोक्षमिच्छन्ति तत्र बन्धदुःखनिवृत्त्यर्थमेव प्रयत्नो दृश्यते । ईदृशी च मोक्षावस्था मुच्लृ मोक्षण इति धात्वर्थानुगुणैव । मोक्षो हि मुक्तिः । सा च कस्मादप्यपसरणरूपा । न तु तत्र कस्यचिदन्यस्य प्राप्तिः । किं च बन्धमोक्षयोः परस्परप्रतिद्वन्द्विभूतत्वेन तादृश एव मोक्षपदार्थो वक्तव्यो यो बन्धप्रतिद्वन्द्विभूतः । बन्धश्च दुःखनियत इति दुःखविरोधिभूतदुःखात्यन्ताभावनियतो मोक्षः । न हि सुखं दुःखविरोधि । सुखदुःखयोः सामानाधिकरण्यदर्शनात् । अत एव वैशेषिकैः

सुखदुःखयोर्द्वयोरपि गुणत्वेन पृथङ्निर्देशः कृतः । अन्यथा तमसस्तेजोऽभावरूपत्वमिव सुखस्य दुःखाभावरूपत्वं दुःखस्य वा सुखाभावरूपत्वं तैः कल्पितं स्यात् । दुःखात्यन्ताभावश्च लेशतोऽपि दुःखसत्त्वे न संभवतीति स एव दुःखविरोधी । तस्मादर्थस्वाभाव्यादपि दुःखात्यन्ताभावो मोक्षः सिध्यति । दुःखनिवृत्तिश्चानुकूलप्रतिकूलान्वयविरहे स्वरूपेणावस्थितिः । रामानुजैरपि तथैव व्याख्यातम् ( श्रीभा० पृ० १२९ प० ५ ) । अनुकूलप्रतिकूलान्वयविरहश्चानुकूलस्य प्रतिकूलस्य च स्वद्वितीयस्य वस्तुन एवाभावेन वा, तादृशवस्तुनः सत्त्वेऽपि तत्संबन्धाभावेन वा, संबन्धसत्त्वेऽपि संबन्धप्रतिभासाभावेन वा भवति। तत्र द्वैतिनां मते मोक्षे द्वितीयस्य वस्तुनोऽभावो दुरुपपादः । तत्र 'द्वितीयाद्वै भयं भवति' इति न्यायेन भयसंभावनायामपि मोक्षे भयात्यन्ताभावः 'अभयं वै जनक प्राप्तोऽसि' ( बृ० ४ । २ । ४ ) इतिश्रुत्येकशरणतया श्रद्धाजाड्येन कल्पनीयः स्यात् । अद्वैतिनां तु मते श्रुतिप्रतिपादितो मोक्षे भयात्यन्ताभावो युक्त्यैवोपपादितो भवति । द्वितीयाभावेन भयसंभावनाया अप्यसत्त्वात् । तथा च द्वितीयवस्तुनोऽभावस्याभयं वै जनक प्राप्तोऽसीतिश्रुत्यनुगुणतया कथं मोक्षे सुखातिशयकल्पना युज्येत । सुखस्य द्वितीयसापेक्षत्वात् । किं च मोक्ष उत्कर्षातिशयो यथा दुःखात्यन्ताभावेन वक्तुं शक्यते न तथा सुखातिशयेनापि । यतोऽल्पेनापि दुःखेन महदपि सुखमभिभूयत इति प्रसिद्धं लोके । तथौपचारिकेणापि दुःखेन सुखाभिभव इतिहासादिषु प्रसिद्धः । औपचारिकं दुःखं च सुखाभावरूपम् । तादृशेनौपचारिकेणाप्यनपत्यताजन्मना दुःखेन दशरथः श्रीरामचन्द्रोत्पत्तेः प्राक् सर्वमपि राज्यादिवैभवं व्यर्थं भावितवान् । अथौपचारिकमपि स्वल्पमपि च दुःखं यत्र नास्ति स एव सुखातिशय इति चेदेवं तर्हि सुखातिशयनिरूपणस्य दुःखात्यन्ताभावनिरूपणाधीनतयोभयसंमतेन दुःखात्यन्ताभावेनैवोपपत्तौ किं तत्रातिरिक्तसुखातिशयकल्पनया । तदेवं मोक्षावस्थायां द्वैतगन्धस्यापि वक्तुमशक्यतया तत्राहमर्थानुवृत्तिर्दुर्घटा । अहमर्थप्रतीतेर्भेदमूलकधर्मधर्मिभावसापेक्षत्वात् । मोक्षे प्रवृत्तिस्तु न सुखार्था किं तु दुःखनिवृत्त्यर्थैवेत्युपपादितमेव । यथा पादे कण्टकेन विद्धस्य तन्निःसारणे प्रवृत्तिस्तद्वत् । इयांस्तु विशेषः—कण्टकनिःसारणोत्तरं दुःखनिवृत्तिः प्रतीयते । मोक्षे तु सापि नेति । एतेन दुःखनिवृत्त्यर्थायां प्रवृत्तावपि मोक्षे दुःखनिवृत्तेः प्रतीततया तदानीं ज्ञातृज्ञेयभावोऽस्तीति भेदो दुर्निवार इत्यपास्तम् । किं च न हि दुःखनिवृत्तिरनुकूलेति प्रार्थ्यते । किं तु दुःखं प्रतिकूलमिति तन्निवर्तयितुमिष्यते । 'दुःखस्य प्रतिकूलतया तन्निवृ-

त्तिरिष्टा भवति नानुकूलतया ' ( श्रीभा० पृ० १२९ प० ४ ) इत्युक्तवतस्तवाप्येतत्संमतमेव । एतेन

अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत् ( श्रीभा०पृ०४०प०१३ )

इत्याद्युक्तं स्वकपोलकल्पनाजालमपास्तम् ॥ १२ ॥

यत्तु

' स्वसंबन्धितया ह्यस्याः सत्ताविज्ञप्तितादि च ।
स्वसंबन्धवियोगे तु ज्ञप्तिरेव न सिध्यति ।
छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत् । ' ( श्रीभा० पृ० ४० प० २१ )

इत्यनेन ग्रन्थेनाश्रयभूताहमर्थापेक्षयैव ज्ञानस्य ज्ञानत्वमस्तित्वं चेत्युक्तं तत्रोच्यते—

संविदो नाश्रयापेक्षा न ज्ञातृत्वं तथात्मनः ।
ज्ञानस्वरूप एवात्मा ज्ञात्रन्तःकरणं भवेत् ॥ १३ ॥

व्यावहारिकज्ञानविशेषविषये ज्ञानस्याश्रयापेक्षास्तु नाम । यच्च सर्वज्ञानमूलभूतमनुभूतिसामान्यं तस्याश्रयापेक्षा सुतरां न संभवति । आश्रयापेक्षया तत्सिद्धिश्चेज्ज्ञानसामान्यस्वरूपभङ्गापत्तेरित्यसकृदावेदितम् । किं च व्यवहारेऽपि

संविन्निराश्रया

सृष्ट्यारम्भोत्तरं शब्दतन्मात्रादिभ्यस्तदाश्रयाणां महाभूतानामुत्पत्तिः सांख्यैरुक्ता भवतापि स्वीकृता च । तत्र कथमाश्रयानपेक्षया तेषां सिद्धिः । अथ शब्दादयो गुणाः, न तथा ज्ञानम् । ज्ञानं तु छेदनादिवत्क्रियेति चेत्तथासति क्रियाया अनित्यत्वनियमेन ज्ञानस्याप्यनित्यत्वापत्तौ ' नित्यज्ञानाश्रय ईश्वरः ' इति त्वदीय एव सिद्धान्तो विरुद्धः स्यात् । यत्तु

' अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ' ( श्रीभा० पृ० ४१ प० २ )

आत्मनो न ज्ञातृत्वम्

इत्युक्तं तत्र प्रत्यगात्मपदेन किं जीवात्मा विवक्षितोऽथवेश्वर उत निर्विशेषचिन्मात्रं ब्रह्म । आद्ये द्वितीये च सिद्धसाधनम् । जीवेश्वरयोरव्यक्तपरिणामविशेषाहंकारसांनिध्येनाहंभावाश्रययोर्ज्ञातृत्वस्यास्माभिरप्यङ्गीकारात् । न तृतीयः । त्वया तदनङ्गीकारात् । तस्य निर्विशेषत्वेनाहंभावाश्रयत्वज्ञातृत्वादेरसंभवाच्च । ज्ञातृत्वादेः कल्पितत्वेन ज्ञातृस्वरूपस्य विनाशित्वान्न ब्रह्म ज्ञातृस्वरूपम् । यत्तु ' विज्ञातारमरे केन विजानीयात् ' ( बृ० २ । ४ । १४, ४ । ५ । १५ ) इति श्रुतिर्ब्रह्मणो विज्ञातृत्वमाहेति तत्र विज्ञातृत्वं कल्पितमेव श्रुतितात्प-

र्यविषयीभूतम् । कल्पितज्ञातृत्वविशिष्टस्यापि ज्ञानं न केनापि साधनेन संभवति किमुत शुद्धस्य ज्ञातृत्वादिरहितस्येति । ज्ञातृत्वस्य सत्यत्वे 'विज्ञानं ब्रह्म' (बृ० ३ । ९ । २८) इतिश्रुतिविरोधः स्यात् ।

यत्तु 'यथैकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते.... ....एवमात्मा चिद्रूप एव चैतन्यगुणः' (श्रीभा० पृ० ४१ प० १४) इत्युक्तं तत्रोच्यते—एकमेवेत्यस्यैकजातीयमित्यर्थ उतैकत्वसंख्यावच्छिन्नमिति । आद्ये तेजस्त्वेनैकजातीयं तेजो यथा दीपस्तत्प्रभा चेत्युभयरूपं दृश्यते तथा ज्ञानत्वेनैकजातीयं ज्ञानमात्मा तद्गुणश्चेत्युभयरूपमित्यर्थः स्यात् । तथा सत्युभयोर्धर्मधर्मिणोर्ज्ञानयोरेकजातीयत्वेन धर्मभूतज्ञानस्येव धर्मिभूतज्ञानस्याप्याश्रयो विषयश्च वक्तव्यः । द्वैतिनां मते विषयस्य कथंचिद्वक्तुं शक्यत्वेऽप्याश्रयो दुरुपपाद एव । ज्ञानस्य ह्याश्रय आत्मैव वक्तव्यः । तथा च धर्मिभूतज्ञानमात्मस्वरूपं तदाश्रयश्चात्मेत्यात्माश्रयः । आश्रयभूतस्यात्मनो ज्ञानस्वरूपात्मनश्च भेदे तु स आश्रयभूत आत्मा ज्ञानस्वरूपो वा जडो वा । आद्ये तस्यापि ज्ञानस्य पुनरन्य आश्रय इत्यनवस्था । अन्त्ये स्वमतप्रच्युतिः । गुणभूतज्ञानस्यात्मस्वरूपभूतज्ञानस्य च विजातीयत्वे तु 'एकमेव' इत्युक्तिविरोधः । किं च भिन्नजातीयत्वाङ्गीकारेण धर्मिभूतस्यात्मस्वरूपभूतज्ञानस्य निराश्रयस्य स्वीकारे निराश्रयनिर्विशेषज्ञानवादिभिर्मायावादिभिः किमपराद्धम् । किं च 'अनुभूतिरिति स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभावो ज्ञानावगतिसंविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेषो घटमहं जानामीममर्थमवगच्छामि घटमहं संवेद्मीति सर्वेषामात्मसाक्षिकः प्रसिद्धः' (श्रीभा० पृ० ३९ प० ९) इति ग्रन्थेन यज्ज्ञानस्य साश्रयत्वं साधितं तत्सर्वमत्र धर्मिभूतज्ञानं निराश्रयं स्वीकुर्वतो विरुद्धं स्यात् । किं च मिथोविलक्षणज्ञानद्वयस्वीकारे तदुभयानुगतैकप्रवृत्तिनिमित्ताभावाज्ज्ञानशब्दस्य नानार्थत्वापत्तिः । किं च गुणभूतं ज्ञानमात्मनः स्वाभाविकं नित्यं न च सर्वथा धर्मिणः सकाशाद्भिन्नम् । तथा च तेनैवात्मनो जडत्वाभावे सिद्धे किमर्थं पुनस्त्वयाऽऽत्मस्वरूपभूतं ज्ञानं स्वीकृतम् । 'विज्ञानमानन्दं ब्रह्म' (बृ० ३ । ९ । २८) इतिश्रुत्युपपत्तयेऽगत्या स्वी क्रियत इति चेच्छ्रुतिश्चेच्छरणं तर्हि तेनैव सिद्धौ कृतं गुणभूतज्ञानेन । शुक्लो घटो घटे शुक्लो गुण इत्युभयविधव्यवहारो यथैकेनैव घटस्वरूपविशेषभूतेन शुक्लगुणेनोपपद्यते तद्वत् । किं च यदि गुणभूतज्ञानं धर्मिभूतज्ञानं चेत्यर्थद्वयं ज्ञानशब्दस्य

ज्ञानद्वयासंभवः

श्रुतेरभिप्रेतं स्यात्तर्हि निःसंशयप्रतिपत्तय उभयत्रैक एव ज्ञानशब्दो न प्रयुक्तः स्यात् । तस्माद्धर्मभूतज्ञानं पृथक्, धर्मिभूतज्ञानं च पृथगिति भेदो न श्रुतिसंमतः । अथैकमेवेत्यस्यैकत्वसंख्यावच्छिन्नमित्यर्थश्चेत्तत्र धर्मधर्मिभावः कल्पित इत्यापतति । ततश्च धर्मधर्मिभावो वास्तविक इति त्वत्सिद्धान्तो विरुद्धः स्यात् ।

आत्मा ज्ञानस्वरूप एव

यत्तु ' संविदनुभूतिज्ञानादिशब्दाः संबन्धिशब्दा इति शब्दार्थविदः । न हि लोकवेदयोर्जानात्यादेरकर्मकस्याकर्तृकस्य च प्रयोगो दृष्टचरः ' ( श्रीभा० पृ० ४३ प० ४ ) इत्युक्तं तत्तुच्छम् । तथा सति स्वरूपभूतज्ञाने ज्ञानशब्दप्रयोगो न स्यात् । रूढ्या चेन्ममापि तथैव । निर्विशेषानुभूतिरेवात्मेति प्रागुक्तमेव । प्रयोगश्च संविदात्मा, अजडत्वात् । यन्नैवं तन्नैवं यथा घटादिरिति केवलव्यतिरेकी हेतुः । अजडत्वं चानन्याधीनप्रकाशस्वरूपत्वम् । घटदीपसुखादयश्च न प्रकाशस्वरूपाः । प्रकाशश्च तेषां ज्ञात्रधीनः । ज्ञातापि न प्रकाशस्वरूपः । प्रकाशश्च तस्य कल्पितज्ञानाश्रयत्वमूलकः । अतः सोऽपि नात्मा । किं तु ज्ञानरूप एवात्मा । ज्ञाता तु ज्ञानाश्रयत्वेन कल्पितो ज्ञानव्यञ्जकोऽहंकार एव । एतेन ' स्वसत्ताप्रयुक्तप्रकाशत्वमिति चेत्तथासति दीपादिष्वनैकान्त्यम् ' ( श्रीभा० पृ० ४३ प० ८ ) इत्यादिग्रन्थेनाजडत्वस्य व्याख्यान्तरं कल्पयित्वा कृतं तत्खण्डनं प्रत्युक्तम् । एवं च जानाम्यहमित्येवमात्मविषयिणी प्रतीतिर्भ्रम एव । देहात्माभिमानवत एव प्रतिभासनाज्ज्ञातृत्वं मिथ्यैव । अनुभूतिः परमार्थतो निर्विषया निराश्रया च सती भ्रान्त्या ज्ञातृतयाऽवभासते रजततयेव शुक्तिः । यत्तु ' एतदयुक्तम् । तथासत्यनुभवसामानाधिकरण्येनानुभविताऽहमर्थः प्रतीयेतानुभूतिरहमिति । पुरोवस्थितभास्वरद्रव्याद्याकारतया रजतादिरिव । अत्र तु पृथगवभासमानैवेयमनुभूतिरर्थान्तरमहमर्थं विशिनष्टि दण्ड इव देवदत्तम् । तथा ह्यनुभवाम्यहमिति प्रतीतिः । तदेवमस्मदर्थमनुभूतिविशिष्टं प्रकाशयन्ननुभवाम्यहमिति प्रत्ययो दण्डमात्रे दण्डी देवदत्त इतिप्रत्ययवद्विशेषणभूतानुभूतिमात्रावलम्बनः कथमिव प्रतिज्ञायेत ' ( श्रीभा० पृ० ४४ प० ५ ) इत्युक्तं तदापाततः । न हि भ्रमकाले ' अनुभूतिरहम् ' इतिप्रतीत्यापादनं युज्यते । भ्रमकालेऽधिष्ठानस्य स्वरूपेण प्रतीत्यभावात् । तथाऽनुभवसामानाधिकरण्येनानुभविताऽहमर्थः प्रतीयेतेत्यप्ययुक्तम् । अधिष्ठानसामानाधिकरण्येनैवारोप्यस्यानुभवविशिष्टाहमर्थस्य प्रतीयमानत्वात् । तथा ह्यनुभवाम्यहमिति प्रतीतावधिष्ठानभूतानुभूतिवैयधिकरण्येनानुभवितुरहमर्थस्य प्रतीतिरिति कथ-

मवगतं त्वया । न ज्ञानुभवाम्यहमित्यत्राहमर्थविशेषणीभूतो योऽनुभवः स एवाधिष्ठानम् । किंतु सन्मात्रानुभूतिरेवाधिष्ठानम् । अहमर्थविशेषणीभूतोऽनुभवश्चाव्यक्तपरिणामविशेषः प्रातिभासिकान्तर्गत एव । ननु तर्हि यथेदं रजतमित्यत्राधिष्ठानस्येदंत्वेन प्रतीतिस्तथाऽत्राधिष्ठानस्य केन रूपेण प्रतीतिरिति चेत्सद्रूपेणेति गृहाण । अन्ततोऽस्तितायाः सर्वत्र सत्त्वात् । सतश्च सामानाधिकरण्येन प्रतीतिः । किं चाधिष्ठानस्याहमर्थविशेषणीभूतज्ञानत्वेन प्रतीतिरिति सुतरां वक्तुमशक्यम् । अधिष्ठानस्य निर्विशेषसन्मात्ररूपत्वेन तस्येतरविशेषणीभवनानर्हत्वात् । एतेन 'आत्मतयाऽभिमताया अनुभूतेरपि मिथ्यात्वं स्यात् । देहात्माभिमानवत एव प्रतीतेः' ( श्रीभा० पृ० ४४ प० १४ ) इत्युक्तमपास्तम् । अहमर्थविशेषणत्वेनाहं जानामीति प्रतीयमानाया अव्यक्तपरिणामविशेषभूताया अनुभूतेर्मिथ्यात्वस्येष्टत्वात् । न हीयमधिष्ठानभूताऽनुभूतिः । तस्याः स्वमात्ररूपेण ज्ञेयत्वाभावेन प्रतीयमानत्वाभावात् । अत एव सा तत्त्वज्ञानेन बाधिता न भवति । यच्च प्रतीयते तदिदंकारास्पदमहंकारास्पदं वा वस्तु बाधार्हं भवति । न तु प्रतीतिरेव बाध्यते । प्रतीतिरप्यव्यक्तपरिणामविशेषभूता साश्रया सविषया बाधार्हैव । न तु निर्विशेषसन्मात्ररूपा कस्यामप्यवस्थायां बाध्यते ।

यत्तु 'अन्तःकरणरूपस्याहंकारस्य न ज्ञातृत्वमुपपद्यते । देहस्येवाचेतनत्वप्रकृतिपरिणामित्वदृश्यत्वपराक्त्वपरार्थत्वादियोगादन्तःकरणरूपाहंकारस्य । चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्य' ( श्रीभा० पृ० ४५ प० २ ) इत्युक्तं तन्न ।

**अहंकारस्य ज्ञातृत्वम्**

लौकिकं घटादिविषयकं ज्ञानं हि मानसी क्रिया मनोवृत्तिविशेषो मनसस्तत्तद्विषयाकारेण परिणामः । ज्ञातृत्वं च ज्ञानक्रियाश्रयत्वम् । तच्च मनस एव संभवति न त्वात्मनः । एतेन 'अन्तःकरणं न ज्ञातृ, अचेतनत्वाद्घटवत्' इत्यनुमानं निरस्तम् । ज्ञानस्य मनःपरिणामविशेषरूपत्वेन मनस्येव तत्संभवात् । आत्मा न ज्ञाता, अपरिणामित्वादित्यनुमानेनात्मनो ज्ञातृत्वाभावश्च सिध्यति । न च ज्ञातृत्वं ज्ञानगुणाश्रयत्वम् । क्रियावाचकाद्धातोराश्रये तृच्प्रत्ययः स्मर्यते व्याकरणे । ज्ञानक्रियैव ज्ञानगुणशब्देनोच्यत इति चेदस्तु नाम । तथापि विकारभूतस्य मनस एव सा न तु निर्विकारस्यात्मनः । यद्यप्यचेतनत्वप्रकृतिपरिणामित्वदृश्यत्वपराक्त्वपरार्थत्वादिभिर्बहुभिर्धर्मैर्मनसो घटादिसाम्यं तथापि ज्ञातृत्वे वैधर्म्याङ्गीकारे बाधकाभावः । यथा तैरेव धर्मैः शरीरस्य घटादिसाम्येऽपीन्द्रियाश्रयत्वेन चेष्टाश्रयत्वेन च वैधर्म्यं तद्वत् । ईदृशी मनोवृत्तिरूपा ज्ञानक्रिया

मनसां वस्तुत एवानेकत्वादुपाधिभेदेन भेदाद्वा तत्तन्मनोगता विभिन्नैव। एक-मनोगतापि च कालभेदेन भिन्नैव। तथा चैकज्ञानक्रियाकर्तृभूतस्य मनसोऽपर-ज्ञानक्रियाकर्मत्वमविरुद्धमेव। एतेन ज्ञानकर्मणोर्विरोधादेव न ज्ञातृत्वम् (श्रीभा० पृ० ४५ प० ७) इत्यपास्तम्। एकक्रियानिरूपितयोर्हि ज्ञातृत्वज्ञेयत्वयो-र्विरोधः स्यात्। न तु भिन्नक्रियानिरूपितयोः। अन्यथा भवन्मतेऽप्यात्मनो ज्ञान-कर्मणो विरोधादेव ज्ञातृत्वाभावप्रसङ्गो दुर्वार इति ॥ १३ ॥

अनित्यं व्यञ्जयेज्ज्ञानमहंकारो हि लौकिकम्।

सुप्तावहंता न तथाप्यात्मनस्तत्र साक्षिता ॥ १४ ॥

सा च ज्ञानक्रियाऽनित्यैव क्रियात्वात्। एतेन 'ज्ञानं चास्यात्मनो नित्यस्य स्वाभाविकधर्मत्वेन नित्यम्' (श्रीभा० पृ० ४५ प० १०) इत्यपास्तम्। ज्ञानक्रियाया अनित्य-त्वादेव चोत्पन्नं ज्ञानं विनष्टं ज्ञानमिति व्यवहार उपपद्यते।

अहंकारव्यङ्ग्यं ज्ञानमनित्यम्

न च ज्ञानं नित्यमेव। उत्पन्नं विनष्टमिति व्यवहारस्तु ज्ञानविकास-संकोचमूलको गौणः। कर्मणा च ज्ञानस्य संकोचविकासाविति वाच्यम्। सत्यामुपपत्तौ गौणत्वे प्रमाणाभावात्। किं च संकोचविकासौ ह्युपचयापचया-वेवेति ज्ञानस्य विकारित्वेनानित्यत्वप्रसङ्गस्तदवस्थ एव। किं चैवं जीवस्या-प्यनित्यत्वप्रसङ्गः। यतो ज्ञानमात्मनः स्वाभाविको गुण इति त्वयैवोक्तम् (श्रीभा० पृ० ४५ प० ११)। स्वाभाविकगुणस्य ह्युपचयापचयावाश्रयोपच-यापचयावन्तरेण नैव संभवतः। कार्येषु भूतेषु गुणोपचये मूर्त्युपचयदर्शनात्। इदं च मनोवृत्तिविशेषरूपं लौकिकं ज्ञानं प्रातिभासिकान्तर्गतमेव। अस्यैवाभिव्य-ञ्जकोऽहंकारः स्वात्मस्थतया तदभिव्यनक्ति। आदर्शादिवत्। अभिव्यञ्जकानां ह्ययं स्वभाव एव यत्स्वात्मस्थतयाऽभिव्यङ्ग्याभिव्यञ्जनम्। न त्वहंकारोऽनुभू-तिस्वरूपं परमात्मानमभिव्यनक्तीति ब्रूमहे। परमात्मनोऽहंकारव्यङ्ग्यत्वाभा-वात्। एतेन

'शान्ताङ्गार इवादित्यमहंकारो जडात्मकः।
स्वयंज्योतिषमात्मानं व्यनक्तीति न युक्तिमत्' (श्रीभा० पृ० ४६ प० १६)

इत्यपास्तम्। न च लौकिकमपि मनोवृत्तिविशेषरूपं ज्ञानं प्रकाश-स्वरूपतां दधात्येवेति कथमप्रकाशस्वरूपेण जडेनाहंकारेण तद्व्यञ्ज-नमिति वाच्यम्। यतो नायं नियमः प्रकाशस्वरूपस्याप्रकाशस्वरूपेण नैवाभिव्यञ्जनमिति। अप्रकाशस्वरूपेणापि जलादिना प्रकाशस्वरूपस्य सूर्यस्याभिव्यक्तिर्दृश्यते। न चेदं लौकिकमपि ज्ञानं सर्वेषां जडानां प्रकाश-

क्रमस्तीति तस्य स्वप्रकाश्याहंकारेण कथमभिव्यक्तिरिति वाच्यम् । यतो यमपि न नियमो यत्स्वप्रकाश्येन स्वस्य नाभिव्यक्तिरिति । अन्धकारावृ पवरके केनचित्सूक्ष्मरन्ध्रेण प्रविष्टानां रविकराणां स्वाभिव्यङ्ग्यकरतलेनाभि व्यक्तिदर्शनात् । यत्तु 'करतलप्रतिहतगतयो हि रश्मयो वहुलाः स्वयमेव स्फुरं रमुपलभ्यन्त इति तद्वाहुल्यमात्रहेतुत्वात्करतलस्य नाभिव्यञ्जकत्वम्' (श्रीभा० पृ० ४७प०८) इति तन्न । करतलस्य चिरधारणेऽपि रश्मिबाहुल्याननुभवात् । रश्मयं हि चाक्षुषप्रत्यक्षविषयः । अतस्तद्बाहुल्यसत्त्वे तस्य बाहुल्यस्य प्रत्यक्षं स्यादेव उत्तरोत्तरमसह्यता तु सूक्ष्मच्छिद्रद्वारा करतले रश्मीनां प्रवेशाधिक्येन भवति । अ वा बाहुल्यम् । तथापि बाहुल्यसंपादनद्वारैव करतलस्य रश्म्यभिव्यञ्जकत्वमक्ष मेव । यत्तु 'अस्य संविद्रूपस्यात्मनोऽहंकारनिर्वर्त्याभिव्यक्तिः किंरूपा । न ताव त्पत्तिः । स्वतःसिद्धतयाऽनन्योत्पाद्यताभ्युपगमात् । नापि तत्प्रकाशनम् । तस अनुभवान्तराननुभाव्यत्वात्' (श्रीभा०पृ०४७प०११) इत्युक्तं तन्न । संविद्रू स्यात्मनोऽभिव्यक्तेरस्माभिरनभ्युपगमात् । मनोवृत्तिविशेषरूपस्य ज्ञानस्य चानु वान्तरानुभाव्यत्वमस्त्येवेति तत्प्रकाशनरूपा तदभिव्यक्तिः सुलभैव । यथाऽपवर केनचिद्रन्ध्रेण प्रविष्टा अपि सूर्यरश्मयो यावन्निराश्रितास्तावन्न प्रकाशि भवन्ति, यथा वा शब्दतन्मात्रादयो निराश्रिता न प्रकाशन्ते किं तु साश्र एव तथेदं मनोवृत्तिविशेषरूपं ज्ञानमपि । यथा च करतलं स्वयमेव सूर्यरश्म श्रयो भूत्वा तैरेव स्वयमभिव्यक्तं सत्तान्प्रकाशयति तथा मन एवाहंकाररू तादृशज्ञानाश्रयो भूत्वा तेनैव ज्ञानेन स्वयमभिव्यक्तं सत्तज्ज्ञानं प्रकाशय तदिदमभिव्यक्तं ज्ञानं बोद्धृगतं कल्मषमपनयति । कल्मषं चेदं न सर्वजगन्मू भूतभावरूपाज्ञानरूपम् । किं तु तस्यैव ये परिणामविशेषा अल्पाल्पास्तच्छ लभूता इव येऽविद्याविशेषाः सर्पाभासकारणीभूतरज्ज्वज्ञानादयस्तद्रूप एतदविद्याविशेषनिरासकं रज्जुज्ञानादिकं ज्ञानमपि मूलभूतभावरूपाज्ञान परिणामविशेष एव । यथा स्वप्नान्तरस्थद्वितीयस्वप्ननिरासिका जागृतिर्प प्रथमस्वप्नान्तर्गतैव तद्वत् । तथा च यथा प्रथमस्वप्नान्तर्गतापि जागृतिर्द्वितीयस्वप्न निरासे समर्था तथा प्रातिभासिकजगदन्तर्गतमपि मनोवृत्तिविशेषरूपं लौकिक ज्ञानमाधुनिका येऽविद्याशकलविशेषास्तन्निरासे समर्थमेव । तस्यास्य लौकिकज्ञा नस्यायमहंकार आश्रयो भूत्वाऽभिव्यञ्जक इत्युक्तम् । स्वाश्रयतयाऽभिव्यञ्जन मभिव्यञ्जकानां स्वभावः । यत्तु 'नायमभिव्यञ्जकानां स्वभावः । प्रदीपादिष दर्शनात्' (श्रीभा० पृ० ४८ प० १९) इत्युक्तं तन्न । न हि प्रदीपो घटाद्यभि व्यञ्जकः । किं तु तत्प्रभा । तदुक्तं—

'स्वस्यैव भासको दीपः स्वस्य चान्यस्य च प्रभा ' इति ।

दर्पणादिरपि स्वात्मस्थतयैव मुखादीनभिव्यनक्ति । यत्तु ' न च दर्पणादिर्मुखादेरभिव्यञ्जकः । अपि तु चाक्षुषतेजःप्रतिफलनरूपदोषहेतुः ' ( श्रीभा० पृ० ४८प० २१ ) इत्युक्तं तन्न । चाक्षुषतेजःप्रतिफलनद्वारा मुखाद्यभिव्यञ्जकत्वस्याक्षतेः । एवमहंकारस्य ज्ञानाश्रयत्वेन ज्ञानव्यञ्जकत्वाज्ज्ञातृत्वम् । जीवस्याप्यहंकारसांनिध्येनैवाहमर्थत्वं ज्ञातृत्वं च न तु वास्तविकम् । आत्मा तु ज्ञप्तिमात्रमेव । यत्तु ' अहंभावविगमे ज्ञप्तेर्न प्रत्यक्त्वसिद्धिः ' ( श्रीभा० पृ० ४९ प० ८ ) इत्युक्तं तन्न । ज्ञप्तावहंभावाभावेन स्वस्मै प्रकाशमानत्वाभावेऽप्यनन्याधीनप्रकाशस्वरूपत्वरूपप्रत्यक्त्वस्य विद्यमानत्वात् ।

सुषुप्तौ नाहंभावः

किं चाहंभावो नात्मनः स्वरूपम् । सुषुप्त्यादौ व्यभिचारात् । सुषुप्तौ ज्ञानसत्त्वेऽप्यहमर्थाभावेन ज्ञानस्य निराश्रयत्वान्न स्फुटप्रतिभासः । न च सुषुप्तावहमर्थसत्त्वेऽपि विषयराहित्यान्न स्फुटं प्रतिभास इति वाच्यम् । प्रमाणाभावात् । अज्ञानरूपविषयस्य सत्त्वाच्च । अहमर्थस्य ज्ञानाश्रयस्य विषयानपेक्षत्वाच्च । ज्ञानं ह्याश्रयविषयावपेक्षते न त्वाश्रयः साक्षाद्विषयमपेक्षते । किं च ज्ञानं प्रथमत आश्रयमपेक्षते ततो विषयमित्यनुभवाद्विषयसंबन्धात्प्राग्भासमान आश्रयः कथं विषयापेक्षप्रतीतिकः स्यात् । न च सुप्तोत्थितस्य ' सुखमहमस्वाप्सम् ' इति परामर्शात्सुषुप्तावहमर्थः सिध्यतीति भ्रमितव्यम् । यतोऽनेन परामर्शेन परामर्शकालेऽहमर्थत्वेन प्रतीतस्य जीवस्य सुषुप्तिकाले सत्त्वं सिध्येन्न तु तदानीमहमर्थत्वेन तस्य प्रतीतिः सिध्येत् । शिखण्डिना जन्मान्तरे भीष्मवधाय तपस्तप्तमित्युक्तावुत्तरस्मिञ्जन्मनि शिखण्डित्वेन प्रतीतस्य पूर्वस्मिञ्जन्मनि तपश्चर्याकाले सत्त्वमात्रं दृश्यते न तु तदानीं तस्य शिखण्डित्वम् । किं च ' न किंचिदहमज्ञासिषम् ' इति परामर्शेन सुषुप्तिकालेऽहमर्थस्यापि प्रतीतिविषयत्वाभावः सिध्यति । न किंचिदिति कृत्स्नप्रतिषेधात् । यत्तु ' न किंचिदिति निषेधस्य कृत्स्नविषयत्वे भवदभिमताऽनुभूतिरपि प्रतिषिद्धा स्यात् ' ( श्रीभा० पृ० ५० प० ३ ) इत्युक्तं तन्न । अनुभूतेरपि सुषुप्तौ वेद्यत्वेन प्रतिषेध इष्यत एव । न हि सुषुप्तावनुभूतेरनुव्यवसायविषयत्वमनुभूयते । न किंचिदिति निषेधो हि सामान्यमुखप्रवृत्तो घटादीनहमर्थं ज्ञानमज्ञानं चेति सर्वानेव ज्ञानविषयत्वेन निषेधति । सुषुप्तौ कस्यापि ज्ञानविषयत्वं नास्तीति यावत् । अत एव 'मामप्यहं न ज्ञातवान्' इत्येवमहमर्थस्यापि तदानीमननुसंधानं प्रतीयते । एतेन 'मामप्यहं न ज्ञातवान्' इत्यस्य

'वर्णाश्रमादिविशिष्टरूपेण न ज्ञातवान्' इत्यर्थकल्पनया यथाकथंचिदुपपत्ती रामानुजीयकृता ( श्रीभा० पृ० ५० प० १४ ) परास्ता । एवं च 'सुषुप्तिसमयेऽप्यनुसंधीयमानमहमर्थमात्मानं ज्ञातारमहमिति परामृश्य न किंचिदवेदिषमिति वेदने तस्य प्रतिपिध्यमाने तस्मिन्काले प्रतिपिध्यमानाया वित्तेः सिद्धिमनुवर्तमानस्य ज्ञातुरहमर्थस्य चासिद्धिमनेनैव न किंचिदहमवेदिषमिति परामर्शेन साधयंस्तमिममर्थं देवानामेव प्रियः साधयतु' ( श्रीभा० पृ० ५० प० ४ ) इति ग्रन्थेन कृत उपहासः प्रत्युत स्वस्यैवोपहासाय भवतीति सुधियो विभावयन्तु।

यत्तु 'सुषुप्तावात्माऽज्ञानसाक्षित्वेनास्त इति मायावादिप्रक्रिया । साक्षित्वं च साक्षाज्ज्ञातृत्वमेव । न ह्यजानतः साक्षित्वम्।

आत्मसाक्षित्वोपपत्तिः

ज्ञातैव लोकवेदयोः साक्षीति व्यपदिश्यते न ज्ञानमात्रम् । स्मरति च भगवान्पाणिनिः 'साक्षाद्द्रष्टरि संज्ञायाम्' ( पा०सू०५।२।९१ ) इति साक्षाज्ज्ञातर्येव साक्षिशब्दम् । स चायं साक्षी जानामीति प्रतीयमानोऽस्मदर्थ एवेति कुतस्तदानीमहमर्थो न प्रतीयेत' ( श्रीभा० पृ० ५० प०१९ ) इत्युक्तं तत्रोच्यते—सुषुप्तावात्माऽज्ञानसाक्षित्वेनास्त इति सत्यमेव । परं तु तत्र साक्षित्वम् 'इदमज्ञानम्' इत्येवमज्ञानविषयकानुसंधानवत्त्वरूपं नास्ति । किं तु 'न किंचिदवेदिषम्' इत्येवंरूपमेव । लोके ह्यभावसाक्षी द्विविधो भवति । चैत्रमैत्रयोर्वाक्कलहमात्रमभूत् । न केनापि कोऽपि ताडित इत्यत्र 'चैत्रमैत्रयोर्वाक्कलहमात्रमेतन्न कोऽपि कमपि ताडयति' इत्येवं वाक्कलहकाले ताडनाभावानुसंधाता देवदत्तादिस्ताडनाभावसाक्षी भवति । क्वचित्त्वेवं वाक्कलहकालेऽनुसंधानाभावेऽपि वाक्कलहकाले 'अयममुं ताडयति' इत्येवं ताडनानुसंधानं नाभूत् । एतावतैव साक्षी भवति । तथा सुषुप्तौ 'इदमज्ञानम्' इत्येवमनुसंधानाभावेऽपि 'इदममुकम्' इत्येवं तदा कस्यापि विषयस्यानुसंधानं नास्ति । एतावतैव तस्याज्ञानसाक्षित्वं सुषुप्तौ । यद्यपि मूलाज्ञानं भावरूपं तथापि तदज्ञानपरिणामविशेषस्य सुषुप्तिस्थस्यावरणशक्तिमत्त्वेनैव सत्त्वादुक्तसाक्षित्वं सूपपादम् । एवमज्ञानसाक्षित्वोपपत्तौ सुषुप्तौ ज्ञातृत्वं नास्त्येवेति तदानीमहमर्थप्रतीतिर्दुरुपपादैव । मोक्षदशायां

मुक्तौ नाहंभावः

विदेहमुक्तावहमर्थप्रतीतिः सुतरां नास्त्येव । तत्र ज्ञातृज्ञेयभाव एव नास्ति कुतोऽहमर्थप्रतीतिः । जीवन्मुक्तदशायां तु यद्यप्यहमर्थो भासते तथापि स इतरदृष्ट्यैव । तद्दृष्ट्या तु भासमानोऽप्ययं जीवेऽहंभावोऽहंकारसंबन्धमूलक एव न स्वाभाविक इति निश्चयान्न तस्य बद्धस्येव बाधको भवति । लोकैः सह व्यवहारस्तु लोकदृष्ट्यैव

कर्तव्य इति तथा व्यवहारस्तेषाम् । ननु व्यवहार एव न संभवतीति चेत्किं कारणाभावाद्वा प्रयोजनाभावाद्वा तदसंभवं ब्रूषे । नाद्यः । प्रारब्धकर्मणो ज्ञानेनाविनाशात्पूर्वसंस्कारानुरोधेन मरणपर्यन्तं बुद्ध्याद्युपाधीनां सत्त्वात् । प्रयोजनाभावस्त्विष्ट एव । तथापि लोकसंग्रहार्थमेव केवलं कृपावशतया व्यवहारः । नन्वेवं जनकादीनां यथा व्यवहारो दृश्यते न तथा शुकादीनामिति कुतो भेद इति चेद्यथा बद्धेष्वपि केचिदेव परेषां सन्मार्गदर्शकाः केचिदुदासीनाः केचिच्च प्रत्युतासन्मार्गदर्शका इति पूर्वसंस्कारानुरोधेन भेदो दृश्यते तथा मुक्तेष्वपि मरणपर्यन्तं संस्कारस्याविनाशेन भेदो युक्त एव । ये च बद्धावस्थायामसन्मार्गदर्शकास्ते तत्त्वज्ञानानधिकारिण एवेति ज्ञानिषु जीवन्मुक्तेषु केचित्परेषां सन्मार्गदर्शकाः केचिदुदासीना इत्येवं द्वैविध्यमेव । इत्थं च वामदेवादीनाम् 'अहं मनुरभवम्' इत्यादिरहंभाव उपपन्नो भवति । यथा बालानां भाषयैव तैः सह व्यवहारः प्रौढानां तथैव जीवन्मुक्तानामीश्वरस्य च लोकरीत्यैव व्यवहार इति 'हन्ताहमिमास्तिस्रो देवताः' ( छा० ६ । ३ । २ ) इत्यादिश्रुतिषु, 'यस्मात्क्षरमतीतोऽहम्' ( गी० १५ । १८ ) इत्यादिस्मृतिषु च प्रतिपादितोऽहंभावपूर्वको व्यवहार उपपद्यते । मुमुक्षुदशायामहंभावपूर्वकसंकल्पस्तु न मोक्षदशायामहंभावसाधक इति प्राक् ( पृ० ९१ । १० ) उपपादितम् । एतेन 'मोक्षेऽहमर्थाननुवृत्तावात्मनाश एव प्रकारान्तरेण प्रतिज्ञातः स्यात्' ( श्रीभा० पृ० ५१ प० ८ ) इत्याद्युक्तमपास्तम् । यत्तु 'स च प्रत्यगात्मा मुक्तावप्यहमित्येव प्रकाशते स्वस्मै प्रकाशमानत्वात्' ( श्रीभा० पृ० ५२ प० १ ) इत्युक्तं तद्विदेहमुक्तौ नैव संभवति । देहाद्युपाधित्यागेन प्रकाश्यप्रकाशकभावस्यैवाभावात् । जीवन्मुक्तौ तथाचेत्—अस्तु । किं तु तत्रापि परैः सह व्यवहाराय परदृष्ट्यैवाहंभावोल्लेखेन न तस्य पुनः संसारापादकत्वम् । विदेहमुक्तौ तु न कथमपि भेदप्रतिभासः ॥ १४ ॥

शास्त्रप्रमाणकं ब्रह्म शास्त्रं प्रत्यक्षबाधकम् ।
असत्यादपि सत्या धीः शास्त्रं स्वस्मिन्प्रवर्तते ॥ १५ ॥

'नेह नानास्ति किंचन' ( बृ० ४ । ४ । १९, का० ४ । ११ ) इत्यादिशास्त्रमप्येतदेव ब्रह्माद्वैतं प्रतिपादयति । ननु भेदस्य सर्वथाऽसत्त्वे प्रतिपाद्यप्रतिपादकभावरूपं शिष्यशासित्रादिभावरूपं च भेदं गृहीत्वा प्रवृत्तं शास्त्रं स्वयमसन्मार्गगतमेव स्यादिति चेदस्तु । तथासति कथं शास्त्रं प्रमाणं भवे-

ब्रह्माद्वैते शास्त्रं प्रमाणम्

दिति चेदित्थम्—यथा चैत्रमैत्रौ प्रयागं गन्तुं प्रवृत्तौ । तत्र चैत्रोऽग्रतो गतः पथि मार्गद्वैधे भ्रमेण प्रयागागामिनाऽसत्येन मार्गेण प्रवृत्तो दूरं गतः । तं च दूरतो दृष्ट्वा तेनैव मार्गेण प्रवृत्तो मैत्रः केनचिन्मार्गज्ञेन 'नायं प्रयागगामी मार्गः' इत्येवं बोधितश्चैत्रस्य सन्मार्गे प्रत्यानयनाय मैत्रः स्वयमसत्यत्वेन ज्ञातेनापि तेनैव मार्गेण गत्यन्तराभावात्प्रधाव्य चैत्रसमीपं गत्वा तमसत्यान्मार्गान्निवर्तयति तथाऽसत्येन मार्गेण गन्तुं प्रवृत्तान् न केवलं प्रवृत्तानपि त्वतीव दूरतरं गतान् बद्धाञ्जीवानसत्यान्मार्गान्निवर्तयितुं शास्त्रं जीवप्रतिबोधनाय तत्समीपे गमनाय गत्यन्तराभावादसत्यमपि भेदं स्वयं गृहीत्वा जीवसमीपं समागत्य तान् प्रति बोधयति । उपदेष्टा हि तादृशो विरलः । यः स्वनिष्ठान् दोषान् विख्याप्योपदिशति । अत्र हेतुस्तु दोषज्ञानेनोपदेश्यो दोषेष्वौदासीन्यं कृत्वाऽन्यं सर्वं तदीयं मार्गमनुसरेदिति । तथा प्रतिपाद्यप्रतिपादकभावरूपं शिष्यशासित्रादिभावरूपं च भेदं वस्तुतोऽसत्यमपि गृहीत्वा सन्मार्गप्रदर्शनाय प्रवृत्तं शास्त्रं स्वस्मिन्नसत्यत्वरूपं दोषं 'वेदा अवेदाः' (बृ०४।३।२२) इति स्वमुखेनैव प्रख्याप्याद्वैतं बोधयति । तत्र हेतुर्मुमुक्षोः शास्त्रीयमार्गानुसरणम् । तत्त्वज्ञानिना तु शास्त्रमप्यसत्यत्वेन भावनीयमेव । अन्यथाऽद्वैतभावना स्थिरा न स्यात् । तथा च शास्त्रस्य मोक्षद्वारपर्यन्तमेव गतिर्न तु मोक्षावस्थायाम् । प्रमाणशिरोमणेर्वेदस्येयं स्थितिस्तत्र का वार्ताऽन्येषां प्रमाणानाम् । सर्वेषां प्रमाणानां प्रमाणत्वं मोक्षद्वारपर्यन्तमेवेति । शास्त्रप्रमाणसिद्धं चैतदद्वैतं युक्त्याप्यनुसृतं भवति । घटशरावादिविशेषाणां मृत्सामान्यपूर्वकत्वस्य लोके दृष्टत्वात्सर्वविशेषाणां मूलभूतं निर्विशेषं ब्रह्म सिध्यति । तदेवं शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वं निश्चितं भवतीति तेन सकलभेदावलम्बि प्रत्यक्षं बाधितं भवति । एतेन 'शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चये सति भेदवासनाया दोषत्वनिश्चयो भेदवासनाया दोषत्वनिश्चये सति शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चयः' (श्रीभा० पृ० ५४ प० ११) इत्यन्योन्याश्रयापादनमसंगतं वेदितव्यम् । यत्तु 'यदि भेदवासनामूलत्वेन प्रत्यक्षस्य विपरीतार्थत्वं शास्त्रमपि तन्मूलत्वेन वृथा स्यात्' (श्रीभा० पृ० ५४ प० १३) इति दोषापादनं तदयुक्तम् । मोक्षद्वारपर्यन्तमेव शास्त्रप्रामाण्यापेक्षणात् । पश्चाच्छास्त्रवैयर्थ्येऽपि न क्षतिः । किं च शास्त्रस्य भेदवासनामूलकत्वेऽपि न विपरीतार्थत्वम् । विपरीतार्थत्वं नाम वस्तुतोऽसत्यस्यार्थस्य सत्यत्वेन ज्ञापकत्वम् । यथा लौकिकस्य घटादिप्रत्यक्षस्य । शास्त्रं तु न किंचिदपि तथा ज्ञापयति । भेदवासना तु शास्त्र-

वृत्त्यर्थनपेक्षते । प्रतिपाद्यप्रतिपादकभावसंबन्धं शिष्यशासित्रादिभावरूपसंबन्धं चान्तरेण शास्त्रप्रवृत्त्ययोगात् । संबन्धप्रतीतेश्च भेदवासनामूलकत्वात् । तथा च शास्त्रस्य प्रवृत्त्यर्थमगत्या भेदवासनापेक्षत्वेऽपि न विपरीतार्थत्वम् । न च 'यः सर्वज्ञः' (मु० १ । १ । ९) इत्यादिश्रुतेः सत्यत्वेनासंमतसगुणब्रह्मज्ञापकत्वेन विपरीतार्थत्वमिति वाच्यम् । सगुणब्रह्मप्रतिपादकश्रुतीनां निर्गुणब्रह्मज्ञापन एव तात्पर्यतः पर्यवसानात् । एकपदे निर्गुणब्रह्मसाक्षात्कारासंभवेन ।

'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते'

इति न्यायेन प्रथमतः श्रुतीनां कर्मज्ञापने प्रवृत्तिः । ततः सगुणब्रह्मज्ञापने । ततो निर्गुणब्रह्मज्ञापने । नैतावता कर्मप्रतिपादनेन सगुणब्रह्मप्रतिपादनेन वा श्रुतेर्विपरीतार्थत्वम् । श्रोतृसुखबोधाय स्थूलारुन्धतीन्यायेन लोकानामपि तथा प्रवृत्तेर्दृष्टत्वात् । सगुणब्रह्मवादिनाऽपि 'अन्नं ब्रह्मेति व्यजानात्' (तै० ३।२) इत्यादिश्रुतेरीदृश्येव गतिः शरणीकरणीया । न ह्यन्नं ब्रह्म कस्यापि संमतम् । एवं च दोषमूलत्वेन संभाव्यमानान्यथासिद्धिप्रत्यक्षमनन्यथासिद्धेन पश्चादुपस्थितिकेन परेण चाद्वैतशास्त्रेण बाध्यते ।

द्वैतप्रत्यक्षं शास्त्रबाध्यम्

यत्तु 'दोषमूलत्वे ज्ञाते सति परत्वमकिंचित्करम् । रज्जुसर्पज्ञाननिमित्तभये सति भ्रान्तोऽयमिति परिज्ञातेन केनचिन्नायं सर्पो मा भैषीरित्युक्तेऽपि भयानिवृत्तिदर्शनात् । शास्त्रस्य च दोषमूलत्वं श्रवणवेलायामेव ज्ञातम्' (श्रीभा०पृ०५४प०१८) इति तन्न । भेदानामनेकविधत्वेन शास्त्रं स्वोपजीव्यभेदेतरान् सर्वान् भेदान् दूरीकर्तुं प्रभवत्येव । शास्त्रोपजीव्यभूतो भेदस्त्वितरान्दूरीकृत्य सद्यः स्वयमेव निवर्तते । 'वेदा अवेदाः' (बृ०४।३।२२) इति शास्त्र एवोक्तत्वात् । यथा कलुषजले स्वच्छतासंपादनाय प्रक्षिप्तं कतकरजो मलेन सह स्वयमधो गच्छति तद्वत् । न हि मार्गदर्शकेन सर्वथा निर्दुष्टेनैव भाव्यमित्यस्ति कश्चिन्नियमः । पङ्गुरपि बधिरोऽपि चान्धस्य मार्गदर्शको भवति । मलविशेषेणैव कतकरजसा जलस्थो मलो दूरी क्रियते । तथा चोपदेशकस्योपदेश्यार्थविषयेऽभ्रान्तत्वमपेक्ष्यते । न तु सर्वविषये तदावश्यकम् । भ्रमश्चानेकविधो दृश्यते । स्त्र्यादिविरहसर्वस्वापहारपिशाचावेशपित्तादीनां निमित्तानामनेकत्वात् । तत्र पित्तजो भ्रमो न वस्तुविषयकः किं तु तद्गतरूपविषयकः । पीतः शङ्ख इति भ्रमो हि न शङ्खविषयकः किं तु तदीयपीतरूपविषयक एव । तथा च पित्तजभ्रमवता भ्रान्तोऽयमिति परिज्ञातेनापि केनचित् 'नायं सर्पो मा भैषीः' इत्युक्ते भयनिवृत्तिर्दृश्यत एव । वस्तुविषये तस्याभ्रान्तत्वात् । एवं

चाद्वैतशास्त्रं प्रवृत्तौ भेदापेक्षमपि प्रतिपाद्याद्वैतविषये निर्दुष्टत्वात्प्रमाणभावमर्हति। स्मृतीतिहासादिपुरुषवचसां मूलप्रमाणभूतायाः सृष्ट्यादौ परमेश्वरेण स्मर्यमाणाया अनादिसिद्धायाः श्रुतेर्दोषलेशोऽपि न संभवति। प्रत्यक्षं तु संभाव्यमानदोषम्। रज्जुसर्पादौ तथानुभवात्। रामानुजीयैरप्येवमेव स्वीकार्यम्। इतरथा चिदचितोः परमात्मशरीरत्वं श्रुतिप्रतिपादितत्वेन तेषां संमतमपि प्रत्यक्षेण तथाऽननुभवात्कथं विश्वसनीयं स्यात्। तथा तैः सर्वत्र सत्ख्यात्यङ्गीकारादसतः प्रतीत्यर्थं यद्यपि दोषानपेक्षा तथापि रज्जुसर्पादिप्रतीतौ सतो रज्ज्वादेः प्रतीत्यभावो दोषमूलक इत्युक्त एवेति प्रत्यक्षं संभाव्यमानदोषमित्यपि तेषां संमतमेव। एतेन 'अपि च शास्त्रमसंभाव्यमानदोषं प्रत्यक्षं तु संभाव्यमानदोषमिति केनावगतं त्वया' (श्रीभा० पृ० ५५ प० १) इत्याद्युक्तमपास्तम्। उभयोः समत्वात्। तदुक्तमभियुक्तैः—

'यत्रोभयोः समो दोषः परिहारोऽपि तत्समः।
नैकस्तत्र नियोक्तव्यस्तादृगर्थविचारणे' इति।

तदेवं प्रतिपाद्यविषये लेशतोऽप्यसंभाव्यमानदोषेण शास्त्रेण प्रतिपादितमद्वैतमेव तत्त्वं पर्यवसाने यद्यपि सिद्धं तथापि मोक्षद्वारपर्यन्तं भेदप्रतिभासस्य सत्त्वेन तावत्पर्यन्तं व्यावहारिकः प्रमाणप्रमेयभावोऽबाधित एव शास्त्रविषयस्य सदद्वितीयस्य ब्रह्मणः पश्चात्तनबाधादर्शनेन निर्विशेषानुभूतिमात्रं ब्रह्मैव तु परमार्थः। यत्तु 'एतदयुक्तम्। अबाधितस्यापि दोषमूलस्यापारमार्थ्यनिश्चयात्' (श्रीभा० पृ० ५५ प० १४) इत्युक्तं तत्र शास्त्रस्य कया विधया दोषमूलत्वं केन वा प्रकारेण तस्य प्रामाण्यं तत्सर्वमनुपदमेवोक्तमिति न पुनरिहोच्यते। एतेन 'विवादाध्यासितं ब्रह्म मिथ्याऽविद्यावदुत्थज्ञानविषयत्वात्प्रपञ्चवत्। ब्रह्म मिथ्या मिथ्याज्ञानविषयत्वात्प्रपञ्चवत्। ब्रह्म मिथ्याऽसत्यहेतुजन्यज्ञानविषयत्वात्प्रपञ्चवदेव' (श्रीभा० पृ० ५५ प० २१) इत्येवमुक्ताः प्रयोगाः प्रत्युक्ताः। हेतोरप्रयोजकत्वाद्व्यभिचारित्वाच्च। असत्यादपि सत्यप्रतीतेर्लोके दर्शनात्। स्वाप्नं हस्त्यादिज्ञानमसत्यमपि परमार्थशुभाशुभप्रतिपत्तेः कारणं भवति। यत्तु 'स्वाप्नज्ञानस्यासत्यत्वाभावात्

असत्यादपि सत्यप्रतीतिः

तत्र हि विषयाणामेव मिथ्यात्वम्। तेषामेव हि बाधो दृश्यते न ज्ञानस्य' (श्रीभा० पृ० ५६ प० ६) इत्युक्तं तन्न। स्वाप्नस्य हस्त्यादिप्रत्यक्षज्ञानस्य जागृतावभावात्। प्रतिबुद्धो हि स्वाप्नान्हस्त्यादीन्स्वाप्नं हस्त्यादिप्रत्यक्षज्ञानं

वा स्मरत्येव केवलम्। न त्वनुभवति। यद्यपि स्वप्ने जायमानं ज्ञानं स्मरणात्मकमेव जागृतिस्थस्मरणस्येव स्वाप्नज्ञानस्यापि संस्कारसापेक्षत्वात्। तथापि तत्स्मरणं भिन्नम्। जागृतावनुभूतार्थस्य स्वाप्नार्थस्य वा जागृतौ जायमानं च स्मरणं भिन्नम्। उभयोः स्मरणत्वेन साम्येऽपि स्वाप्नज्ञानं स्मरणात्मकं तदानीं स्मरणत्वेन न प्रतीयते। जागृतौ जायमानं स्मरणं तु स्मरणकालेऽपि स्मरणत्वेन प्रतीयत इति विशेषात्। तथा च स्वाप्नज्ञानस्य जागृतावभावादसत्यत्वमेव। रामानुजीयैः स्वप्ने प्रत्यक्षज्ञानस्यैव स्वीकाराच्च। किंच स्वाप्नं ज्ञानं न ज्ञानत्वेन शुभाशुभप्रतिपत्तिहेतुः। किं तु तत्तद्विषयविशेषसहितत्वेनैव। तादृशं विषयविशेषसहितं च तज्ज्ञानं जागृतौ न दृश्यत इति सुतरामसत्यमेव। किंच स्वाप्नज्ञानस्य सत्यत्वे तस्यासत्येभ्यः स्वाप्नहस्त्यादिभ्य एवोत्पत्तेरसत्यात्सत्यप्रतीतेरवर्जनीयत्वमेव।

यत्तु 'हस्त्यादीनामभावे कथं तद्बुद्धयः सत्या भवन्तीति। नैतत्। बुद्धीनां सालम्बनत्वमात्रनियमात्। अर्थस्य प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षितम्। प्रतिभासमानता चास्त्येव दोषवशात्। स तु बाधितोऽसत्य इत्यवसीयते। अबाधिता हि बुद्धिः सत्यैव' (श्रीभा० पृ० ५६ प० १६) इत्युक्तं तन्न। सालम्बनत्वमात्रनियमादित्यत्र सालम्बनत्वं न साश्रयत्वं तवाभिमतम्। बुद्धेः साश्रयत्वोपपादनस्य विषयप्रतिभासानपेक्षणात्। त्वया त्वर्थस्य प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षितमित्युच्यते। किंच सालम्बनत्वमात्रनियमादित्यत्र मात्रपदेन सविषयत्वं व्यावर्त्यते न वा। आद्ये 'न च निर्विषया संवित्काचिदस्ति। अनुपलब्धेः' (श्रीभा० पृ० ३६ प० १०) इति त्वदुक्तिविरोधः। अन्त्ये 'हस्त्यादीनामभावे कथं तद्बुद्धयः सत्या भवन्ति' इति प्रश्नस्योत्तरमेतन्न घटते। अथ सालम्बनत्वं सविषयत्वमेवेति चेत्सालम्बनत्वमात्रनियमादित्यत्र मात्रपदेन साश्रयत्वं व्यावर्त्यते विषयसत्यत्वापेक्षा वा व्यावर्त्यते। आद्ये 'संविन्नाम काचिन्निराश्रया निर्विषया वाऽत्यन्तानुपलब्धेर्न संभवति' (श्रीभा० पृ० ४० प० ४) इत्युक्तिविरोधः। अन्त्ये सत्यस्यार्थस्याभावेऽप्यर्थप्रतिभासमात्रेण बुद्धेः सविषयत्वं चेत्स प्रतिभासः सत्योऽसत्यो वा। आद्येऽसत्यादर्थात्सत्या प्रतीतिरङ्गीकृता स्यात्। विषयस्य प्रतीतिकारणत्वानङ्गीकारे त्वसत्यपि घटादौ सदा घटादिज्ञानं स्यात्। अन्त्ये त्वसत्यात्प्रतिभासात्सत्या शुभाशुभप्रतिपत्तिहेतुभूता बुद्धिरङ्गीकृता स्यात्। किं च 'अर्थस्य प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षितम्' (श्रीभा०पृ०५६प०१८) इत्युक्तिर्न संगच्छते। यतः प्रतिभास एव बुद्धिर्न तु

तदतिरिक्ता काचित्। अनुपलब्धेः। किं च 'स तु बाधितोऽसत्य इत्यवसीयते' (श्रीभा० पृ० ५७ प० १) इत्युक्तिः सत्ख्यातिवादिनस्तत्र मते न संगच्छते।

असत्यात्सत्यप्रतिपत्तेरिदमपरमुदाहरणं रेखारूपादसत्यादक्षरात्सत्याक्षरप्रतिपत्तिर्दृश्यते। यद्यपि रेखा सत्यैव तथापि न सा रेखात्वेन वर्णबुद्धिहेतुः। किंतु वर्णात्मकतयैव। वर्णात्मता त्वसत्यैव। यत्तु 'वर्णात्मताया असत्याया उपायत्वायोगात्। असतो निरुपाख्यस्य ह्युपायत्वं न दृष्टमनुपपन्नं च' (श्रीभा० पृ० ५७ प० ५) इत्युक्तं तन्न। असत्यस्योपायत्वायोगे कश्चिद्धेतुरस्ति न वा। न चेत्किं तया केवलोक्त्या। अस्ति चेत्को हेतुः। क्वाप्यदर्शनं हेतुश्चेन्न। अत्र दर्शनात्। स्वप्ने च तथा दर्शनस्यानुपदमेवोक्तत्वात्। 'न हि दृष्टेऽनुपपन्नं नाम' इति न्यायेनानुपपत्तेरप्यभावात्। नन्वत्रासत्यादेव सत्या प्रतिपत्तिर्जातेति कथं निश्चितमिति चेत्—असत्यान्नैव जातेति निश्चयस्त्वयापि कथं कृतः। तस्मादत्र तथा दर्शनविषय एव वादः प्रस्तुत इति 'असतो निरुपाख्यस्य ह्युपायत्वं न दृष्टमनुपपन्नं च' इत्युत्तरं न संगतं भवति। निरुपाख्यमपि शशशृङ्गादि तत्कल्पनाया हेतुर्भवत्येव। अथ 'पिण्डविशेषे देवदत्तादिशब्दसंकेतवच्चक्षुर्ग्राह्यरेखाविशेषे श्रोत्रग्राह्यवर्णविशेषसंकेतवशाद्रेखाविशेषो वर्णविशेषबुद्धिहेतुरिति सत्यादेव सत्यप्रतिपत्तिः। रेखायाः संकेतस्य च सत्यत्वात्' (श्रीभा० पृ० ५७ प० ११) इत्युच्यते तर्हि 'अयं कवर्णोऽयं खवर्णः' इत्येवं रेखाविशेषे वर्णतादात्म्यानुभवविरोधः। किं च पिण्डविशेषे देवदत्तादिशब्दसंकेतवदिति त्वदुक्तदृष्टान्तेऽपि सत्यात्सत्या प्रतिपत्तिरवर्जनीया। यतो देवदत्तादिशब्दाः शब्दस्वरूपेण सत्या अपि तत्तत्पिण्डविशेषतादात्म्यतयाऽसत्या एव। तादृशा एव तत्तत्पिण्डविशेषबोधका भवन्ति। अन्यथा किमिति घटपदान्न पटप्रतिपत्तिः। अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसंकेतोऽपि शब्दार्थयोस्तादात्म्यारोपाभिप्रायक एव। भगवान्पाणिनिरपि 'वृद्धिरादैच्' (पा० सू० १।१।१) इत्यादिसंज्ञासूत्रेषु शब्दार्थयोः सामानाधिकरण्येन प्रयोगं कुर्वंस्तादात्म्यारोपमेवाभिप्रैति। लोके च क्वचिच्चिञ्चादिशब्दोच्चारणे मुखे रसोत्पादो दृश्यते। यद्यपि वह्निशब्दोच्चारणे मुखं न दह्यते तथाप्यारोपितस्यार्थक्रियाकारित्वनियमाभावान्न दोषः। शब्दनित्यत्ववादिनश्चोच्चारितादध्वनिविशेषादसत्याच्छब्दाभिव्यक्तिशब्दप्रतिपत्तिं मन्वाना असत्यात्सत्यप्रतिपत्तिं स्वी कुर्वन्त्येव। यत्तु 'रेखागवयादौ सत्यगवयबुद्धिः सादृश्यनिबन्धना' (श्रीभा० पृ० ५७ प० १५) इत्युक्तं तन्न। रेखागवयं भद्रसं सत्यगवयं बोधयन् कश्चिदेतत्सदृश इत्युपदिशति। कार्य

ह्यायं गवय इत्युपदिशति । तत्र द्वितीयेऽसत्यात्सत्यप्रतिपत्तिरस्त्येव । गवयतादात्म्यविशिष्टरेखाविशेषस्यासत्यत्वात् ।

किं च न शास्त्रस्य गगनकुसुमवदसत्यत्वम् । प्रागद्वैतज्ञानात्सद्बुद्धिबोध्यत्वात् । उत्पन्ने तत्त्वज्ञाने ह्यसत्यत्वं शास्त्रस्य । न तदा शास्त्रस्य न तुच्छत्वम् शास्त्रं निरस्तनिखिलभेदचिन्मात्रब्रह्मज्ञानोपायः । यदोपायस्तदाऽस्त्येव 'शास्त्रमस्ति' इति बुद्धिः । यत्त्वेतदुपन्यस्य 'नैवम् । असति शास्त्रेऽस्ति शास्त्रमिति बुद्धेर्मिथ्यात्वात् । ततो मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन तद्विषयस्यापि ब्रह्मणो मिथ्यात्वम्' ( श्रीभा० पृ० ५८ प० ६ ) इत्युक्तं तन्न । यथा 'स्वप्ने हि विषयाणामेव मिथ्यात्वम् । तेषामेव हि बाधो दृश्यते न ज्ञानस्य' ( श्रीभा० पृ० ५६ प० ६ ) इति ग्रन्थेन विषयाणामसत्यत्वेऽपि तद्विषयकज्ञानस्य सत्यत्वं त्वयैवोक्तं तथात्र शास्त्रस्यासत्यत्वेऽपि शास्त्रमस्तीति ज्ञानस्य सत्यत्वमेव स्यात् । मिथ्याभूतज्ञानविषयत्वेन ब्रह्मणो मिथ्यात्वापादनमपि न युक्तम् । न हि ब्रह्म कस्मिंश्चिदपि ज्ञाने विषयीभूतं भवति । निराश्रयनिर्विषयनिर्विशेषानुभूतिमात्रं हि ब्रह्म । शास्त्रं तु दूरत एव स्थित्वा केवलं तादृशब्रह्मस्वरूपप्रकाशमार्गं प्रदर्शयति । न तु स्वजन्यज्ञाने ब्रह्म विषयी करोति । मार्गश्चाविद्यानिरासोपायः । सोपाधिकब्रह्मणः शाब्दं यत्परोक्षज्ञानं तादृशपरोक्षज्ञानादिकश्चायमुपायः । शास्त्रं तत्प्रदर्शित उपायश्चेति द्वयं मिथ्याभूतमप्यविद्यानिरासे समर्थमेव । अविद्याया अपि मिथ्याभूतत्वात् । कण्टकेन कण्टकोन्मूलनवत् । एतावतैव शास्त्रस्य प्रामाण्यमिति प्रागुक्तमेव ( पृ० १०२ )। या च 'यथा धूमबुद्ध्या गृहीतबाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्वम्' (श्रीभा०पृ०५८प०९ ) इत्येवं दृष्टान्तोक्तिः साप्यसंगता । अग्निज्ञाने हि न धूमः करणम् । किं तु धूमज्ञानम् ।

'अनुमायां ज्ञायमानं लिङ्गं तु करणं न हि' ( भाषा परि० ६७ )

इत्युक्तत्वात् । लिङ्गज्ञानं च हेतुतावच्छेदकप्रकारकं ज्ञानम् । तच्च धूमेनाग्न्यनुमितौ हेतुतावच्छेदकीभूतधूमत्वप्रकारकं ज्ञानम् । धूमत्वप्रकारकं ज्ञानं च यदि धूमविशेष्यकं तर्हि तत्सत्यमेवेत्यत्र न विवादः । यदि बाष्पविशेष्यकं तर्ह्यपि तदसत्यमिति त्वया सत्ख्यातिवादिना वक्तुमशक्यम् । धूमसदृशे बाष्पे धूमांशानां त्वन्मते विद्यमानत्वात् । किं च 'विषयेन्द्रियादिदोषजन्यं रज्ज्वादौ सर्पादिविज्ञानं सत्यमेव भयादिहेतुः' ( श्रीभा० पृ ५६ प० ११ ) इति वदता त्वया बाष्पेऽपि जायमानं धूमज्ञानं सत्यमेवेति वक्तव्यम् । तथा च धूमज्ञानस्य सत्यत्वे

कथं तदग्निज्ञानासत्यत्वस्य कारणं भवेत्। कथंतरां तद्विषयीभूताग्न्यसत्यत्वे हेतुर्भवेत्। अग्नेरसत्यत्वं च न तज्ज्ञानासत्यत्वेन ज्ञायते। 'प्रतीतिकालेऽपि तन्नासीत्' इत्येवं यत्र पश्चाद्बाधो दृश्यते तत्र तद्बाधितं वस्त्वसत्यं भवति। अतो बाधितोऽग्निरसत्य इति निश्चीयते। एवं गुर्वादिना कस्मिंश्चिदर्थे उपदिष्टे शिष्यादिनाऽज्ञातेऽपि 'ज्ञातोऽर्थः' इत्येवमनुव्यवसायरूपा प्रतीतिर्यत्र शिष्यादेर्भवति, पश्चाच्च पुनरुपदिष्टे 'इदानीमयमर्थो ज्ञातो न तु पूर्वम्' इत्येवं पश्चात्प्रतीतिर्भवति तत्र पूर्वज्ञानं 'ज्ञातोऽर्थः' इत्येवमनुव्यवसायविषयीभूतं प्रतीतिकालेऽपि पश्चाद्बाधदर्शनादसत्यं भवति। रज्जुसर्पादिस्थले सर्पज्ञानं तु स्वरूपमात्रेण सत्यमेव। विषयवैशिष्ट्येन त्वसत्यम्। प्रागुक्तस्थले 'ज्ञातोऽर्थः' इत्येवमनुव्यवसायरूपं ज्ञानमप्येवमेव। तथा च ज्ञानं क्वचित्स्वरूपेणैवासत्यं क्वचिच्च स्वरूपेण सत्यमपि विषयवैशिष्ट्येनासत्यमिति द्विविधमसत्यत्वम्। धूमबुद्ध्या गृहीतबाष्पजन्याग्निज्ञानस्य तु स्वरूपेण सत्यत्वाद्विषयवैशिष्ट्येनैवासत्यत्वं वक्तव्यम्। विषयवैशिष्ट्येनासत्यत्वं च विषयासत्यत्वमूलकम्। तथा चाग्निज्ञानासत्यत्वमग्न्यसत्यत्वमूलकमिति न तदग्न्यसत्यत्वमग्निज्ञानासत्यत्वमूलकम्। अन्योन्याश्रयापातात्। तथा च 'अग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्वम्' (श्रीभा० पृ० ५८ प० ९) इत्युक्तिरसंगता।

द्विविधमसत्यत्वम्

यत्तु 'शास्त्रविषयस्य सदद्वितीयस्य ब्रह्मणः पश्चात्तनबाधादर्शनेन निर्विशेषानुभूतिमात्रं ब्रह्मैव परमार्थः' इत्यद्वैतवादिमतं खण्डयता 'पश्चात्तनबाधादर्शनं चासिद्धम्। शून्यमेव तत्त्वमिति वाक्येन तस्यापि बाधदर्शनात्' (श्रीभा० पृ० ५८ प० १०) इत्युक्तं तन्न। इदं वाक्यं नापौरुषेयम्। श्रुतावदर्शनात्। पौरुषेयवचसां प्रामाण्यं तु श्रुतिमूलकमिति प्रमाणाध्याये जैमिनिना प्रतिपादितम्। तथा चैतदर्थिका श्रुतिर्यावन्न प्रदर्श्यते तावदेतद्वाक्यं कथमिव प्रमाणं भवेत्। स्वयमप्रमाणं च तच्छास्त्रप्रतिपादितमद्वितीयं ब्रह्म बाधितुं न प्रभवति। किं च शून्यपदार्थो भावरूपोऽभावरूपो वा। आद्येऽपि विशेषरूपः सामान्यरूपो वा। विशेषरूपत्वे द्रव्यगुणादीनां सर्वविशेषाणां सामान्यपूर्वकत्वात्सर्वसामान्यपराकाष्ठाभूतं ब्रह्म कथं तेन बाधितं भवेत्। सामान्यरूपत्वे तु ब्रह्मैव तदिति नाममात्रे विवादः। अभावरूपत्वे तु तन्न तत्त्वशब्दोक्तिरसंगता। तदेव हि तत्त्वं यदस्तीति वक्तुं शक्यते बाधितं च न भवति। शून्यमस्तीति वक्तुं शक्यते चेद्भावरूपत्वमेव स्यात्। किं च 'शून्यमेव तत्त्वम्' इति वाक्यं स्वेनैव स्वयं

बाधितं भवति न वा । आद्ये बाधितेनानेन वाक्येन कथं ब्रह्म बाधितुं शक्यते । ननु यत्र वस्तुभूतायां रज्जौ सर्पभ्रमो जातः । ततो नायं सर्पो भूदलनमेतदिति भ्रमः । ततो नेदं भूदलनं किं तु रज्जुरेवेति ज्ञानमभूत्तत्र बाधितेनापि भूदलनेन यथा सर्पो बाध्यते तथा बाधितेनाप्यनेन वाक्येन ब्रह्म बाधितुं शक्यत इति चेन्न । वैषम्यात् । बाधकाले हि बाधकमबाधितमेवापेक्ष्यते । सर्पबाधकाले भूदलनं न बाधितमिति तदा भूदलनेन सर्पो बाधितुं युज्यते । अनयैव रीत्या 'आत्मा वा अरे' इत्यादिशास्त्रं मिथ्याभूतमपि तत्त्वज्ञानमार्गोपायप्रदर्शनकाले न बाधितमिति तन्मार्गं बोधयितुं समर्थमेव । अत्र तु 'शून्यमेव तत्त्वम्' इति वाक्यं स्वयं स्वेनैव बाधितमिति ब्रह्मबाधकालेऽपि तद्बाधितमेव भवतीति न कथमपि तेन ब्रह्म बाधितुं शक्यते ।

शास्त्रस्य स्वस्मिन्प्रवृत्तावपि न क्षतिः

नन्वेवं 'नेह नानास्ति किंचन' ( बृ० ४ । ४ । १९, का० ४ । ११ ) इति वाक्यमपि स्वयं स्वेनैव बाधितमिति न तेन प्रपञ्चो बाध्येतेति चेन्न । नेदं वाक्यं कस्यचिद्बाधकम् । किं त्विह यत्किंचिद्दृश्यते तदात्मभिन्नं नास्तीति बोध्यते । आत्माधिष्ठानकं सर्वमात्मन्येव प्रतिभासत इति यावत् । तथा च नेह नानेति वाक्यस्य स्वस्मिन् प्रवृत्तावपि प्रातिभासिकत्वं तस्य स्यान्न शशशृङ्गवत्तुच्छत्वम् । अतस्तत्प्रपञ्चस्य प्रातिभासिकत्वबोधने समर्थमेव । अथ शून्यमेव तत्त्वमित्यनेनापि प्रातिभासिकत्वमेव बोध्यत इति चेत्त्वदसंमतमायावादापातः । तुच्छत्वमुच्यते चेत्स्वस्यापि तुच्छत्वं स्यादिति न तद्वाक्यं ब्रह्मबाधने समर्थम् । अथैतद्वाक्यं स्वयं स्वेन न बाध्यत इति द्वितीयः पक्षः स्वी क्रियत इति चेद्बाधाभावे को हेतुः । आत्माश्रय इतिचेद्भ्रान्तोऽसि । यत्र वाक्यार्थोपयोगिनी वाक्यस्य प्रवृत्तिस्तत्र स्वस्य स्वस्मिन्प्रवृत्तिरात्माश्रयान्न भवति । प्रवृत्तिर्हि वाक्यार्थोत्तरभाविन्येव । ततश्च वाक्यार्थोत्तरं स्वस्य स्वस्मिञ्जातापि प्रवृत्तिः कथं वाक्यार्थोपयोगिनी भवेत् । वाक्यार्थस्य प्रवृत्तेः पूर्वमात्रश्यकत्वेनात्माश्रयदोषग्रस्तत्वात् । अतस्तत्र सा निष्फलैव । अत एव व्याकरणेऽणुदित्सूत्रस्य न स्वस्मिन्प्रवृत्तिः । अणुदित्सूत्रं हि संज्ञाशास्त्रम् । संज्ञाशास्त्रस्य च प्रवृत्तिर्वाक्यार्थोपयोगिन्येवं । यत्र त्वन्यत्किंचिद्बोधयितुं प्रवृत्तिर्न तु वाक्यार्थोपयोगिनी तत्र वाक्यार्थोत्तरं जायमानायाः प्रवृत्तेरन्यत्रेव स्वस्मिन्नप्युपयोगसंभवोऽस्तीति प्रवृत्तिर्दुर्वारैव । अन्यस्येव तस्याप्युद्देश्यतावच्छेदकाक्रान्तत्वाविशेषात् । अत एव व्याकरणे भगवता पाणिनिना ससजुषो रुः, ( पा० सू० ८

२ । ६६ ) खरवसानयोर्विसर्जनीयः, ( पा० सू० ८ । ३ । १५ ) प्रत्ययः (पा०सू०३।१।१ ) इत्यादीनां सूत्राणां स्वस्मिन्नेव प्रवृत्तिः कृता। अनयैव रीत्या 'स्वाध्यायोऽध्येतव्यः' 'नेह नानास्ति किंचन' ( बृ० ४ । ४ । १९ कठ० ४ । ११ ) इत्यनयोः श्रुतिवाक्ययोः स्वस्मिन्प्रवृत्तिर्भवति । किंच शून्यमेव तत्त्वमिति वाक्येन स्वस्य बाधाभावे शून्यव्यतिरिक्तमेतदेव वाक्यमवशिष्टमस्तीति शून्यमेव तत्त्वमिति वाक्यार्थो विरुद्धः स्यात् ॥ १५ ॥

यत्तु 'एकविज्ञानेन' ( श्रीभा० पृ० ५८ प० १७ ) इत्यादिना ग्रन्थेन 'सदेव सोम्य' (छा० ६ । २ । १) इत्यादिश्रुतीनां सविशेषार्थप्रतिपादकत्वं साधितं तत्रोच्यते—

सदेव सोम्याथ परा सत्यं ज्ञानमथापि च ॥
सविशेषब्रह्मपरा नैताः श्रुतय ईरिताः ॥ १६ ॥

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा० ६।२। १) इति च्छान्दोग्योपनिषदि पठ्यते ।'अथ परा यया तदक्षरमधिगम्यते' ( मु० १ । १ । ५) इति मुण्डकोपनिषदि पठ्यते।' सत्यं ज्ञानमनन्तं ब्रह्म '( तै० २।१ । १) इति तैत्तिरीयोपनिषदि पठ्यते । तत्र सदेवेति श्रुतौ सदित्यनेनास्तितामात्रं वस्तूच्यते । यदपेक्षया न किंचिदपि सामान्यं यत्र सामान्यस्य परा काष्ठा तत्स्वरूपं हि तत् । अत एवेदृशं तादृशमिति वक्तुमशक्यम् । अत एव च तदत्यन्तसूक्ष्मं निर्विशेषं सर्वगतम् । इदं दृश्यमानमखिलं जगदग्र उत्पत्तेः पूर्वं सदेवासीदित्यादिरर्थः । इदमग्र आसीदित्युक्त्या जगतः प्रागवस्थाऽनया श्रुत्या बोध्यते । नन्विदं जगदुत्पत्तेः प्रागवस्थापन्नं सच्छब्दवाच्यं वस्तु किमात्मैवाथवा तदन्यत् । आद्ये तस्यैवायं जगद्रूपेण परिणाम इत्यात्मनो विकारित्वापत्तिः । अन्त्ये 'आत्मा वा इदमेक एवाग्र आसीत्' ( ऐ० १ । १ ) इत्यनेन 'ब्रह्म वा इदमग्र आसीत्' ( बृ० १ । ४ । १०) इत्यनेन च जगदुत्पत्तेः प्रागवस्थाबोधकेन श्रुत्यन्तरेण सह समानार्थत्वं न लभ्यते । तत्र ह्यात्मशब्दो ब्रह्मशब्दश्चोपात्तः । तदनुरोधेनात्रापि सच्छब्देनात्मैव ग्रहीतुमुचित इति चेदुच्यते—'आत्मा वा इदमेक एवाग्र आसीत्'( ऐ० १ । १ ) इति 'ब्रह्म वा इदमग्र आसीत्' (बृ० १ । ४ । १०) इति च स्पष्टतरं प्रतिपादयन्ती श्रुतिश्छान्दोग्ये सच्छब्दमात्मार्थकमेव प्रयोक्तुमर्हतीति निर्विवादम् । आत्मनो विकारित्वं तु नापादनीयम् ।'स वा एष महा-

सदेवेति श्रुतेर्निर्विशेषार्थकत्वम्

नज आत्माऽजरोऽमृतोऽभयो ब्रह्म' ( बृ० ४ । ४ । २५ ) इति श्रुत्याऽऽत्मनो निर्विकारत्वप्रतिपादनात्। श्रुत्येकशरणैश्च यथाश्रुत्येव सर्वं स्वीकार्यम्।

ननु श्रुतिरपि मिथो विरुद्धमर्थं कथं ब्रूयात्। विरोधे भासमाने त्वन्यतरा गौणार्थप्रतिपादकतया नेया। तत्र निर्विकारत्वश्रुतिर्गौणार्थकतया नेतुं न शक्यते। विकारित्वेऽनित्यत्वादिदोपप्रसङ्गेन 'नित्यो नित्यानाम्' (श्वे०६।१३) इत्यादिबहुश्रुतिव्याकोपापत्तेः। किं तु निर्विकारत्वश्रुत्यनुरोधेनात्मनो जगदुपादानकारणत्वश्रुतिर्गौणार्थप्रतिपादिका भवतु। साक्षाज्जगदुपादानकारणं सूक्ष्मं प्रधानम्। तद्द्वारा परमात्मा जगदुपादानकारणमिति 'यतो वा'( तै० २ । १ । १) इत्यादीनां जगदुपादानकारणत्वप्रतिपादकश्रुतीनां तात्पर्यम्। न च साक्षाज्जगदुपादानकारणस्य सूक्ष्मस्य प्रधानस्य परमात्मना सह कः संबन्धो येन तद्द्वारा परमात्मा जगदुपादानकारणमित्युच्यत इति वाच्यम्। शरीरशरीरिभावरूपसंबन्धस्य रामानुजाङ्गीकृतस्य सत्त्वात्। 'सदेव' ( छा० ६ । २ । १ ) इति प्रकृतश्रुतौ च सच्छब्देनास्पष्टनामरूपं साक्षाज्जगदुपादानकारणं सूक्ष्मशरीरविशिष्टमेवोच्यत इति चेदुच्यते—उपादानकारणं द्विविधम्। परिणाम्युपादानं विवर्तोपादानं च। तत्र परिणाम्युपादानकारणत्वमात्मनः स्वीक्रियते चेन्निर्विकारत्वश्रुत्या विरोधः स्यान्न विवर्तोपादानत्वस्वीकारे। एवमविरोधेनोपपत्तावन्यतरस्या गौणार्थकत्वकल्पनमन्याय्यम्।

आत्मा विवर्तोपादानम्

किं च जगत्प्रागवस्थाप्रतिपादिकयोः 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ०१।१ )' सदेव सोम्येदमग्र आसीत्'( छा०६।२।१ ) इतिश्रुत्योः समानार्थत्वभङ्गस्तदवस्थ एव। आत्मशब्देन शरीरान्तःस्थस्य केवलस्यात्मनो ग्रहणात्। सच्छब्देन च शरीरविशिष्टस्य ग्रहणात्। यद्यपि शरीरशरीरिणोरभेदप्रतीतिर्लोके निरूढा तथापि सदात्मशब्दयोरेकार्थत्वं नोपपद्यते। तथाहि—आत्मा शरीरी, चिदचिच्च तस्य शरीरम्। एवं शरीरशरीरिभावं स्वीकर्तॄणां मते कः सदात्मशब्दयोरेकोऽर्थः। चिदचिद्रूपशरीरविशिष्टः केवलो वा। विशिष्टश्चेदप्रसिद्ध आत्मशब्दार्थः कल्प्यः स्यात्। शरीरप्रतिसंबन्ध्यर्थक आत्मशब्द इति हि तेषां मतम्। तथा च यथा पुत्रप्रतिसंबन्ध्यर्थकः पितृशब्दः पुत्रव्यतिरिक्तमेवार्थं ब्रूते तथात्मशब्दोऽपि शरीरव्यतिरिक्तमेवार्थं प्रतिपादयेत्। न च शरीरात्मनोरवयवावयविभाव एव संबन्धोऽस्त्विति वाच्यम्। जीवात्मनि तथाऽप्रसिद्धेः। किं च विशिष्टस्यात्मत्वे ज्ञानस्यात्मैकदेशगुणत्वं स्यान्न कृत्स्नात्मगुणत्वम्। न चेष्टापत्तिः। 'यावदात्मभावित्वात्' (ब्र० सू०२ । ३ । ३० ) इति

सूत्रेण विज्ञानगुणस्य कृत्स्नात्मव्यापित्वस्योक्तत्वात् । ननु यावदात्मभावि-
त्वादित्यनेनात्मवत्तद्गुणभूतज्ञानस्य नित्यत्वं बोध्यते न तु व्यापित्वमिति चेद्
वतापि विशिष्टस्यात्मत्वे विकारित्वादिदोषप्रसङ्गो दुर्वार एव । किं च विशि-
स्यात्मत्व आत्मनो ज्ञानगुणकत्वस्य भवत्संमतस्यैकदेशवृत्तित्वेनोपपत्तावपि 'विज्ञा-
नघनः' ( बृ० २।४ । १२ ) इतिश्रुत्युक्तस्यात्मनो ज्ञानस्वरूपत्वस्यानुपपत्तिः
तत्तु भवतापि स्वीकृतमेव। किं च विशिष्टस्यात्मत्वे ' आत्मा वा अरे द्रष्टव्यः
( बृ० २ । ४ । ५ ) इत्यादिविध्यानर्थक्यम् । अयत्नसिद्धत्वादात्मदर्शनस्य
आत्मशब्दस्यात्मैकदेश इत्यर्थे तु लक्षणा स्यात् । अथैतद्दोषपरिजिहीर्षया केव-
एव शरीरान्तःस्थः सदात्मशब्दयोरर्थ इति चेत्प्रतिज्ञाहानिः । श्रुतौ ( छा० ६
१।३) 'एकेनात्मना ज्ञातेनान्यत्सर्वं ज्ञातं भवति' इत्युच्यते । तत्र परमात्मज्ञाने
जीवानां जडानां च ज्ञानं न संभवति । न हि चिदचिद्रूपं शरीरं मृदो घट
परमात्मनः परिणामः । अत एव मृदादिदृष्टान्ताननुरूप्यं च । किं च 'प्रकृति-
( ब्र० सू० १ । ४ । २३ ) इति सूत्रे प्रतिपादितं परमात्मनो जगत्प्रकृति-
केवलस्यात्मत्वे न संभवति। प्रकृतित्वं हि द्विविधम् । विवर्तवादेन परिणामवादे-
च । आद्यं प्रातिभासिकसर्पप्रकृतित्वं रज्ज्वाः । अन्त्यं घटादिप्रकृतित्वं मृदः
तत्राद्यं रामानुजमते परमात्मनो न संभवति। रामानुजीयैर्विवर्तवादानभ्युपगमात्
नापि द्वितीयम् । शरीरस्य परिणामेऽपि तदन्तःस्थस्यात्मनः केवलस्य परिणा-
भावात् । अन्तःस्थितिमात्रेण प्रकृतित्वं तु दुर्वचम् । मृत्पिण्डान्तःस्थितस्याकाश-
घटप्रकृतित्वाभावात् । तथा सूक्ष्मशरीरप्रकृतिकस्य स्थूलशरीरस्य जीवप्रकृ-
कत्वं न केनाप्यभ्युपेयते । किं च केवलस्यात्मत्वे सृष्टेः प्राग्जगत्प्रकृति-
तस्य सूक्ष्मस्य परमात्मशरीरस्य परमात्मव्यतिरिक्तस्य सत्त्वेन ' सदेव सो-
दमग्र आसीत् '( छा० ६ । २ । १ ) इतिश्रुतिविरोधः । 'इदं सर्वं यदयमात्
( बृ० २ । ४ । ५ ) इतिश्रुतिप्रतिपादितसामानाधिकरण्यानुपपत्तिश्च । इदं-
परामृष्टस्य दृश्यमानस्य जगतः परमात्मशरीरत्वेऽपि परमात्मस्वरूपत्वाभावात्
शरीरशरीरिणोः सामानाधिकरण्येन प्रयोगस्य स्थूलोऽहं कृशोऽहमित्यादौ द-
नेऽपि वस्तुतस्तयोस्तादात्म्याभावात् । सृष्टेः प्रागस्पष्टनामरूपावस्थमत्यन्तसूक्ष्म-
जगत्परमात्मशरीरमिति परमात्मनः सकाशाद्वस्तुतो भिन्नमेव त्वद्दर्शने । न चे-
पदस्यैतदन्तर्यामिरूपेऽर्थे लक्षणा । यद्वा सच्छब्दस्यात्मशब्दस्य च तच्छरीर-
पेऽर्थे लक्षणा । तथा च सामानाधिकरण्यस्योपपत्तिरिति वाच्यम् । लक्षणा-
मानाभावाद्गौरवाच्च ।

किं च 'सदेव' (छा० ६।२।१) इति वाक्यं हि 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छा० ६।१।३) इति पूर्वप्रतिज्ञातार्थोपपादनायोपात्तम्। तत्र येनेत्यनेन 'तमादेशमप्राक्ष्यः' (छा० ६।१।२) इतिपूर्ववाक्यस्थस्य तच्छब्दान्वितस्यादेशस्य परामर्शः। आदेशशब्दश्च भावसाधन उपदेशवाची। कर्मसाधनश्चोपदिश्यमानात्मरूपवस्तुवाची। करणसाधनश्चोपदेशसाधनीभूतशास्त्रवाची। त्रिधाप्यर्थोपपत्तावपि कर्मसाधन एवात्र ग्रहीतुमुचितः। यत उपदेशस्तत्साधनं वोपदेश्यज्ञानं जनयित्वैव सर्वविज्ञानं जनयेत्। किं च कर्मसाधने गृहीते सत्येवैतत्तात्पर्यकेण श्रुत्यन्तरस्थेन 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्' (बृ० ४।५।६) इत्यनेन वाक्येन समानार्थत्वं लभ्यते। तत्र ह्युपदिश्यमानात्मरूपवस्तुज्ञानजन्यं सर्ववेदनमिति स्पष्टमेवोक्तम्। तदनुरोधेन 'येनाश्रुतम्' (छा० ६।१।३) इति च्छान्दोग्यस्थवाक्येऽपि येनेत्यनेनोपदिश्यमानस्यात्मनो ग्रहण आत्मविज्ञानजन्यं सर्वविज्ञानमित्येवं समानार्थत्वमुपपद्यते। कर्मसाधनस्यादेशशब्दस्य ग्रहण एव ह्युपदिश्यमानात्मरूपवस्तुनो येनेत्यनेन परामर्शो लभ्यते नान्यथा। अत एव च 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मु० १।१।३) इति मुण्डकश्रुतिरप्यनुसृता भवति। तत्र हि कस्मिन्विज्ञात इत्येवं सर्वविज्ञानसाधनीभूतज्ञानकर्मैव पृष्टम्।

अथ 'येनाश्रुतं श्रुतम्' (छा० ६।१।३) इत्यत्र यच्छब्दनिर्दिष्टात्साधनज्ञानकर्मीभूतादात्मनः सकाशात्साध्यविज्ञानकर्मीभूतं श्रुतं मतं विज्ञातमितिशब्दैरुक्तं सर्वं वस्तुजातमनन्यदन्यद्वा। अनन्यत्वे न किमप्यनेन वाक्येन प्रतिपादितं भवति। न हि घटेन विज्ञातेन घटो विज्ञातो भवतीत्युच्यमाने किमप्युक्तं भवति। अन्यत्वे तु मिथो भिन्नयोः पदार्थयोर्मध्य एकस्य विज्ञानेनान्यस्य विज्ञानं दुष्करम्। न हि घटेन विज्ञातेन पटो विज्ञातो भवति। मिथः संबद्धयोरपि वस्तुतो भिन्नयोरेवमेव। न हि देवदत्ते विज्ञाते तत्पुत्रो विज्ञातो भवति। न वा दण्डे विज्ञाते घटो विज्ञातो भवति। यद्यपि दण्डे घटकारणत्वेन रूपेण ज्ञाते घटो दण्डकार्यत्वेन रूपेण ज्ञातो भवति तथापि न तज्ज्ञानं वस्तुस्वरूपपरिचायकम्। स्वरूपपरिचायकं च यज्ज्ञानं तदेव विज्ञानशब्देनोच्यते। स्वरूपपरिचायकं ज्ञानं हि सर्वज्ञानमूलभूतम्। स्वरूपपरिचयं विनेतरसंबन्धित्वेन ज्ञानासंभवात्। घटकारणत्वेन दण्डे ज्ञातेऽपि कम्बुग्रीवादिना स्वरूपेणापरिचितो घटः प्रत्यक्षतो दृष्टोऽपि न दण्डकार्यत्वेन ज्ञातुं शक्यते। श्रुतौ च विज्ञातं भवतीत्युच्यते। तथा

विद्यातुः स्वरूपपरिचायकज्ञानवाच्येव । 'यः सर्वज्ञः सर्ववित्' ( मु० १।१।९ ) 'ब्रह्मविदाप्नोति परम्' ( तै० २ । १ ) इत्यादौ तथा दर्शनात् । अत एवोक्त-बृहदारण्यकश्रुतौ 'इदं सर्वं विदितम्' ( बृ० ४ । ५ । ६ ) इत्युच्यते । तदेवं साधनसाध्यज्ञानकर्मणोरन्यत्वानन्यत्वरूपकल्पद्वयस्यापि वक्तुमशक्यतया 'येना-श्रुतम्' ( छा० ६ । १ । ३ ) इति श्रुतेः का गतिरिति चेत्—

अत्रोच्यते । साधनज्ञानकर्मीभूतादात्मनः सकाशात्साध्यज्ञानकर्मीभूतं सर्वं वस्तुतोऽनन्यदेव सदन्यत्वेन प्रतिभाति । अन्यत्वेन प्रतिभानसत्त्वान्न 'घटेन विज्ञातेन घटो विज्ञातो भवति' इति वाक्यस्यैवानर्थक्यम् । अन्यत्वेन प्रतिभान-काल एव चोक्तप्रतिज्ञावाक्यार्थापेक्षा न तत्त्वज्ञानोत्तरम् । नाप्यन्यत्व-कल्पोक्तो दोषः । सर्ववस्तूनामात्मनः सकाशाद्वस्तुतोऽनन्यत्वेनात्मज्ञानस्यैव घटपटाद्यखिलवस्तुस्वरूपपरिचायकज्ञानत्वात् । यद्यप्यात्मज्ञानेन घटपटादि-वस्तूनां कम्बुग्रीवादिमत्त्वादिना तत्तद्वस्तुस्वरूपेण परिचयो न भवति तथापि न दोषः । यतो घटस्य कम्बुग्रीवादिमत्त्वं स्वरूपं यल्लोकदृष्ट्या सत्यतया भासते तन्न परमार्थतः सत्यम् । किं तु सत्यं घटस्वरूपं मृदेव । तथा च दृष्टान्ते 'मृत्तिकेत्येव सत्यम्' ( छा० ६ । १ । ४ ) इत्युक्तम् । तदनु-रोधेन दार्ष्टान्तिकेऽपि सर्वस्य वस्तुनः संप्रति भासमानं स्वरूपं न सत्यमित्या-स्थेयम् । मृत्स्वरूपस्यापि सत्यत्वं तत्कार्यभूतघटाद्यपेक्षया । कारणापेक्षया तु न सत्यत्वम् । मृत्तिकेत्येव सत्यमित्युक्तिस्तु प्रसिद्ध्यनुरोधेन घटादिकार्यापेक्षया बोध्या । एवं स्थिते 'येनाश्रुतम्' ( छा० ६ । १ । ३ ) इति प्रतिज्ञातोऽर्थः श्रुत्या मृदादिदृष्टान्तान्प्रदर्श्य संभवद्युक्तिकतां नीतः 'सदेव सोम्येदमग्र आसीत्' ( छा० ६ । २ । १ ) इत्यनेनोपपाद्यते । 'जगत्सत्यं परमात्मनः सकाशा-द्भिन्नं परमात्मशरीरभूतम्' इत्येवंवादिनां रामानुजीयानां तु मते सदेवेति श्रुतौ सच्छब्दस्येदंशब्दस्य वा लक्षणया सामानाधिकरण्योपपत्तावपि पूर्वप्रति-ज्ञातार्थो नोपपादितो भवति । आत्मज्ञानेन जगत्स्वरूपपरिचायकज्ञानोत्पत्त्य-संभवात् । नापि मृदादिदृष्टान्तानुगुण्यम् । न हि घटो मृदः शरीरम् । यद्यप्य-द्वैतवादिमते जगन्न 'ब्रह्मणः परिणामः । ब्रह्मणो निर्विकारत्वात् । किं तु विवर्तः । घटादयस्तु मृदः परिणामाः' इत्येवं दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं तथापि न क्षतिः । न हि दृष्टान्तदार्ष्टान्तिकयोः सर्वांशेन साम्यमपेक्ष्यते । तथात्वे हि कस्यापि कोऽपि दृष्टान्तो न स्यात् । सर्वांशेन साम्यं हि स्वस्य स्वेनैवायाति न तु परेण । किंतु येनांशेन दृष्टान्तः प्रतिपिपादयिषितस्तेनांशेन साम्यमपेक्ष्यते ।

प्रकृते तु 'एकविज्ञानेन सर्वविज्ञानं तत्र हेतुश्च साधनज्ञानकर्मीभूतस्य सत्यत्वं साध्यज्ञानकर्मीभूतस्य स्वसत्यत्वमेवेति' इत्यास्मन्नंशे दृष्टान्तो विवक्षितः । 'मृत्तिकेत्येव सत्यम्' इत्येवशब्दघटितवाक्येन तथा श्रुतितात्पर्यस्य स्पष्टमेव प्रतिपन्नत्वात् । एवं च कार्यगतसत्यांशज्ञानं तदीयोपादानकारणस्वरूपज्ञानाधीनं यथा मृद्घटादिषु दृश्यते तथा जगत्सत्यांशज्ञानं जगदुपादानकारणज्ञानाधीनमिति प्रदर्शयितुं जगदुपादानकारणज्ञानाय जगत उत्पत्तेः प्रागवस्था 'सदेव' इति श्रुत्या प्रदर्श्यते । जगति भासमाना येऽखिला विशेषास्तदपनयनपूर्विका या सामान्यावस्थाऽस्तित्वमात्ररूपा सामान्यस्य परा काष्ठा सा सच्छब्देनोच्यते । तदेव च निर्विशेषसन्मात्ररूपं ब्रह्म । एवकारेण च सर्वे विशेषा निरस्यन्त इति निर्विशेषसन्मात्रब्रह्मबोधकमेवैतद्वाक्यम् । यथा यथा जगदुत्पत्तिस्तथा तथा विशेषाः प्रतिभासन्त इति ब्रह्मणः सविशेषत्वमौपाधिकमेव । तत्प्रतिपादकानि सविशेषवाक्यानीति न क्वापि श्रुतिर्विरुध्यते ।

केचित्तु सदेवेत्यत्र सच्छब्देन जगदुपादानकारणमव्याकृतनामरूपावस्थं सूक्ष्मं प्रधानमेवोच्यते । एवशब्देन चाधुना दृश्यमानस्य व्याकृतनामरूपत्वस्य व्यावृत्तिरित्याहुः । तन्न । सच्छब्दो ह्यसधातोः शतृप्रत्ययेन साधितः । तस्य चास्तित्वमात्रं प्रवृत्तिनिमित्तम् । न त्वव्याकृतनामरूपत्वरूपस्तद्विशेषः । न च श्रुतावग्र इत्युच्यते । तस्य चोत्पत्तेः पूर्वमित्यर्थः । तदानीं चास्पष्टनामरूपत्वमेवेत्यग्रेपदसमभिव्याहारेणाव्याकृतनामरूपत्वरूपविशेषार्थावगतिरिति वाच्यम् । तथाप्येवकारेण व्याकृतनामरूपत्वस्य व्यवच्छेदानापत्तिः । व्युत्पत्तिसिद्धो ह्ययं नियमो यत्स्वान्वयिपदशक्यतावच्छेदकधर्मानवच्छिन्नमेवैवकारेण व्यवच्छिद्यते ऽपिशब्देन च तदेव समुच्चीयते । न ह्ययं ब्राह्मण एवेत्यत्र प्रकरणादिना देवदत्तादिब्राह्मणविशेषावगतावप्येवकारेण यज्ञदत्तो व्यवच्छिद्यते । तस्यापि ब्राह्मणपदशक्यतावच्छेदकीभूतब्राह्मणत्वरूपधर्मावच्छिन्नत्वात् । तथा प्रकृते व्याकृतनामरूपस्य सत्पदशक्यतावच्छेदकीभूतास्तित्वावच्छिन्नत्वेन कथं तस्य सदेवेत्येवकारेण व्यावृत्तिः । एवं च सच्छब्दोऽस्तित्वमात्रवाचीति. सदेवेति श्रुतेर्निर्विशेषब्रह्मप्रतिपादकत्वं सिद्धम् ।

'अथ परा' (मु० १ । १ । ५) इति श्रुतिरपि निर्विशेषब्रह्मप्रतिपादिकैव ।

अथ परेतिश्रुतेर्निर्विशेषार्थकत्वम्

अथ परा यया तदक्षरमधिगम्यते । अत्र परविद्याप्राप्यमक्षरमित्युच्यते । न क्षरतीत्यक्षरमविनाशि । अक्षरशब्दस्याविनाशित्वं प्रवृत्तिनिमित्तम् । विनाशाभाव इति यावत् । तथा च पर-

विद्याप्राप्यस्य वस्तुनो निषेधमुखेनैव प्रथमत उल्लेखः । अनेन तद्वस्तु निर्विशेषमिति सूच्यते । ततः कथंभूतं तद्वस्त्वित्यपेक्षायामाह—

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः ॥

अद्रेश्यं प्रत्यक्षागोचरम् । अग्राह्यमनुमानाद्यगोचरं कर्मेन्द्रियागोचरं वा । अगोत्रमनामकम् । अवर्णं नीलादिवर्णरहितम् । अचक्षुःश्रोत्रं ज्ञानेन्द्रियरहितम् । अपाणिपादं कर्मेन्द्रियरहितम् । चक्षुःश्रोत्रशब्देन ज्ञानेन्द्रियाणि पाणिपादशब्देन कर्मेन्द्रियाणि चोपलक्ष्यन्ते । एवं चरणद्वयेन प्राप्यवस्तु निषेधमुखेन प्रतिपादितम् । यद्यपि कस्यचिद्वस्तुनो विधिमुखेन वर्णनमीदृशं तादृशमित्येवंरूपेण क्रियमाणं यथा वस्तुस्वरूपपरिचायकं भवति न तथा निषेधमुखेन वर्णनामिति विधिमुखेन वर्णनमेवादावुचितं तथापि प्रकृते परविद्याप्राप्यस्य वस्तुनो विधिमुखेन वर्णनं वस्तुतो नैव संभवतीति ध्वनयितुं श्रुतेस्तथा प्रक्रमः । उत्तरार्धे यद्यपि नित्यं विभुमित्येवं तृतीयचरणे विधिमुखेन वर्णनं मुखे भासते तथापि पर्यवसानं निषेधमुख एव । नित्यं कालतःपरिच्छेदरहितम् । विभुं देशतःपरिच्छेदराहितम् । सर्वगतं वस्तुतःपरिच्छेदरहितम् । अनेन त्रिविधपरिच्छेदराहित्यमुक्तम् । अतो नात्र कश्चिद्धर्मो विधिमुखेन बोध्यते । ननु यदद्रेश्यमित्यादिना दृश्यत्वादिविशेषराहित्यमुच्यते; तर्हि तद्वस्तु नैव स्यादिति चेत्तत्राह—सुसूक्ष्ममिति । अदृश्यत्वादिषु न तुच्छत्वं हेतुः किंतु सूक्ष्मत्वमित्याशयः । अत्रापि निषेधमुखेन प्रवृत्तावेव पर्यवसानम् । अदृश्यत्वे न सूक्ष्मत्वं साक्षाद्धेतुः । किं त्वदृश्यत्वसमनियतः स्थूलत्वाभावः । दृश्यत्वे स्थूलत्वस्य प्रयोजकत्वात् । तथा च सुसूक्ष्ममित्यस्य स्थूलत्वराहित्ये तात्पर्यम् । ननु नित्यं विभुमित्यत्र निषेधमुखेन प्रवृत्तौ पर्यवसानेऽपि विधिमुखेन प्रवृत्तिर्मुखे किमर्थं स्वीकृतेति चेन्न । सविशेषेश्वरज्ञानप्रणाड्या निर्विशेषवस्तुसाक्षात्कार इत्येतत्सूचयितुं तत्स्वीकारात् । सोपाधिक ईश्वरे तस्याः संभवात् । तदेतद्दर्शयति—यद्भूतयोनिमिति । भूतयोनिं जगत्कारणम् । जगत्कारणत्वादिविशेषवत्त्वेन यदेतद्धीरैर्दृश्यते तद्वस्तु वस्तुतो निर्विशेषमेवेति तात्पर्यम् । धीरा धैर्यशालिनः । धैर्यं चैवं क्रमेण निर्विशेषवस्तुसाक्षात्कारो भविष्यतीति बुद्धिदार्ढ्यम् । जगत्कारणत्वादिविशेषमारोप्य सविशेषवस्तुध्यानं निर्विशेषसाक्षात्कारोपाय एव । तथा च 'अद्रेश्यम्' 'परिपश्यन्ति' इत्यनयोर्न विरोधः । वस्तुतोऽदृश्यमेव वस्त्वारोपेण पश्यन्ति । न तु 'निर्विशेषं वस्तु सर्वथा नास्त्येव' इति भ्रमितव्यम् । अद्रेश्यमित्यादि

श्रुतिविरोधात् । अधीराणामदृश्यं धीराः परिपश्यन्तीति व्याख्यानं तु न चेतासि चमत्कारं विधत्ते । यत्तदद्रेश्यमग्राह्यमगोत्रमित्यादिवाक्यप्रवाहस्वारस्यभङ्गापत्तेः । एवं च वस्तु निर्विशेषमिति सिद्धम् । अग्रेऽपि

'यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' (मु० १ । १ । ७)

इति मन्त्रे निषेधमुखेन निर्विशेषमेव वस्तु प्रतिपाद्यते । यद्यप्ययं मन्त्रः सर्वेषु पुस्तकेषु न दृश्यते तथापि केषुचिद्दृश्यत एव । तथा चाथ परेति श्रुतेर्निर्विशेष-ब्रह्मप्रतिपादकत्वं सिद्धम् ।

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० २।१।१) इत्यपि श्रुतिर्निर्विशेषब्रह्मपरैव ।

सत्यं ज्ञानमिति श्रुते-र्निर्विशेपार्थकत्वम्

तत्रानन्तशब्दस्याविनाशित्वं प्रवृत्तिनिमित्तम् । विनाशाभाव इति यावत् । अभावेन च न वस्तुनः सविशेषत्वमिति प्राक् (पृ० ७१) उक्तमेव । सत्यशब्दादपि न सविशेषप्रतीतिः । तथाहि—सच्छ-ब्दोऽस्तितामात्रप्रवृत्तिनिमित्तको यत्र सामान्यस्य परा काष्ठा तादृशं निर्विशेषं सन्मात्रं ब्रूत इति प्रागुक्तमेव । युक्तं चैतत् । 'सदेव सोम्य' (छा० ६।२।१) इति वाक्यं हि जगत्प्रागवस्थाबोधकम् । जगन्मूलकारणीभूतस्य जगत्प्राग-वस्थापन्नस्य वस्तुनः सविशेषत्वे तस्य मूलकारणत्वं न संभवति । विशेषाणां सामान्यपूर्वकत्वेन मूलकारणस्य निर्विशेषस्यावश्यवाच्यत्वात् । अस्तित्वेन तु न सविशेषत्वं वाच्यम् । तथात्वे तस्य विशेषत्वं यत्सामान्यनिरूपितं तस्यैवास-न्मतेऽस्तिशब्दवाच्यत्वात् । निरूपकाणां ह्ययमस्तिशब्दः सर्वसामान्यभूतवस्तुवा-चकः । ब्रह्मशब्दोऽपि तथैव । बृंहणाद्ब्रह्म । बृंहणं सर्वव्यापनम् । सामान्येन हि विशेषा व्याप्ताः भवन्ति न तु विशेषेण सामान्यम् । तथा च बृहत्त्वेनापि न ब्रह्मणः सविशेषत्वम् । बृहत्त्वस्य विशेषरूपत्वे तादृशविशेषनिरूपकं यत्सामान्यं स्यात्तद्बृहत्त्वाश्रयेण ब्रह्मणा न व्याप्तं स्यादिति ब्रह्मणः सर्वव्यापकत्वासंभ-वात् । आत्मशब्दोऽप्येवम् । अतति व्याप्नोतीत्यात्मेत्यात्मशब्दव्युत्पत्तेः । एतदभि-प्रायेणैव श्रुत्या 'ब्रह्म वा इदम्' (बृ० १।४।१०) 'आत्मा वा इदम्' (ऐ० १ । १) इत्यत्र जगत्प्रागवस्थाबोधके वाक्ये ब्रह्मशब्द आत्मशब्दश्च प्रयुक्तः । एवं स्थिते 'ब्रह्मविदाप्नोति परम्' (तै० २ । १) इत्युपक्रम्य तादृशब्रह्मणो लक्षणं प्रतिपादयितुं प्रवृत्ता 'सत्यं ज्ञानम्' इति श्रुतिः कथं सविशेषं ब्रह्म बोधयेत् । तथा च सत्यपदस्यासत्याद्व्यावृत्तमित्यर्थ एव तात्पर्यम् । किं च सत्यपदस्य

सत्यत्वधर्मविशिष्टार्थबोधकत्वे व्याघातापत्तिः । विशेषाणां हि मिथो व्यावर्त्तक-त्वान्मिथ्यात्वमिष्यते । यथा घटशरावादीनां तत्सामान्यभूतमृदपेक्षया मिथ्या-त्वम् । एतच्च 'मृत्तिकेत्येव सत्यम्' ( छा० ६ । १ । ४ ) इतिश्रुतिसिद्धम् । तथा च सत्यत्वस्य विशेषत्वे तादृशसत्यत्वविशिष्टस्य सविशेषस्य ब्रह्मणो मिथ्या-त्वमेव स्यादिति सत्यं ज्ञानमित्युक्तिर्व्याहन्यते । किं च सत्यशब्दस्य सवि-शेषार्थबोधकत्वे यथा मनुष्यः प्राणिविशेषः प्राणिविशेषान्तरात्पश्वादेः सकाशा-द्व्यावृत्तश्च भवति तथा सत्यं कस्य विशेषः कस्माच्च विशेषान्तराद्व्यावृत्तं भव-तद्वक्तव्यम् । सद्विशेषः सत्यत्वमिति चेत्कस्मात्सद्विशेषान्तरात्सत्यं व्यावृत्तं भवति । सत्यं हि मिथ्याभूताद्व्यावृत्तं भवति । मिथ्याभूतं तु न सद्विशेषान्तरम् मिथ्याभूतस्य सत्त्वाभावात् । एवं च यत्सर्वसामान्यमस्तीत्येव केवलं वक्तुं शक्यते तदेव सत्यमिति केवलास्तित्वसमनियतं सत्यत्वमस्तित्व-परपर्याय एवेति सच्छब्दवत्सत्यशब्दोऽपि न सविशेषार्थबोधकः । अस्तिसत्य-शब्दयोः पर्यायत्वं च 'अत्र सत्यमसत्यम् ( वि० पु० २ । १२ । ४५ ) इति यदस्ति यन्नास्ति ( वि० पु० २ । १२ । ३८ ) इति प्रक्रान्तस्योपसंहारः' (श्रीभा० पृ० १०७ प० १४) इत्युक्तवता त्वयाप्यङ्गीकृतमेव । ज्ञानशब्दोऽपि न सविशेषार्थबोधकः । निर्विषया निराश्रया याऽनुभूतिस्तस्याः सन्मात्रस्व-त्वस्य प्रागुपपादितत्वात् ( पृ० ८० ) । किं च ज्ञानपदस्य सविशेषार्थबोध-कत्वे किं ज्ञानमेव विशेष उत ज्ञानत्वम् । आद्ये ज्ञानरूपविशेषविशिष्टस्यात्मनो ज्ञानपदात्प्रतीतिर्भाव्या । सा च न संभवति । ल्युट्प्रत्ययस्य कर्तर्यविधानात् 'अर्शआद्यजन्तो ज्ञानशब्दः' इति विषयवाक्यदीपिकाकारोक्तिस्तु ( त्रि० ग्रं० पृ० ३३ ) श्रुत्यक्षराननुगुणा । तथा सति ज्ञातृशब्दं ज्ञानवच्छब्दं वा श्रुतिर्नि-र्दिशेत् । द्वितीये तु ज्ञानपदेन गुणभूतज्ञानग्रहणे ज्ञानत्वरूपो विशेषो गुणभूते ज्ञाने न तु तादृशगुणभूतज्ञानाश्रयत्वेन त्वदभिमते ब्रह्मणीति ज्ञानपदात्सविशेषब्रह्म-प्रतीतिर्न संभवति । अथ ज्ञानपदेन ब्रह्मस्वरूपभूतं ज्ञानं गृह्यते न तु ब्रह्मगुणभूतमिति चेत्तथा सति ज्ञानपदस्य वैयर्थ्यमेव यात् । 'सत्यं ज्ञानमनन्तमिति मिलित्वा पदत्रया-त्मकमेकं ब्रह्मलक्षणम् । तत्र ज्ञानपदं नित्यासंकुचितज्ञानार्थकम् । तेन मुक्तव्या-वृत्तिः । मुक्ता हि मोक्षावस्थातः प्राक्संकुचितज्ञाना एवेति तद्व्यावृत्तिः' ( श्रीभा० पृ०१३५प०९) इति हि रामानुजीयानामभिप्रेतम् । ज्ञानपदेन स्वरूपभूतज्ञानस्य ग्रहणे तु मुक्तव्यावृत्तिर्न स्यात् । स्वरूपभूतज्ञानस्य बद्धावस्थायामपि संकोचा-भावात् । स्वरूपभूतज्ञानस्य संकोचविकासाङ्गीकारे त्वात्मनो विकारित्वप्रसङ्गे-नानित्यत्वादिदोषप्रसङ्गः ।

अद्वैतिनां तु मते सत्यादिवाक्ये त्रीणि लक्षणानि सत्यं ब्रह्म, ज्ञानं ब्रह्म, अनन्तं ब्रह्मेति । यद्यपीदं सत्यादिवाक्यं सामानाधिकरण्येनैकार्थप्रतिपादकं वाच्यवृत्त्या भवति तथापि लक्षणत्रयप्रतिपादनेऽस्य वाक्यस्य तात्पर्यमवगम्यते । अन्यथैकेन पदेन सिद्धावितरयोर्वैयर्थ्यप्रसङ्गात् । न हि ब्रह्मव्यतिरिक्तं किंचिदपि सत्यमस्ति, न च ज्ञानरूपं, नाप्यविनाशि येन पदत्रयसार्थक्यं स्यात् ।

अत्रानेकलक्षणप्रणयने को हेतुः । उच्यते—लक्षणं हि क्वचिद्व्यावर्तकं भवति । क्वचित्स्वरूपविशेषप्रमितिकृद्भवति । यथा चैत्र गामानयेत्युक्ते तच्छ्रुत्वा चैत्रेणानीतां गां पश्यतोऽत एवायं पशुर्गोशब्दवाच्य इति जानतश्च देवदत्तस्य चतुष्पदत्वादिसाधर्म्यात्पश्वन्तरे गोबुद्धिः स्यात् । तत्र सास्नादिमती गौरिति यल्लक्षणं क्रियते तत्पश्वन्तरव्यावर्तकं भवति । यस्य च न कथमपि गोव्यक्तेर्ज्ञानं तस्यायं पशुर्गोशब्दवाच्य इति ज्ञानाय सास्नादिमती गौरिति लक्षणं क्रियते । तत्तु तस्य स्वरूपविशेषप्रमितिकृद्भवति । यद्यपि व्यावर्तकमपि स्वरूपविशेषप्रमितिकृद्भवति स्वरूपविशेषप्रमितिकृच्च व्यावर्तकं भवतीति नान्योन्यासंकीर्णमेतद्भेदद्वयं तथापि लक्षणप्रणयनोद्देश्यभूतस्य व्यावृत्तिव्यवहाररूपस्य प्रयोजनद्वयस्य मिथोऽसंकर एव । तथा च यत्र लक्षणप्रणयने मुख्यत उद्देश्या स्वरूपविशेषप्रमितिस्तत्रानेकलक्षणप्रणयनमपि युज्यत एव । यतस्तस्मादधिकं सौकर्यं भवति । प्रकृते तु ब्रह्मणो रूपाद्यभावेन न कथमपि ब्रह्म प्रत्यक्षेणावगतमिति तत्स्वरूपविशेषप्रमितयेऽनेकलक्षणप्रणयनं सार्थकमेव ।

यत्तु 'प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वं सामानाधिकरण्यम् । तत्र सत्यज्ञानादिपदमुख्यार्थैस्तत्तद्गुणविरोध्याकारप्रत्यनीकाकारैर्वा, एकस्मिन्नेवार्थे पदानां प्रवृत्तौ निमित्तभेदोऽवश्याश्रयणीयः' ( श्रीभा० पृ० ५९ प० ६ ) इत्युक्तं तन्न । सामानाधिकरण्यस्य प्रवृत्तिनिमित्तभेदघटितत्वनियमे प्रमाणाभावात् । सत्यादिपदानामसत्याद्व्यावृत्तमित्याद्यर्थे तात्पर्यस्यानुपदमेवोक्तत्वेन ब्रह्मणः सत्यत्वादिधर्मैः सविशेषत्वापादनं दुर्वचमेव । व्यावृत्तेरभावरूपतया न तया कथमपि सविशेषत्वमित्यपि प्रागुपपादितमेव (पृ०८६)। यत्तु 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति शाब्दिकाः' ( श्रीभा०पृ० ५९ प० १६ ) इत्युक्तं तन्न । शाब्दिकाग्रेसरैर्नागोजीभट्टैरेव शब्देन्दुशेखरे 'सामानाधिकरण्यं चैकार्थविशेष्यकबोधजनकत्वमेव, न तु प्रवृत्तिनिमित्तभेदगर्भम्' इत्येवं सामानाधिकरण्यस्य प्रवृत्तिनिमित्तभेदघटिततायाः स्पष्टमेव खण्डितत्वात् ।

सामानाधिकरण्यम्

व्याकरणमहाभाष्यकारैश्च 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' (पा० सू० ८।१।७३) इति सूत्रे सामान्यवचनमित्यस्य 'अघ्न्ये देवि सरस्वति' इति प्रत्युदाहरणं दत्तम्। तत्र चाघ्न्य इत्यादीनां पर्यायवचनानां प्रवृत्तिनिमित्त-भेदाभावेन त्वदुक्तरीत्या सामानाधिकरण्यस्याभावादद्वयङ्गविकलतापत्तौ प्रत्यु-दाहरणपरभाष्यासंगतिः स्यात्। तत्रत्यकैयटेनापि 'पर्यायशब्दानामपि सामा-नाधिकरण्यादविद्यमानवत्त्वनिषेधान्निघातप्रसङ्गः' इत्युक्तवता प्रवृत्तिनिमित्त-भेदाभावेऽपि सामानाधिकरण्यं स्वीकृतम्। एवं च सत्यं ज्ञानमितिश्रुतेर्निर्वि-शेषार्थप्रतिपादकत्वं सिद्धम् ॥ १६ ॥

अद्वितीयश्रुतिर्नैव सहते सद्वितीयताम् ॥
येन केनापि धर्मेण सन्मात्रे परमात्मनि ॥ १७ ॥

ब्रह्मणोऽद्वितीयत्वम्

ब्रह्मणो निर्विशेषत्वादेव च तस्याद्वितीयत्वं सिध्यति। सविशेषत्वे तु विशेष-रूपस्य द्वितीयस्य सत्त्वात् 'अद्वितीयम्' (छा० ६।२।१) इति श्रुतिर्विरुद्धा स्यात्। 'जगदुपादानस्य ब्रह्मणः स्वव्यतिरिक्ताधिष्ठात्र-न्तरनिवारणेन विचित्रशक्तियोगप्रतिपादनपरत्वादद्वितीयपदस्य' (श्रीभा० १।१।१ ह० ५० ६) इत्युक्तं तन्न। अस्यार्थस्योपक्रमाननुगुणत्वात्। तथा हि—'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छा० ६।१।३) इति हि प्रतिज्ञा प्रस्तुता। तत्राश्रुतं किंचिद्वस्तु श्रुतं भवतीति नार्थः। तथासति किमनया प्रति-ज्ञया विशेषोऽर्थ उक्तः स्यात्। मृत्तिकाज्ञानेन पटादिज्ञानासंभवेऽपि घटश-रावादीनां केषांचिज्ज्ञानसंभवात्। अतोऽश्रुतं सर्वं येन श्रुतं भवतीत्यर्थो वाच्यः। मृत्तिकादयोऽर्थास्तु नैवंविधाः। तज्ज्ञानेन सर्ववस्तुज्ञानासंभवात्। तथा प्रति-ज्ञायां येनेत्यत्र यच्छब्दवाच्यमेकमेव किंचिद्वस्तु ग्राह्यं न त्वनेकम्। अनेक-ग्रहणे पूर्ववदेव नात्रापूर्वोऽर्थः कश्चिदुक्तः स्यात्। मृदादिष्वपि संभवात्। मृद्-ज्ञानेन तद्विकारभूतघटशरावादिज्ञानं जायते तन्तुज्ञानेन तद्विकारभूतपटादिज्ञानं जायत इति प्रसिद्धमेव। अतः प्रतिज्ञयाऽनया किमप्यधिकं नोक्तं भवेत्। अत-श्चैकवस्तुज्ञानेन सर्ववस्तुज्ञानमिति प्रतिज्ञार्थः पर्यवसितः। तत्र चैकवस्तुज्ञानेनेति ज्ञानपदेन सर्ववस्तुज्ञानमित्यत्र च ज्ञानपदेन सत्यमेव ज्ञानं ग्राह्यं नासत्यमसाधा-रणम्। तथासत्यसत्यज्ञानस्य दोषमूलत्वेन प्रतिज्ञायामलौकिकार्थाभिधानं न स्यात्। मृदादिदृष्टान्तानुरोधाच्च। नहि मृत्तिकायां कार्पासत्वेन ज्ञातायां घटादेः मृण्मयत्वेन ज्ञानं संभवति। न वा मृत्तिकायां मृत्तिकात्वेन ज्ञातायां घटा-

पटत्वेन ज्ञानं संभवति। किं तु मृत्तिकायां मृत्तिकात्वेन ज्ञातायां घटस्य मृत्तिकात्वेन ज्ञानं भवति। तथा च तत्र मृत्तिकेत्येव सत्यमित्येवं सत्यशब्देन स्पष्ट एवोल्लेखो दृश्यते। यद्यपि मृत्तिकायाः पारमार्थिकसत्यत्वाभावेन तस्या मृत्तिकात्वेन ज्ञानमप्यसत्यमेव तथापि लौकिकप्रतीत्यनुसारेण व्यावहारिकसत्यत्वमवलम्ब्य तादृशा दृष्टान्ता उपात्ताः। लोके हि सत्यत्वं तारतम्येन प्रतीयते। घटस्य पटत्वेन ज्ञानमसत्यम्। घटे पटस्वरूपस्य यावद्बोधं स्थितत्वेनास्थिरत्वात्। तदपेक्षया घटस्य घटत्वेन ज्ञानं सत्यम्। पटस्वरूपापेक्षया घटस्वरूपस्याधिककालस्थायित्वात्। परंतु तादृशं घटस्य घटत्वेन ज्ञानमपि घटस्य मृत्स्वरूपेण ज्ञानापेक्षयाऽसत्यमेव। घटस्वरूपापेक्षया मृत्स्वरूपस्याधिककालस्थायित्वात्। घटोत्पत्तेः प्राग्घटनाशोत्तरं च मृत्स्वरूपस्य स्थितत्वात्। मृत्तिकात्वेन ज्ञानमपि तत्कारणस्वरूपज्ञानापेक्षयाऽसत्यमेव स्यादित्यन्यत्।

अस्याश्च प्रतिज्ञाया मृदादिदृष्टान्तैः संभवदुक्तिकतां प्रदर्श्य पश्चात्तदुपपादनाय 'सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्' इत्युच्यत इति प्रागुक्तमेव ( पृ० १४ )। अयमभिसंधिः—अत्र जगतः प्रागवस्था बोध्यते। प्रागवस्थापन्नमेवोपादानकारणम्। तदेवावस्थान्तरमापद्यमानं कार्यम्। उपादानकारणज्ञानेन च कार्यगतसत्यांशज्ञानं सुलभमिति सदेवेतिश्रुत्यर्थः। अत्र च पूर्वप्रक्रान्तार्थानुरोधात्प्रतिज्ञाघटकेन येनेति यच्छब्देन गृहीतमेकं वस्तु सच्छब्देनोच्यते। तथा 'अश्रुतं श्रुतं भवति' इत्यनेन गृहीतं सर्वं वस्त्विदंपदेन गृह्यते। तच्च स्थूलं वा सूक्ष्मं वा संनिकृष्टं विप्रकृष्टं वा प्रत्यक्षादियोग्यं तदयोग्यं वा सर्वमेव ग्राह्यम्। अन्यथा यदगृहीतं तस्यात्र सत्कार्यत्वानुक्त्या ब्रह्मज्ञानेन तज्ज्ञानासंभवात्प्रतिज्ञाहानिः स्यात्। विना प्रमाणं संकोचे मानाभावाच्च। इदंशब्दश्चात्रोद्देश्यसमर्पकः। सच्छब्दो विधेयसमर्पकः। एवकारयुक्तत्वात्। तदुक्तम्—

'तच्छब्द एवकारश्च स्यादुपादेयलक्षणम्' इति।

एकमद्वितीयमिति च पदद्वयं विधेयपरम्। तत्राप्युद्देश्यमिदंशब्दवाच्यमेव। न तु सच्छब्दवाच्यम्। विधेयस्योद्देश्यत्वकल्पनाया अप्रामाणिकत्वात्। यद्यपि सदेव सोम्येदमितीदंशब्दार्थस्य सच्छब्दार्थेन सह तादात्म्यबोधनादिदंशब्दार्थमुद्दिश्य विधीयमानमेकत्वमद्वितीयत्वं च सच्छब्दार्थ एव पर्यवस्यति तथापि वाच्यवृत्त्या न सच्छब्दार्थस्य तत्रोद्देश्यत्वं सिध्यति। अग्र इति च विधेयत्रयेऽपि संबध्यते। इदं जगदुत्पत्तेः प्राक्सद्रूपमेवासीत्। तथेदं जगदुत्पत्तेः प्रागेकमे-

वासीत्। तथेदं जगदुत्पत्तेः प्रागद्वितीयमेवासीदिति। अत्र प्रथमवाक्ये शून्य- दनिरासद्वारा सत्कारणवादः प्रस्थापितः। इदं सदिति सामानाधिकरण्य- निर्देशात्सत उपादानकारणत्वं च प्रस्थापितम्। द्वितीयेऽनेककारणवादनिरास- द्वारैककारणवादः प्रस्थापितः। तृतीयेऽद्वितीयमित्यनेन सविशेषकारणवादनि- रासद्वारा निर्विशेषकारणवादः प्रस्थापितः। एवं च कारणस्य भेदत्रयशून्यत्वं सिद्धं भवति। न च द्वितीयत्वं स्वसदृशेनैव केनचिन्न तु स्वगतेन केनचिद्धर्मेण कथमद्वितीयपदेन स्वगतभेदव्यावृत्तिरिति वाच्यम्। 'असिद्वितीयोऽनुससार पा- वम्' 'ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः' (वेणीसं० ३। इत्यादौ स्वगतेनापि सद्वितीयत्वस्य दृष्टत्वात्। एतन्मूलक एव 'अद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहते' इत्यद्वैतवादिनां प्रवादः। भेदत्रयराहित्यं तेजो- विन्दूपनिषद्यपि दर्शितम्—

सजातीयं न मे किंचिद्विजातीयं न मे क्वचित्।
स्वगतं च न मे किंचिन्न मे भेदत्रयं भवेत् (तेजो० ३।४७) इति।

तत्र शून्यवादे केवलनिमित्तकारणवादेऽनेककारणवादे सविशेषकारण- च प्रतिज्ञाहानिः स्यात्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा हि कार्यमात्रं प्र- कस्य निर्विशेषस्योपादानकारणत्वे सत्येव सिध्यति नान्यथा। शून्यवादे भावरूपं कारणमेव नास्तीति कथमेकविज्ञानम्। दूरे तेन सर्वविज्ञानम्। तस्य केवलनिमित्तकारणत्वे कथं तेन सर्वविज्ञानम्। न हि दण्डज्ञानेन ज्ञानं जायते। तथाऽनेकोपादानकारणवादे तादृशानेककारणान्तर्गतैककार- विज्ञानेन कथं सर्वविज्ञानम्। न हि सुवर्णरजतताम्राद्यनेकधातुभिरारब्धं एकस्य सुवर्णस्य ज्ञानेन ज्ञातुं शक्यते। न वा तैर्धातुभिः पृथक्पृथगारब्धा एकस्य सुवर्णस्य ज्ञानेन ज्ञातुं शक्यन्ते। तथा सविशेषकारणवादेऽपि ज्ञासिद्धिर्न स्यात्। सविशेषं हि वस्तु तेन विशेषेणेदृशमिति वक्तुं शक्यते। शत्वस्य च तादृशत्वप्रतिद्वन्द्वितया तादृशमन्यत्किंचिदवश्यं वस्तु स्वीकार्यं तस्य च तादृशस्य वस्तुनः किंचित्कार्यं प्रति कारणत्वे तादृशस्य वस्तुनस्तत्का- र्यस्य च ज्ञानमीदृशवस्तुज्ञानेन दुर्लभमिति सर्वविज्ञानं पूर्वप्रतिज्ञातं न संपद्येत। अत्रानेककारणप्रकल्पनया प्राप्तस्य तदन्तर्गतैककारणगतस्य कारणान्तरप्रति- गिकभेदस्यैकमेवेत्यनेन निरासः। अद्वितीयमित्यनेन तूदासीनप्रतियोगिक- कारणगतभेदस्य निरासः। स चोक्तरीत्या स्वगतस्यापि भेदस्येति।

एवं स्थिते रामानुजीयोक्त्यनुसारेणाद्वितीयपदस्य विचित्रशक्तियोगप्रतिपादनपरत्वे कथमिव तादृशशक्तिज्ञानं प्रतिज्ञासिद्ध्य उपयुज्यते कथं वा तादृशशक्त्यज्ञाने प्रतिज्ञातार्थहानिः स्यादिति विपश्चित एव विदांकुर्वन्तु। किं च भूतभौतिकस्य सर्वस्य जगतः सत्यत्वं मन्यमानानां विशिष्टाद्वैतिनां मते सच्छब्दवाच्यवस्तुज्ञानेन सर्ववस्तुज्ञानं दुर्लभमेव। मृत्तिकायां मृत्स्वरूपेण ज्ञातायामपि घटस्य घटत्वरूपेण ज्ञानं दुर्लभमेवेति दृष्टान्तासंगतिश्च। घटस्य घटत्वरूपेणासत्यत्वमेवेत्येवं मिथ्यात्ववादिनामद्वैतिनां मते तु मृत्तिकायां मृत्स्वरूपेण ज्ञातायां घटस्य घटस्वरूपापेक्षया सत्येन मृत्स्वरूपेण ज्ञानं सुलभमिति दृष्टान्तसंगतिः। जगत्कारणीभूतसन्मात्रज्ञानेन जगति सत्यस्य सदंशस्य ज्ञानं सुलभमिति प्रतिज्ञासिद्धिश्चेति प्रागुपपादितं नैव विस्मर्तव्यम्॥ १७॥

श्रुतिस्मृतिपुराणेषु दृश्यन्ते या गुणोक्तयः।
तासां तात्पर्यमन्यत्र श्रुत्यादिष्वेव सूच्यते॥ १८॥

निर्विशेषब्रह्मणि न काप्यनुपपत्तिः

यत्तु 'सर्वनिषेधे हि स्वाभ्युपगता नित्यत्वादयश्च निषिद्धाः स्युः' (श्रीभा० पृ० ६० प० १३) इत्युक्तं तन्न। इष्टापत्तेः। न हि मायावादिनः कंचिदपि भावरूपं धर्मं ब्रह्मण्यभ्युपगच्छन्ति। नित्यत्वं ह्युत्पत्तिविनाशयोगित्वाभाव एव। अभावेन च न सविशेषत्वमिति प्रागुपपादितम् (पृ० ७१)।

यत्तु 'सर्वशाखाप्रत्ययन्यायश्चात्र भवतो विपरीतफलः। सर्वशाखासु कारणान्वयिनां सर्वज्ञत्वादीनां गुणानामत्रोपसंहारहेतुत्वात्' (श्रीभा० पृ० ६० प० १४) इत्युक्तं तच्चिन्त्यम्। कारणत्वेनाभिमतं ब्रह्म वस्तुतो निर्विशेषमेव। कारणत्वमपि तत्र कल्पितमेव। तादृशकारणत्वोपयोगिनो गुणाः सर्वज्ञत्वादयोऽपि तत्र कल्पिता एवेति ह्यस्माकं राद्धान्तः। तथा च कल्पितानां गुणानामुपसंहारेऽपि वस्तुतो निर्विशेषत्वस्य बाधाभावेन कथं सर्वशाखाप्रत्ययन्यायस्यात्र विपरीतफलत्वम्। प्रत्युत तेन न्यायेन वास्तविकं ब्रह्मणो निर्विशेषत्वं सर्वत्र कारणवाक्येषु प्रतीयत एव। यत्तु 'निर्गुणवाक्यं प्राकृतहेयगुणविषयम्' (श्रीभा० पृ० ६० प० १९) इत्युक्तं तत्प्रागेव (पृ० ६९ प० १८) दत्तोत्तरम्। याश्च ब्रह्मणि ज्ञातृत्वादिगुणप्रतिपादिकाः 'यः सर्वज्ञः' (मु० १।१।९) इत्याद्याः श्रुतयः प्रदर्शिताः (श्रीभा० पृ० ६१ प० ४) ता औपाधिकगुणपुरस्कारेण प्रवृत्ता इत्यपि प्रागुक्तमेव (पृ० ६९ प० ११)। इतरथा 'निर्गुणम्' (चू० ७) इतिश्रुतिविरोधः स्यात्।

यत्तु 'निर्गुणवाक्यानां सगुणवाक्यानां च विषयमपहतपाप्मेत्यादिना इत्यन्तेन हेयगुणान्प्रतिषिध्य सत्यकामः सत्यसंकल्प इति ब्रह्मणः कल्याणगुणान्विदधतीयं श्रुतिरेव विविनक्तीति सगुणनिर्गुणवाक्ययोर्विरोधाभावादन्यतरस्य मिथ्याविषयताश्रयणमपि नाशङ्कनीयम्' (श्रीभा० पृ० ६१ प० १६) इत्युक्तं तदसंगतम्। 'अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः (छा० ८।१।५) इति श्रुतिः सगुणनिर्गुणवाक्ययोर्विषयविवेचिका।

निर्गुणसगुणवाक्ययोरविरोधः

तत्रापहतपाप्मेत्यादिनाऽपिपास इत्यन्तेन भागेन निर्गुणश्रुतेर्विषयो दर्शितः। सत्यकामः सत्यसंकल्प इति भागेन सगुणश्रुतेर्विषयो दर्शितः' इति हि त्वदीयं मतम्। तन्न संभवति। पातकजरामरणादीनां गुणत्वस्य क्वाप्यप्रसिद्धत्वात्। सत्यकाम इत्यादिना च सगुणश्रुतेर्विषयो दर्शित इत्यपि न सम्यक्। सगुणश्रुतयो हि न सगुणो गुणवानित्यादिशब्दैर्गुणसामान्यपुरस्कारेण गुणान्विदधति किं तु ज्ञातृत्वदेवतात्वपतित्वादिगुणविशेषपुरस्कारेण। त्वयापि ता एव निर्दिष्टाः। सत्यकाम इत्यत्र च सत्यकामत्वादयो गुणविशेषा एव प्रतिपादिताः। न च गुणविशेषप्रतिपादकश्रुतीनां गुणविशेषान्तरप्रतिपादकश्रुत्या कथं विषयप्रदर्शनं भवतीति विपश्चित एव विभावयन्तु। किं च सत्यकामः सत्यसंकल्प इति श्रुतिप्रतिपादिताः सत्यकामत्वादयो नात्मनः स्वाभाविका गुणाः। यतः—'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' (बृ० १।५।३) इति श्रुत्यैव कामादीनां मनोवृत्तिविशेषरूपत्वं स्पष्टमभिधीयते। ज्ञातृत्वमपि मनोवृत्तिविशेष एव। धीशब्देन ज्ञानाभिधानात्। तथा च निर्गुणसगुणवाक्ययोरविरोधं 'कामः संकल्पः' इति श्रुतिरेव संपादयतीत्येव युक्तम्। अत्र साश्रयं सविषयं ज्ञानं मनोवृत्तिविशेषरूपम्। निर्विषयं निराश्रयं ज्ञानं त्वात्मस्वरूपमेवेति न कथमप्यात्मनः सगुणत्वम्। आनन्दोऽपि ज्ञानविशेष एव। 'ज्ञानमेव ह्यनुकूलमानन्द इत्युच्यते' (श्रीभा० पृ० ६ प० १०) इत्युक्तवतस्तवाप्येतत्संमतमेव। तथा च न तेनापि ब्रह्मणः सगुणत्वम्।

यत्तु 'आनन्दं ब्रह्मणो विद्वान् (तै० २।९।१) इति ब्रह्मणः कल्याणगुणानन्त्यमत्यादरेण वदतीयं श्रुतिः' (श्रीभा० पृ० ६१ प० २१) इत्युक्तम्। 'ब्रह्म विद्वानित्यनुक्त्वा ब्रह्मण आनन्दं विद्वानित्युक्तत्वाद्गुणस्याप्यादरो बोधितः' इति तदभिप्रायः। परं तु नैतावताऽऽनन्दस्य वास्तविक

ब्रह्मगुणत्वं सिध्यति । पुरुपेण धृते स्त्रीवेपे प्रेक्षकाणामत्यादरेणावलोकने प्रवृत्तावपि तस्यौपाधिकत्वमेव दृश्यते ।

यत्तु ‘ सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता (तै० २ । १ । १) इति ब्रह्मवेदनफलमवगमयद्वाक्यं परस्य विपश्चितो ब्रह्मणो गुणानन्त्यं ब्रवीति । विपश्चिता ब्रह्मणा सह सर्वान्कामानश्नुते । काम्यन्त इति कामाः कल्याणगुणाः । ब्रह्मणा सह तद्गुणान्सर्वानश्नुत इत्यर्थः ’ (श्रीभा० पृ० ६२ प० १) इत्युक्तं तच्चिन्त्यम् । अत्र कोऽयं गुणवाचकः शब्दः कथं वा तादृशगुणानां ब्रह्मणा संबन्धः । कामशब्दस्तु गुणेपु न रूढः । ‘ काम्यन्त इति कामाः ’ इति योगं प्रदर्शयतस्तवाप्येतदभिप्रेतमेव । योगपुरस्कारे च न कामशब्दो गुणत्वेन गुणानभिदधाति । काम्यत्वेन रूपेण गुणाभिधानेऽपि न गुणा एवात्र ग्रहीतुं शक्याः । गुणेतरेपां काम्यानां भोग्यवस्तूनां संभवात् । अत एवात्र नाक्षेप्तुमपि शक्याः । विशेपेण हि सामान्यमाक्षिप्यते न तु सामान्येन विशेपाः । यद्यपि निर्विशेपं न सामान्यमिति न्यायस्तथापि सामान्येनामुक एव तत्र विशेप इति न निश्चेतुं पार्यते । कथं चात्र ते गुणा ब्रह्मगता एवेति निर्णयः । न ह्यत्र ब्रह्मण इति पष्ठ्यन्तं पदं कामान्वितं दृश्यते । कस्य कामा इत्याकाङ्क्षा तु नियमेन न जायते । कामशब्दस्य नित्यसाकाङ्क्षत्वाभावात् । ईदृशस्थले पुत्रमाप्नोतीत्येवं नित्यसाकाङ्क्षशब्दप्रयोगेऽपि कर्तुः स्वस्यैवेति कल्पनयैवाकाङ्क्षानिवृत्तेर्न्याय्यत्वाच्च । किं च ब्रह्मगुणा नैव जीवप्राप्या भवन्ति । किं तु ब्रह्मगुणसदृशा गुणाः । एवं चास्थान एवायं संरम्भो ब्रह्मणः सगुणत्वसमर्थनाय रामानुजानाम् । यतो न कामशब्दो गुणाभिधायकः । गुणाभिधानेऽपि न तेनाकाङ्क्षा । आकाङ्क्षायामपि न ब्रह्मणः संबन्धः । संबन्धेऽपि न ब्रह्मगुणप्राप्तिसंभव इति । अथ जीवब्रह्मणोरैक्याभिप्रायेण ब्रह्मगुणप्राप्तिसंभवश्चेदागतोऽसि मदीयं मार्गम् । तथा चेत्थं श्रुत्यर्थ उचितः । सहेति युगपदित्यर्थे । स ब्रह्मभूतो विद्वान्ब्रह्मस्वरूपेणैव सर्वान्कामान्युगपदश्नुते । ये सुखविशेपा हिरण्यगर्भाद्युपाधिपु भोग्यत्वेनाभिमतास्तेपां सर्वेपां ब्रह्मानन्दाव्यतिरेकाद्ब्रह्मभूतो विद्वान्सर्वानेवानन्दानश्नुते । आनन्दस्वरूपभवनमपि मुमुक्षुदशास्थः कामविशेप एव । तथा चाखण्डानन्दब्रह्मरूपः संपद्यत इति ।

ब्रह्मगुणकथने श्रुतेर्न तात्पर्यम्

इयमेव मोक्षावस्था । अस्यामवस्थायां न ज्ञातृज्ञेयभावः । ब्रह्मणो ज्ञानाविपयत्वात् । तदुक्तम्—

यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ ( के० ११ ) इति ।

यस्य ब्रह्मामतं ज्ञानाविषय इति निश्चयस्तेन सम्यगवगतम् । यस्य तु ब्रह्म मतं ज्ञानविषयत्वेनाभिमतं स न वेद । यतोऽस्माभिर्ब्रह्म ज्ञातमस्मन्निष्ठज्ञानविषयीभूतमित्येवं विजानतां ब्रह्माविज्ञातमेव । अद्वैते ब्रह्मणि विषयविषयिभावासंभवात् । अविजानतां ' ब्रह्म न ज्ञानविषयः ' इति विजानतां ब्रह्म विज्ञातमिति श्रुत्यर्थः । साधकावस्थायां तु ज्ञातृज्ञेयभावकल्पनाऽस्त्येव । तदनुसारेण च ' ब्रह्मविदाप्नोति परम् ' ( तै० २ । १ । १ ) इत्यत्र ब्रह्मविदित्युक्तम् । एतेन ' ब्रह्मणो ज्ञानाविषयत्वे ब्रह्मविदाप्नोति परम् ( तै० २।१।१ ) ब्रह्म वेद ब्रह्मैव भवति ( मु० ३।२।९ ) इति ज्ञानान्मोक्षोपदेशो न स्यात्' ( श्रीभा० पृ० ६२ प० १० ) इत्यपास्तम् । यत्तु 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ( तै० २ । ४ । १ ) इतिं ब्रह्मणोऽनन्तस्याऽपरिमितगुणस्य वाङ्मनसयोरेतावदितिपरिच्छेदायोग्यत्वश्रवणेन ब्रह्मैतावदिति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्माविज्ञातममतमित्युक्तम् । अपरिच्छिन्नत्वाद्ब्रह्मणः' ( श्रीभा० पृ० ६२ प० १८ ) इत्युक्तं तत्र ब्रह्मपरिच्छेदज्ञानवतां ब्रह्माविज्ञातमिति सत्यमेव । परं तु तन्न प्रकृतश्रुतितात्पर्यम् । विजानतामित्यस्यैतावदिति ब्रह्मपरिच्छेदज्ञानवतामित्यर्थे प्रमाणाभावात् । 'यतो वाचः' इति श्रुतिरपि न तत्तात्पर्यिका । वाङ्मनसयोर्निवृत्तिहेतुत्वेन गुणानन्त्यस्य तत्र श्रुतावनिर्देशात् । अप्राप्येत्यस्य कर्माकाङ्क्षायां वाङ्निवृत्त्यवधित्वेन श्रुतं यच्छब्दनिर्दिष्टं ब्रह्मैव संबन्धुमुचितं न त्वध्याहृतं गुणान्तादिकमिति प्रागुक्तमेव (पृ०७० प०३)। त्वयाऽपीयं रीतिः ' प्रतिषेधादिति चेन्न ( ब्र० सू० ४।२। १२ ) इति सूत्रे न तस्य प्राणा उत्क्रामन्ति ( बृ० ४ । ४ । ६ ) इति श्रुतौ कस्मादुत्क्रामन्तीत्यपादानापेक्षायामश्रुताच्छरीरात्संबन्धितया श्रुतस्यात्मन एव संनिहितत्वेनापादानतयाऽपि ग्राह्यत्वात् ' (श्रीभा० पृ० ७३४ प०११) इति वदता स्वीकृतैव । तथा च ब्रह्मणो निर्विशेषज्ञानस्वरूपत्वादेव तस्माद्वाङ्मनसयोर्निवृत्तिः । तथा च 'न दृष्टेर्द्रष्टारं पश्येः' ( बृ० ३ । ४ । २ ) इतिश्रुतिर्दृष्टिव्यतिरिक्तं द्रष्टारं प्रतिषेधति । यत्त्वेतच्छ्रुतिव्याख्यानम् ' आगन्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञानस्वरूपतां कुतर्कसिद्धां मत्वा न तथाऽऽत्मानं पश्येः, अपि तु द्रष्टारमपि दृष्टिरूपमेव पश्येः ' ( श्रीभा० पृ० ६३ प० १ ) इति

श्रुतिसंमतं ब्रह्मज्ञानस्वरूपम्

तत्क्लिष्टम्। निषेध्यतावच्छेदकस्य जडत्वस्य श्रुतावनिर्देशात्। द्रष्टृत्वेनैव निषेधे श्रुतेः स्वारस्यात्। 'विज्ञातारमरे केन विजानीयात्' (बृ० २।४।१४) इति विज्ञातृत्वोक्तिस्त्वौपचारिकीति प्रागेवोक्तम्। किं च रामानुजमते विज्ञातृत्वस्य सत्यत्वे विज्ञातारमर इति श्रुत्यर्थो नैव संगतो भवति। किंशब्दो ह्यत्र न साधनविषयप्रश्नार्थकः। अग्रेऽमुकेन साधनेनेत्युत्तरादर्शनात्। किं त्वाक्षेपार्थकः। विज्ञातृविषयकज्ञानसाधनस्याक्षेपेऽर्थादेव तद्द्वारा तादृशं ज्ञानमप्याक्षिप्तं भवति। तत्तु रामानुजीयानामनिष्टमेव। तैरात्मनो ज्ञेयत्वाङ्गीकारात्।

नानात्वनिषेधतात्पर्यम्

निर्विशेषज्ञानस्वरूपे ब्रह्मणि च न लेशतोऽपि भेदस्यावसरः। 'नेह नानास्ति किंचन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (बृ० ४।४।१९) 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ० ४।५।१५) इत्यादिश्रुतिषु बहुधा भेदनिषेधदर्शनात्। यत्तु 'कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्याात्तत्प्रत्यनीकनानात्वमुक्तश्रुतिषु प्रतिषिध्यते। न पुनः, बहु स्यां प्रजायेय (छा० ६।२।३) इति बहुभवनसंकल्पपूर्वकं ब्रह्मणो नानात्वं श्रुतिसिद्धं प्रतिषिध्यते' (श्रीभा० पृ० ६३ पं० २१) इत्युक्तं तच्चिन्त्यम्। तथा हि—भिन्न इति व्यवहारो द्विविधः, इतरप्रतियोगिकभेदमूलकोऽवान्तरभेदमूलकश्च। आद्यो यथा पृथिवी जलापेक्षया भिन्ना। अत्र च भिन्नशब्दस्य भेदः प्रवृत्तिनिमित्तम्। स चात्र जलप्रतियोगिकः पृथिवीनिष्ठः। द्वितीयो यथा पृथिवी घटपटादिभेदेन भिन्ना। अत्र च भिन्नशब्दस्य न भेदः प्रवृत्तिनिमित्तम्। घटप्रतियोगिकभेदस्य घटेऽसत्त्वेन पटप्रतियोगिकभेदस्य च पटेऽसत्त्वेन पृथिवीत्वावच्छेदेन पृथिव्यां भेदस्यासत्त्वात्। किं त्ववान्तरभेदमूलकमनेकविधत्वमत्र भिन्नशब्दस्य प्रवृत्तिनिमित्तम्। एतदेव च नानाशब्दस्यापि प्रवृत्तिनिमित्तम्। अनेनैव रूपेण जगतोऽवलोकनं लोकप्रसिद्धं 'य इह नानेव पश्यति' इति श्रुत्याऽनूद्य निषिध्यते। श्रुताविहेतीदंशब्देन 'सर्वं खल्विदं ब्रह्म' (छा०३।१४।१) इत्यत्रेव सर्वस्य जगतः परामर्शात्। नानात्वेनावलोकनस्य निषेधश्चैकत्वेनावलोकने पर्यवस्यति। अवलोकनमात्रनिषेधे तु न श्रुतेस्तात्पर्यम्। तथा सति 'मृत्योः स मृत्युमाप्नोति य इह पश्यति' इत्येव वदेत्। नानापदार्थानामेकत्वेनावलोकनं च तेषामेकोपादानकारणकत्वे सत्येव संभवति। तदेव च 'बहु स्याम्' (तै० २।६।१, छा० ६।२।३) इति श्रुत्या प्रतिपाद्यते। अनुभू-

यमानमप्येतन्नानाभूतं जगदेकोपादानकारणकर्तृकसंकल्पपूर्वकोत्पत्तिमत्त्वेना तेन रूपेण तया श्रुत्या ज्ञाप्यते। एतेन 'प्रत्यक्षादिसकलप्रमाणानवगतनाना दुरारोहं ब्रह्मणः प्रतिपाद्य तदेव वाध्यत इत्युपहास्यमिदम्' (श्रीभा० पृ० ६४ प० ३) इत्यपास्तम्। जगति नानात्वस्य प्रत्यक्षादिप्रमाणैरवगतत्वात् एतन्नानात्वं ब्रह्मगतत्वेन नैव प्रत्यक्षादिभिरवगन्यत इति चेद्ब्रह्मसंवन्धप्रतिपादन एव श्रुतेस्तात्पर्यं कल्पयितव्यं भवति। स च संवन्धो न 'य इह नानेव पश्यति' इति श्रुत्या निषिध्यते। किं तु नानात्वेनावलोकनमेव निषिध्यत इति किमत्रोपहास्यम्। प्रत्युत 'वहु स्याम्' इति श्रुतिरेकोपादानकारणकत्वं जगतः प्रदर्श्य 'य इह नानेव पश्यति' इतिश्रुतितात्पर्यविषयीभूत एकत्वेनावलोकन उपयुज्यत एव। किं च रामानुजमते 'य इह नानेव पश्यति' इति श्रुतिप्रतिपादितो निषेधः सुतरां नोपपद्यते। जगति नानात्वस्य सत्यतया तैरभ्युपगम्यमानत्वात्। ब्रह्मणि नानात्वं नास्तीत्यभिप्रायेण न श्रुतिस्तन्मते योजयितुं शक्या। य इह नानेव पश्यतीत्यत्रेहेत्युक्त्या तादृशार्थाप्रतीतेः। चिदचिद्रूपशरीरविशिष्टे ब्रह्मण्यन्तर्गतचिदचिदन्तर्यामिरूपतत्त्वत्रयभेदेन नानात्वस्य तत्संमतत्वाच्च। अथ यस्य ब्रह्म कारणं न भवति नाप्यन्तर्यामि भवति तादृशं ब्रह्मभिन्नं वस्तु किंचिदपि नास्तीत्यभिप्रायश्चेन्नानाशब्दे लक्षणा स्यात्। प्रागुक्तशक्यतावच्छेदकस्याभावात्। नानाशब्दस्य हि न भेदः प्रवृत्तिनिमित्तमित्यवपदमेवावोचाम। द्वैतशब्दस्यापि न भेदः प्रवृत्तिनिमित्तम्। किं त्ववान्तरभेदमूलकं द्वित्वम्। तादृशजगद्गतं द्वित्वकार्यभूतं किंचित्कर्तृकं किंचित्कर्मकं लोकप्रसिद्धं दर्शनादिकं 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' (बृ० ४।४।१५) इत्यादिनाऽनूद्य 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ० ४।४।१५) इत्यादिना निषिध्यत इति वोध्यम्।

'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति' (तै० २।७।१) इत्यत्र नानात्वदर्शनाद्भयप्राप्तिः प्रतिपादिता। तथा चाभयार्थिना नानात्वदर्शनं नेष्यत इति सूचितमिति तस्या अपि श्रुतेर्नानात्वदर्शननिषेध एव तात्पर्यम्। यत्तु 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत (छा० ३।१४।१) इति तन्नानात्वानुसंधानस्य शान्तिहेतुत्वमुपदिश्यते' (श्रीभा० पृ० ६४। पं०८) इत्युक्तं तच्चिन्त्यम्। तथा हि-इति शान्त उपासीतेत्यत्रेतिशब्दः पूर्वोक्तं परामृश्य तस्य शान्तिहेतुत्वं वोधयति। सर्वं खल्विदं

नानात्वदर्शनान्न शान्तिः

ब्रह्म तज्जलानिति पूर्वभागे ब्रह्म तज्जलानिति च शब्दद्वयं विधेयसमर्पकम्। इदं सर्वं जगदुद्दिश्य ब्रह्मत्वं तदुत्पत्त्यादिमत्त्वं च विधीयते। तस्माद्ब्रह्मणः सकाशाज्जायत इति तज्जम्। लीयत इति लम्। अनिति प्राणितीत्यन्। जगत उत्पत्तिर्ब्रह्मणः सकाशादेव। लयश्च ब्रह्मण्येव। तथा चेष्टा च जगतो ब्रह्मणैव। अत्र प्रथमेन विधिना सर्वस्य ब्रह्मत्वे बोधिते सर्वस्य कथं ब्रह्मत्वमित्याकाङ्क्षायां तदुपपादनाय तज्जलानिति द्वितीयो विधिरारभ्यते। सर्वस्य ब्रह्मैकरूपत्वानुसंधाने च नानात्वानुसंधानाभावेन रागद्वेषाभावाच्छान्तिः सुलभा। तथा चात्र नानात्वानुसंधानं नैव विधीयत इति कुतस्तस्य शान्तिहेतुत्वेनोपदेशः। उद्देश्यसमर्पकसर्वशब्दबोधितं नानात्वं तु न कुर्वद्रूपतां दधाति। प्रत्युत नानात्वानुसंधाने रागद्वेषसंभवेन प्राग्विद्यमानापि शान्तिर्व्याहन्येत। ब्रह्मात्मकत्वेनापि नानात्वानुसंधाने जातुचिद्द्वेषस्य क्षयसंभवः। रागस्य तु वृद्धिरेव स्यात्। तथा च शान्तिर्दुर्लभैवेति। एतेन 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति' (तै०२।७।१) इति श्रुतावन्तरशब्दस्यावकाशार्थकत्वं गृहीत्वा तत्समर्थनं (श्रीभा० पृ० ६४ प० १५) प्रत्युक्तम्। छिद्रार्थकत्वमप्यन्तरशब्दस्य तथैव निरस्तं वेदितव्यम्। न हि ब्रह्मण्यवकाशं छिद्रं वा कर्तुं कोऽपि समर्थः। दूरे तस्य भयम्। क्वान्तरं कुरुत इत्याकाङ्क्षायां स्ववाक्योपात्तमेतस्मिन्नित्येव तत्रान्वेतुमर्हति। न तु पूर्ववाक्योपात्ता ब्रह्मणि प्रतिष्ठा। 'एतस्मिन्नदृश्ये....प्रतिष्ठां विन्दते' (तै०२।७।१) इति पूर्ववाक्ये प्रतिष्ठाशब्दस्य सप्तम्यन्तत्वाभावाच्च। सप्तम्यन्तत्वेन विपरिणामे तु क्लेश एव। एतद्वाक्यस्थस्यैतस्मिन्नित्यस्य 'श्रुतानुमितयोः श्रुतसंबन्धो बलीयान्' इति न्यायेनानुवृत्तप्रतिष्ठापदार्थेऽन्वयासंभवश्च। न च श्रुतेऽन्तरपदार्थेऽवकाशे छिद्रे वैतत्पदार्थस्य ब्रह्मणोऽन्वयो न संभवतीति नात्र तन्न्यायविषयः। उभयत्रान्वयसंभव एव तन्न्यायप्रवृत्तेरिति वाच्यम्। अन्तरपदार्थे श्रुते भेदेऽन्वयसंभवात्। नहि भेदोऽत्रान्तरपदार्थो न ग्राह्य इत्यत्र किंचिन्नियामकमस्ति। किं च पूर्ववाक्येऽप्येतस्मिन्निति पदसत्त्वेन तेनान्वितायाः प्रतिष्ठाया उत्तरत्र संबन्धः स्यादित्युत्तरवाक्ये पुनरेतस्मिन्निति पदं श्रुतिर्नैवोच्चारयेत्। तथा च पुनरेतस्मिन्निति पदं प्रतिष्ठानिवृत्त्यर्थमेवेति श्रुतेरभिप्रायो गम्यते।

निर्विशेषं ब्रह्म सूत्रकृत्संमतम्

अयं च निर्विशेषब्रह्मवादः सूत्रकारस्यापि संमत एव। तदुक्तं—'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' (ब्र० सू० ३। २। ११) इति। स्थानमुपाधिः। परस्य ब्रह्मण उभयलिङ्गं सविशेषनि-

विशेषलिङ्गं स्वभावतस्तु नास्त्येव, परं तु स्थानतोऽपि नास्ति। यतः स
'अशब्दम्' ( का० ३ । १५ ) इत्यादिश्रुतिष्वपास्तसमस्तविशे
ब्रह्मोपदिश्यत इति तदर्थः । न च तर्हि निर्विशेषं ब्रह्मेत्यद्वैतिनां प्रवादः
मिति वाच्यम्। सर्वथाऽवाच्यमेव ब्रह्म कथंचिद्वक्तव्यमित्येव तत्र निर्विशे
तादिशब्दोक्तिर्निरूपकाणाम्। परमार्थतस्तु न ब्रह्मणो निर्विशेषशब्दवाच्यत
द्वैतादिशब्दवाच्यत्वं वा। तदुक्तं दक्षस्मृतौ—

'न द्वैतं नापि चाद्वैतमित्येतत्पारमार्थिकम्' ( दक्षस्म० ७।४६ ) इति।

यत्तु 'परस्य ब्रह्मणः पृथिव्यादिस्थानतोऽपि नापुरुषार्थगन्धः संभव
यतः सर्वत्र परं ब्रह्म निर्दोषत्वसगुणत्वैतदुभयलिङ्गमभिधीयते' इति तत्
व्याख्यानं तन्न चेतश्चमत्कृतिं विधत्ते। इदं हि निषेधवाक्यम्। तत्र निषेध
वाध्याहृतं गृह्यत इति कोऽयं न्यायः । तथा च सर्वविशेषरहितमेव ब्रह्म
जगति प्रतीयमाना विशेषास्तु सर्वेऽप्यपारमार्थिका एवेति बोध्यम्।

यत्तु निर्विशेषज्ञानमात्रमेव परमार्थ इत्यद्वैतवादिमतं खण्डयता सवि
ब्रह्मप्रतिपादकम्

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ( गी० १० । ३ )

इत्यादिगीतावाक्यजातमुदाहृतं ( श्रीभा० पृ० ६५ प० ७ ) तत्रोच्यते

निर्विशेषब्रह्मणि गीतातात्पर्यम्

अजत्वं हि न भावरूपो धर्मः कश्चित्। कि
जन्माभावः । एवमनादित्वं मूलकारणाभावः
ततश्चाभावरूपाभ्यामाभ्यां कथमात्मनः सवि
पता सिध्यति। यद्यपि 'मत्स्थानि सर्वभूतानि
( गी० ९ । ४ ) इत्यादिवाक्येषु भूताधारत्वादयो गुणाः प्रतीयन्ते तथापि
प्रकृतिसंबन्धमूलका एव न तु वस्तुभूताः। अत एव—

'अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः' ( गी० १३ । ३१ )

इत्येवं निर्गुणत्वं स्पष्टमेव तत्रोक्तम्। तथा—

'असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च' ( गी० १३ । १४ )

इत्यत्रापि सर्वभृत्त्वं गुणभोक्तृत्वं च तत्र प्रकृतिसंबन्धमूलकमेव।

'विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान्' ( गी० १३ । १९ )

इति गीतावाक्यमेव सगुणवाक्यानां निर्गुणवाक्यानां च विषयं विविनक्ति
न कथमपि गुणानां स्वाभाविकत्वमाशङ्कनीयम्।

यदपि सविशेषब्रह्मप्रतिपादकम्

स सर्वभूतप्रकृतिं विकारान्गुणादिदोषांश्च मुने व्यतीतः ( वि० पु० ६।५।८३ )

इत्यादिवाक्यजातं विष्णुपुराणस्थमुदाहृतं ( श्रीभा० पृ० ६५ प० २१ ) तस्यापि न सविशेषब्रह्मप्रतिपादने तात्पर्यं दृश्यते । भूतातीतत्वादिविशेषाणामौपाधिकत्वात् । यतो विष्णुपुराण एव

निर्विशेषं ब्रह्म पुराणसंमतम्

यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम् ।
अनिर्देश्यमरूपं च पाणिपादाद्यसंयुतम् ( वि० पु० ६।५।६६ )
प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥ ( वि० पु० ६ । ७ । ५३ )

इत्येवमात्मनो निर्विशेषत्वं प्रतिपाद्यते । भूतयोनित्वमप्यात्मनि न वास्तविकम् । जगतो मिथ्यात्वात् । तदुक्तं विष्णुपुराण एव—

ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥ ( वि० पु० १।१४।३९ )
विज्ञानं परमार्थो हि द्वैतमिथ्यात्वदर्शिनः । ( वि० पु० २।१४।३१ )
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ।
इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ॥
( वि० पु० २ । १६ । २४ ) इति ।

आत्मनि भूतयोनित्वस्य वास्तविकत्वाभावादेव 'भूतयोनिमकारणम्' ( वि० पु० ६ । ५ । ६७ ) इत्यत्र भूतयोनिमित्यनन्तरमकारणमित्युक्तिः संगच्छते । एवं च निर्विशेषं ज्ञानमात्ररूपं ब्रह्मेति स्थितम् । तच्च ज्ञानं निर्विषयं निराश्रयं चेति प्रागुक्तमेव ( पृ० ७१ प० ४ ) । सविषयस्य साश्रयस्य ज्ञानस्य सविशेषत्वावश्यंभावात् । सविशेषस्य विज्ञानस्य परमार्थत्वे द्वैतसत्यत्वदर्शिदृष्ट्यापि तादृशज्ञानस्य परमार्थत्वसंभवेन—

विज्ञानं परमार्थो हि द्वैतमिथ्यात्वदर्शिनः ( वि० पु० २।१४।३१ )

इति प्रागुदाहृतविष्णुपुराणवचने 'द्वैतमिथ्यात्वदर्शिनः' इति हेतुगर्भोक्तिरसंगता स्यात् ।

नन्वात्मनि वाग्विषयत्वरूपो विशेषो विष्णुपुराणे प्रतिपाद्यते । यथा ( श्रीभा० पृ० ६६ प० ९ )

शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्तते ।
मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥
संभर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः ।
नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ॥
ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥
वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि ।
स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ॥ ( वि० पु० ६ । ५ । ७-
७५ ) इति ।

अस्यार्थः—भगवच्छब्दस्यावयवार्थं प्रतिपादयन्भकारार्थमाह—संभर्तेति भृधातोर्डप्रत्यये 'भ' शब्दः सिध्यति । तस्य 'संभर्ता भर्ता' इत्यर्थद्वयम् संभरणमुपकरणसंविधानम् । प्रकृत्यादीन्कार्योत्पत्तियोग्यान्यः करोति स संभर्तेत्युच्यते । भर्ता स्वामी । गकारार्थमाह—नेतेति । गमेर्ण्यन्ताड्डप्रत्यये 'ग' शब्दः सिध्यति । नेता स्थितिकर्ता । गमयिता संहारकर्ता । स्रष्टोत्पत्तिकर्ता गम्धातोरुत्पत्तिस्थितिलयार्थकत्वम् । 'भग' इति समुदितस्याक्षरद्वयस्यार्थमाह ऐश्वर्यस्येति । समग्रशब्दः सर्वत्रान्वेति । गुणवत्त्वेन ख्यातिर्यशः । श्रीर्भाग्यसंपत् वैराग्यमनादरः । वकारार्थमाह—वसन्तीति । वसधातोरधिकरणे कर्तरि वा डप्रत्यये 'व' शब्दः सिध्यति । भूतात्मनि भूतानामात्मनि । अखिलात्मन्यखिलशरीरे त्यजाति हेयगुणानित्यर्थे त्यजधातोः क्विप्प्रत्यये यकारादिभागस्य पृषोदरादित्वाल्लोपे व्यञ्जनमात्रं तकाररूपमवशिष्यते । स च भगवच्छब्दान्तिमस्तकारः तथा च परमात्मनो भगवच्छब्दवाच्यत्वात्सविशेषत्वं वस्तुत एव स्वीकर्तव्यमिति । मैवम् । 'शुद्धे महाविभूत्याख्ये' ( वि० पु० ६ । ५ । ७२ ) इत्यस्मादव्यवहितपूर्वश्लोक एव—

अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज ।
पूजायां भगवच्छब्दः क्रियते ह्यौपचारिकः ॥ ( वि० पु० ६।५ ७१ )

इत्यत्र भगवच्छब्दस्यौपचारिकत्वोक्तेः । 'शुद्धे महाविभूत्याख्ये' इत्यादिप्रबन्धे दृष्टिं पातयतस्तव तदव्यवहितपूर्वश्लोक एव कथं दृष्टिमान्द्यमभूदिति महदाश्चर्यम् । एवं च पुराणेष्वन्यत्र वा यदात्मनः सविशेषतया वर्णनं दृश्यते तद्व्यावहारिकदृष्ट्याऽऽत्मनि भासमानान्विशेषानङ्गीकृत्यैव कृतं न तु तथा परमार्थ इत्यभिनिवेष्टव्यम् । 'आदित्यवर्णम्' ( तै० आ० ३ । ११ ) इत्यादि

श्रुतिषु प्रतिपादितं रूपमपि व्यावहारिकमेव । तस्य व्यवहारदृष्ट्यैवोपयोगात् । व्यावहारिकस्यापि तस्य धारणायां शुभाश्रयत्वं संभवत्येव । विषयान्तरपरिहारेणैकत्र ध्येयवस्तुनि चित्तस्य स्थिरीकरणं धारणा । तत्र यद्ध्येयं वस्तु स शुभाश्रय इत्युच्यते । एतेन ‘अस्मिन्प्रकरणे संसारैकभेषजतया योगमभिधाय योगावयवान्प्रत्याहारपर्यन्तांश्चोक्त्वा धारणासिद्ध्यर्थं शुभाश्रयं वक्तुं परस्य ब्रह्मणो विष्णोः’ ( श्रीभा० पृ० ६९ प० २० ) इत्यादिना ‘आदित्यवर्णमित्यादिवेदान्तसिद्धं मूर्तं रूपं शुभाश्रय इत्युक्तम्’ ( श्रीभा० पृ० ७० प० ९ ) इत्यन्तेन ग्रन्थेन सविशेषस्य परमात्मनः पारमार्थिकत्वसाधनमपास्तम् । व्यावहारिकस्यापि शुभाश्रयत्वाङ्गीकारे बाधकाभावात् ।

ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥ ( वि० पु० १।२।६ )

इत्यत्रापि वस्तुतो ज्ञानमात्ररूपं ब्रह्म, तस्यार्थस्वरूपेण दर्शनं भ्रान्तिरित्युक्तम् । अर्थस्वरूपं ज्ञातृस्वरूपं ज्ञेयस्वरूपं च । तथा च साश्रयं सविषयं च यत्सविशेषं ज्ञानस्वरूपं तस्यावास्तविकत्वं सिद्धम् । यत्तु ‘ज्ञानस्वरूपमित्यत्रापि ज्ञानव्यतिरिक्तार्थजातस्य कृत्स्नस्य न मिथ्यात्वं प्रतिपाद्यते । ज्ञानस्वरूपस्यात्मनो देवमनुष्याद्यर्थाकारेणावभासो भ्रान्तिरित्येतावन्मात्रवचनात् । न हि शुक्तिकाया रजततयाऽवभासो भ्रान्तिरित्युक्ते जगति कृत्स्नं रजतजातं मिथ्या भवति’ ( श्रीभा० पृ० ७१ प० १० ) इत्युक्तं तन्न । तदेवार्थस्वरूपेणेत्यत्र पूर्वार्धोपात्तज्ञानप्रतिद्वंद्वितयोपात्तेन सामान्यमुखप्रवृत्तेनार्थशब्देन देवमनुष्यादिविशेषार्थग्रहणासंभवात् । न हि

रज्जुः सर्पस्वरूपेण भ्रान्तिदर्शनतः स्थिता ।

इत्युक्तेः श्वेतसर्पस्य तत्र सत्यत्वमेव, केवलं कृष्णसर्पस्यैव मिथ्यात्वमित्येवं सर्पविशेषस्य सत्यत्वं कोऽपि प्रत्येति । यद्यपि शुक्तिकाया रजततयाऽवभासो भ्रान्तिरित्युक्ते जगति कृत्स्नं रजतजातं मिथ्या न भवति तथापि शुक्तिकायां कस्यापि रजतविशेषस्य सत्यत्वं नास्त्येव । अन्यत्र रजतस्य सत्यत्वं वा मिथ्यात्वं वा प्रमाणान्तरेण किंचिदपि सिध्यतु तत्र नास्य वाक्यस्य तात्पर्यम् । यदि तदेवार्थस्वरूपेणेतिवत् ‘जगति शुक्तिकैव रजततया प्रतीयते’ इत्युच्यते चेत्तत्रापि तात्पर्यं स्यादेव । तथा चात्र जगद्ब्रह्मणोः सामानाधिकरण्येनैक्यप्रतीतेर्ब्रह्मणो ज्ञानस्वरूपस्यार्थाकारता भ्रान्तिरित्युक्ते सत्यर्थजातस्य कृत्स्नस्य मिथ्यात्वमुक्तं भवति ।

---

किं च विष्णुपुराणे प्रारम्भ एव 'जगच्च सः' ( वि० पु० १ । १ ३५ ) इत्यत्र सामानाधिकरण्येनैक्यं प्रतिपाद्य जगतो मिथ्यात्वमेव सूच्यते । तथा हि

यन्मयं च जगद्ब्रह्मन्यतश्चैतच्चराचरम् ( वि० पु० १ । १ । ९ )

इति मैत्रेयकृतं प्रश्नद्वयम् । यन्मयमिति विकारार्थे मयट् प्रत्ययः । स्वार्थे वा 'जगदेतत्कस्य विकारभूतम्' 'जगदेतत्किंरूपम्' इति वाऽयं जगदुपादानकारणप्रश्नः । अवशिष्टनिमित्तकारणविषयकश्च 'कस्माच्चैतच्चराचरं जगदुत्पन्नम्' इति प्रश्नः । तस्य च प्रश्नद्वयस्य

स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः (वि० पु० १ । १ । ३५)

इति पराशरप्रोक्तं प्रतिवचनद्वयम् । असौ परमात्माऽस्य जगतः स्थितिसंयमकर्तेति जगतो निमित्तकारणमुक्तम् । जगच्च स एवेत्युपादानकारणमुक्तम् । परमात्मनो निर्विकारत्वं च श्रुतिशतसिद्धम् 'अविकाराय शुद्धाय' ( वि० पु० १ । २ । १ ) इत्यत्रैवोत्तरश्लोके पराशरेणानूदितं चेति नात्मनः परिणामोपादानता स्वीकर्तुं शक्या किं तु विवर्तोपादानतैवेति भासमानस्य जगतो मिथ्यात्वं सिद्धम् ।

यत्तु 'यतश्चैतच्चराचरमिति निमित्तोपादानयोः पृष्टत्वाद्यन्मयमित्यनेन सृष्टिस्थितिलयकर्मभूतं जगत्किमात्मकमिति पृष्टम् । तस्य चोत्तरं जगच्च स इति । इदं च तादात्म्यमन्तर्यामिरूपेणात्मतया व्याप्तिकृतम् । न तु व्याप्यव्यापकयोर्वस्त्वैक्यकृतम् । यन्मयमिति प्रश्नस्योत्तरत्वाज्जगच्च स इति सामानाधिकरण्यस्य । यन्मयमिति मयण्न विकारार्थः । पृथक्प्रश्नवैयर्थ्यात् । नापि प्राणमयादिवत्स्वार्थिकः । जगच्च स इत्युत्तरानुपपत्तेः । तदा हि विष्णुरेवेत्युत्तरमभविष्यत् । अतः प्राचुर्यार्थे तत्प्रकृतवचने मयट् ( पा० सू० ५ । ४ । २१ ) इति मयट् । कृत्स्नं च जगत्तच्छरीरतया तत्प्रचुरमेव । तस्माद्यन्मयमित्यस्य प्रतिवचनं जगच्च स इति सामानाधिकरण्यं जगद्ब्रह्मणोः शरीरात्मभावनिबन्धनमिति निश्चीयते' ( श्रीभा० पृ० ७२ प० १७ ) इत्युक्तं तच्चिन्त्यम् । यतश्चेति पञ्चमी ह्यध्याहृतां जनिंक्रियामादाय 'जनिकर्तुः प्रकृतिः' ( पा० सू० १ । ४ । ३० ) इत्यपादानसंज्ञायामुपपादनीया । अथ वा प्रथमप्रकाशनरूपां समुद्भवनक्रियामादाय 'भुवः प्रभवः' ( पा० सू० १ । ४ । ३१ ) इत्यपादानसंज्ञायामुपपादनीया । तेन हि प्रथमप्रकाशाधिकरणस्यापादानसंज्ञा विधीयते । अतः उपादानकारणमात्रविषयकः प्रश्नः स्यात् । सूत्रे प्रकृतिग्रहणात् । प्रकृतिशब्दश्चोपादानकारणमात्रवाची । अन्यथा दण्डाद्घटो जायत इत्यापत्तेः । पुत्रात्

मोदो जायत इत्यत्र तु पुत्रमालोक्येति ल्यब्लोपे पञ्चमी बोध्या । प्रकृतिशब्द-स्योपादानकारणमात्रवाचित्वं 'प्रकृतिश्च' (ब्र० सू० १।४।२३) इति ब्रह्मसूत्रेऽपि दृश्यते । त्वयापि तत्र तथैवाङ्गीकृतम् । द्वितीये तु निमित्तकारण-मात्रविषयकः प्रश्नः स्यात् । प्रथमप्रकाराधिकरणस्योपादानत्वाभावात् । तन्त्रा-वृत्त्याश्रयणेनार्थद्वयकरणे तु न किंचित्प्रमाणमुपलभ्यते । तथा च 'यतश्चैतच्च-राचरमिति निमित्तोपादानयोः पृष्टत्वात्' इत्यसंगतम् । 'यन्मयमिति मयण्न विकारार्थः । पृथक्प्रश्नवैयर्थ्यात्' इत्यप्यसंगतम् । पृथक्प्रश्नस्योक्तरीत्योपपत्तेः। 'यन्मयमित्यनेन जगत्किमात्मकमिति पृष्टम्' इत्यप्यसंगतम् । किमात्मकमित्यस्य क आत्मा यस्येत्यर्थः । तत्र चात्मशब्दः शरीरप्रतिसंबन्ध्यर्थकस्त्वदभिमतो न तु स्वरूपार्थकः । मयट्प्रत्ययेन तु शरीरप्रतिसंबन्ध्यर्थो न लभ्यते । प्राचुर्यार्थे मयट्प्रत्ययेऽपि प्राचुर्यमात्मत्वेनैवेति न नियमः । तथा च किमात्मकमित्येव प्रश्नार्थ इति निश्चयाभावेन न तदानुगुण्येनोत्तरार्थनिश्चयः कर्तुं शक्य इति 'यन्मयमित्यस्य प्रतिवचनं जगच्च स इति सामानाधिकरण्यं जगद्ब्रह्मणोः शरी-रात्मभावनिबन्धनमिति निश्चीयते' इत्यसंगतम् । एतेन जगच्च स इत्युत्तरे शरी-रात्मभावमूलकमेव सामानाधिकरण्यमिति सिद्धवद्गृहीत्वा तदनुरोधेन यन्मयमिति मयट्प्रत्ययस्य स्वार्थिकत्वाभावसाधनं परास्तम् । किं च मयट्प्रत्ययस्य स्वार्थि-कत्वेऽपि न जगच्च स इत्युत्तरानुपपत्तिः । प्रश्ने यदुद्देश्यं जगत्तस्योत्तरे पुनरुद्दे-श्यतया निर्देशे बाधकाभावात् । यथा 'सुवर्णं किम्' इति प्रश्ने 'सुवर्णं तेजः' इति । प्रत्युत मयट्प्रत्ययस्य प्राचुर्यार्थकत्व एव जगच्च स इत्युत्तरानुपपत्तिः । शरीरशरीरिभावेऽपि वस्तुतः सामानाधिकरण्यस्याभावात् ।

यत्तु 'निर्विशेषवस्तुप्रतिपादनपरे शास्त्रेऽभ्युपगम्यमाने सर्वाण्येतानि प्रश्न-प्रतिवचनानि न संगच्छन्ते । तद्विवरणरूपं कृत्स्नं च शास्त्रं न संगच्छते । तथा हि सति प्रपञ्चभ्रमस्य किमधिष्ठानमित्येवंरूपस्यैकस्य प्रश्नस्य निर्विशेषज्ञान-मात्रमित्येवंरूपमेकमेवोत्तरं स्यात्' (श्रीभा० पृ० ७३ प० ६) इत्युक्तं तच्तु-च्छम् । संसारचक्रस्यानादिवासनामूलकत्वेन तद्व्यावृत्त्यर्थं 'ब्रह्म सत्यमन्य-न्मिथ्या' इतिबुद्धिस्थैर्यसंपत्तये पर्यायेण रूपान्तरेण पुनः पुनः प्रश्नकरणस्य सार्थक्यात् । यदपि 'जगद्ब्रह्मणोरेकद्रव्यत्वपरे च सामानाधिकरण्ये सत्य-संकल्पत्वादिकल्याणगुणैकतानता निखिलहेयप्रत्यनीकता च बाध्येत । सर्वा-शुभास्पदं च ब्रह्म भवेत्' (श्रीभा० पृ० ७३ प० १०) इत्युक्तं तदपि न । निर्गुणे गुणबाधनस्येष्टत्वात् । विवर्तवादाश्रयणेन सर्वाशुभास्पदत्वापादनस्या-

संभवाच्च । यच्च 'आत्मशरीरभाव एवेदं सामानाधिकरण्यं मुख्यवृत्त्या' (श्रीभा० पृ० ७३ प० १३) इत्युक्तं तदपि न । जगत्पदस्य तदन्तर्यामिलक्षणायास्तवावश्यवक्तव्यत्वेन मुख्यवृत्त्यभावात् ।

यानि तु 'द्वा सुपर्णा' (मु० ३ । १ । १) इत्यादीनि श्रुतिसूत्रपुराणवचनानि जीवब्रह्मभेदे प्रमाणत्वेनोपन्यस्तानि (श्रीभा० पृ०७७ प० १७) तान्युक्तरीत्या व्यावहारिकभेदं गृहीत्वैव प्रवृत्तानीति न तद्विरोध आशङ्कनीयः । एवं च निर्विशेषब्रह्माद्वैतं सिद्धम् ।

सर्वं चेदं जगद्गिरिसमुद्रादिकं प्रातिभासिकमविद्याकार्यत्वान्मिथ्यैव । यास्त्वविद्यावादे (१) आश्रयानुपपत्ति (२) तिरोधानानुपपत्ति (३) स्वरूपानुपपत्ति (४) अनिर्वचनीयत्वानुपपत्ति (५) प्रमाणानुपपत्ति (६) निवर्तकानुपपत्ति (७) निवृत्त्यनुपपत्तिरूपाः सप्तविधा अनुपपत्तयो विशिष्टाद्वैतवादिभिः प्रदर्शिताः (श्रीभा० पृ० ८३ प० ८) ता अविचारितरमणीया एव न तु क्षोदक्षमाः । तथा हि—

ब्रह्मशक्तेरविद्याया आश्रयाद्युपपद्यते ॥
तिरोधानं स्वरूपं च तथाऽनिर्वचनीयता ॥

अद्वैतिनां मतेऽविद्याया जीव एवाश्रयः । जीवस्यैवाहमज्ञ इत्येवं प्रत्ययात् । यद्यप्यविद्यारूपा शक्तिः परमात्मन इति सोऽपि तस्या आश्रयस्तथापि तत्र न तस्याः कार्यकारित्वम् । यत्तु जीवावस्थाया अविद्यापरिकल्पितत्वेनाविद्योत्तरकालभवत्वान्न तस्या जीव आश्रयः संभवतीत्युक्तं (श्रीभा० पृ० ८३ प० ९) तन्न । न ह्यत्राविद्याजीवत्वयोरन्योन्याश्रयदोषोऽस्ति । यथा हि तव मते परमात्मशरीरभूतस्य जीवस्य कर्मणैव संकुचितस्वरूपस्य सतः कर्माश्रयत्वम् । न ह्यसंकुचितस्वरूपस्य मुक्तस्येव कर्माश्रयत्वं संभवति । बीजाङ्कुरन्यायेनानादित्वान्न दोषश्चेत्तुल्यं ममापि । तव मते जीवः संकुचितस्वरूपः सन्कर्म करोत्यसंकुचितस्वरूपो वा । नाद्यः । स्वरूपसंकोचस्य कर्मजन्यत्वेन कर्मकरणात्प्राक्तत्संकोचासंभवात् । न द्वितीयः । स्वस्वरूपसंकोचकारके कर्मणि प्रवृत्तेरसंभवात् । न हि कश्चिज्ज्ञानी शक्तः सन्नात्मनो बन्धनागारं कृत्वा तदनुप्रविशति । यच्च 'नापि ब्रह्माश्रित्य । तस्य स्वयंप्रकाशज्ञानरूपत्वेनाविद्याविरोधित्वात्' (श्रीभा० पृ० ८३ प० १०) इत्याद्युक्तं तत्त्वविद्याया ब्रह्म...

धितत्वस्यास्माभिरनभ्युपगमादेव निरस्तम् । न हि जीवदशापन्नत्वेनानवभातं ब्रह्माविद्याया आश्रय इत्यस्माभिरङ्गीक्रियते ।

यच्च तिरोधानानुपपत्तिं समर्थयितुं 'प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धो, विद्यमानस्य विनाशो वा' ( श्रीभा० पृ० ८५ प० ५ ) इत्यादिग्रन्थेन तिरोधानशब्दार्थं विकल्प्य दूषणमुक्तं तत्तुच्छम् । वास्तविकस्य तिरोधानशब्दार्थस्यानाकलनात् । प्रकाशतिरोधानं नाम सत एव प्रकाशस्यानवभासो न तु प्रकाशनाशः । न हि मेघैः सूर्यप्रकाशे तिरोहिते प्रकाशो नष्ट इति कोऽपि प्रत्येति ।

अविद्यया तिरोधानोपपत्तिः

यच्च स्वरूपानुपपत्तिसमर्थने 'निर्विषया निराश्रया स्वप्रकाशेयमनुभूतिः स्वाश्रयदोषवशादनन्ताश्रयमनन्तविषयमात्मानमनुभवतीत्यत्र किमयं स्वाश्रयदोषः परमार्थभूत उतापरमार्थभूत इति विवेचनीयम्' ( श्रीभा० पृ० ८५ प० ८ ) इत्याद्युक्तं तन्न मनोरमम् । यतो मायावेदान्तिनामस्माकं मते परमात्मा ज्ञानस्वरूपः ।

अविद्यास्वरूपोपपत्तिः

ज्ञानं नैवात्मनो धर्मो न गुणो वा कथंचन ।
ज्ञानस्वरूप एवात्मा नित्यः सर्वगतः शिवः ॥ ( योग-वृ० पृ० २९२ )

इत्युक्तेः । भावरूपाज्ञानं च तच्छक्तिः । न च द्वैतापत्तिः शङ्क्या । शक्तेः शक्तिमदपेक्षया पृथगस्तित्वाभावात् । शक्तेः प्रातिभासिकत्वेन वस्तुतः सत्यत्वाभावाच्च । सैव जगदुपादानकारणम् । इयमेव परिणामविशेषेण प्रकृतिमायातमआदिशब्दैर्व्यवह्रियते । तदुक्तं वशिष्ठस्मृतौ—

तामाहुः प्रकृतिं केचिन्मायामेके परे त्वणून्' ( योगवृ० पृ० २९२ ) इति ।

अस्या एव प्रधानमहदहंकारपञ्चमहाभूतरूपेण तत्तद्व्यष्टिरूपेण च परिणामः । सत्त्वरजस्तमोरूपाणां त्रयाणां गुणानां साम्यावस्था प्रधानम् । बुद्धिरेव च महत्तत्त्वम् । बुद्धेः स्वभावतः स्वच्छतया तत्र ज्ञानस्वरूपं शुद्धचैतन्यं प्रतिबिम्बते । समष्टिबुद्धौ प्रतिबिम्बितं चैतन्यमीश्वरः । व्यष्टिबुद्धौ प्रतिबिम्बितं चैतन्यं जीवः । 'अज्ञाने प्रतिबिम्बितं चैतन्यमीश्वरः' इति केचित् । बिम्बभूतं ज्ञानं यद्यपि निर्विषयं निराश्रयं तथापि प्रतिबिम्बभूतं जीवरूपमीश्वररूपं च ज्ञानं स्वाश्रयभूतभावरूपाज्ञानवशात्सविषयं साश्रयं च भासते । अज्ञानस्य स्वभावत एव किंचिद्विषयकत्वात्किंचिन्निष्ठत्वाच्च । यथाऽऽदर्शमलेन तत्प्रतिबि-

म्बितं मुखं मलीमसं भासते तद्वत् । तथा च प्रतिविम्वभूतं यज्जीवेश्वररूपं ज्ञानं तदेव स्वाधिष्ठानभूताज्ञानरूपदोषवशादनन्ताश्रयमनन्तविषयं चात्मानमनुभवति न तु विम्वभूतम् । भावरूपाज्ञानस्य च स्वपरिणामे विम्वग्रहणे च न स्वातन्त्र्यम् । नापि शुद्धं ब्रह्म तस्य प्रेरकम् । किं तु स्वाश्रयभूतं शुद्धं ब्रह्मोपजीव्य परिणमते प्रतिविम्वं च गृह्णाति । यथाऽऽदर्शो न मुखप्रेरणया प्रतिविम्वं गृह्णाति किं तु स्वभावतः । नैतावता तस्य स्वातन्त्र्यम् । मुखसांनिध्यापेक्षणात् । ज्ञानप्रतिविम्वभूतश्चायं जीवो येन भावरूपाज्ञानरूपदोषेणानन्ताश्रयमनन्तविषयमात्मानमनुभवति स दोषोऽपारमार्थिक एव । नैतावता तस्यान्यापेक्षा । यथा दीपो घटादिप्रकाशकोऽपि स्वभावत एव स्वमपि प्रकाशयति नान्यं दीपमपेक्षते तथाऽयं भावरूपाज्ञानरूपो दोषः स्वभावत एव ब्रह्मोपजीव्य जगत्कल्पकः स्वकल्पकश्चेति । अतो नानवस्था । एतेन 'मूलदोषान्तरापेक्षयाऽनवस्था स्यात्' (श्रीभा० पृ० ८५ प० १५) इति प्रत्युक्तम् ।

यदपि 'अहमज्ञ इत्यत्र ज्ञानप्रागभाव एवानुभूयते' (श्रीभा० पृ० ८९ प० ५) इत्युक्तं तन्न । प्रागभावस्य नियमेन कालपरिच्छिन्नतयैव प्रतीतेः । अथाहमज्ञ इति प्रतीतिरत्यन्ताभावविषयिण्यस्तु ' सामयिकाभावस्यातिरिक्तत्वे तद्विषयिणी वास्तु, न तु भावरूपाज्ञानविषयेति चेन्मैवम् । न ह्यस्माभिः कोऽप्यभावः पारमार्थिकसत्यत्वेनाङ्गी क्रियते । किं तु व्यावहारिकसत्यतया ।

भावरूपाज्ञानसाधनम्

व्यावहारिकसत्यता च काल्पनिकीति यन्मूला सा कल्पना तद्भावरूपाज्ञानमेवेति घट्टकुटीप्रभातन्याय आपतति । व्यावहारिकस्य ज्ञानाभावस्य हि मूलं भावरूपाज्ञानमेव । किं च भवतां रामानुजानां नयेऽहमज्ञ इति प्रतीतिर्या बद्धजीवस्य जायते तत्र निषिध्यमानं ज्ञाधात्वर्थभूतज्ञानं किं सामान्यज्ञानं ज्ञानविशेषो वा । नाद्यः । ज्ञानविशेषस्यानिषेधे ज्ञानसामान्यान्तर्गतायास्तादृशप्रतीतेरस्तित्वेन ज्ञानसामान्यनिषेधासंभवात् । सामान्यमन्तरेण विशेषस्थितेरसंभवात् । द्वितीये तज्ज्ञानं किं परमात्मस्वरूपभूतमथ वा परमात्मगुणभूतमाहोस्वित्परमात्मविषयकम् । न प्रथमद्वितीयौ । तथाहि सति मुक्तजीवस्यापि तथा प्रतीतिः स्यात् । सा तु न त्वयापीष्यते । तृतीये तु परमात्मविषयकज्ञाने नञ्र्थोऽत्यमारोपितत्वं कथंचित्क्लेशेनोपपादनीयं स्यात् । यतो यस्य याथात्म्येन परमात्मविषयकं ज्ञानं जातं स मुक्तो जीवो यस्य वा तादृशं ज्ञानमयाथात्म्येन जातमपि याथात्म्येन जातमित्यभिमानः स बद्धो जीवश्च नाहमज्ञ इति प्रत्येति । किं तु

यस्य सुतरां तादृशज्ञानं नास्ति स एव तथा प्रत्येति । तत्र तादृशज्ञानस्यैवाभाव आरोपितत्वं कथमुपपादयितुं शक्येत । घटादिविषयकज्ञाने परमात्मविषयकज्ञानत्वस्यारोप इति तु तयोरत्यन्तवैलक्षण्येन न युक्तिमत् । अस्माकं तु नये परमात्मविषयकज्ञानस्य परमात्मगुणभूतज्ञानस्य चाभावात्परमात्मस्वरूपभूतं ज्ञानमेव ज्ञाधात्वर्थः । तच्च ज्ञानं वस्तुतो निराश्रयं निर्विषयं चेति साश्रयं सविषयं च बद्धजीवस्य जायमानं ज्ञानमारोपितमेवेति सुवचम् । ज्ञाने साश्रयत्वस्य सविषयत्वस्य चाज्ञानकल्पितत्वात् । उपाधिभूतजलगतचाञ्चल्यादेः सूर्यप्रतिविम्ब इवाज्ञानगतसाश्रयत्वादेः प्रतिविम्बभूतज्ञान आरोपो युक्तिसहः । आरोपितत्वं नञ्द्योत्यमिति वैयाकरणनिकाये प्रसिद्धम् । किं च भावरूपाज्ञानानङ्गीकारे 'अहमज्ञो न किंचिज्जानामि' इति प्रयोगेऽज्ञो न जानामीत्यनयोर्द्वयोरपि ज्ञानाभावार्थकत्वेन पौनरुक्त्यापत्तिरिति ।

यच्चानिर्वचनीयत्वानुपपत्तिसमर्थने 'सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम्' (श्रीभा० पृ० ८६ प० ६) इत्युक्तं तत्रोच्यते—

अविद्याया अनिर्वचनीयत्वोपपत्तिः

इदं शुक्लमिदं पीतमित्येवं सर्वं रूपं प्रकाशव्यवस्थाप्यम् । अन्धकारस्य कृष्णं रूपमपि तथैव । यद्यप्यन्धकाररूपनिर्णये साक्षात्प्रकाशापेक्षा नास्ति तथापि प्रकाशाभावसापेक्षत्वेनाभावप्रतियोगितया प्रकाशापेक्षाऽस्त्येव । अन्यत्रास्तित्वे सति यत्र यस्याविद्यमानत्वं तत्र तस्याभावप्रतियोगित्वम् । जगति सर्वथा प्रकाशास्तित्वाभाव इतरपदार्थानामिवान्धकारस्यापि रूपं जन्मान्धेनेव न निर्णीयेत । तथा च यथान्धकाररूपं प्रकाशाविषयमपि प्रकाशव्यवस्थाप्यं भवति तथा सदसद्रूपद्विविधप्रतीत्यविषयस्यापि भावरूपाज्ञानस्य स्वरूपमनिर्वचनीयमित्येवं रूपेण प्रतीतिव्यवस्थाप्यं भवत्येव ।

यदपि विम्बभूतस्य शुद्धब्रह्मणोऽज्ञानानुभवं वस्तुतो मायावाद्यनभिमतमपि मायावाद्यभिमतत्वेन प्रतिपाद्य तन्निरसने महत्तर्कजालं 'नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणोऽज्ञानानुभवश्च न संभवति' (श्रीभा० पृ० ८९ प० ७) इत्यादिग्रन्थेनोक्तं तत्र न किंचित्प्रत्युच्यते । मायावादिभिस्तथाऽनभ्युपगमात् ।

यत्तु 'अपि चापरमार्थदोषमूलभ्रमवादिना निरधिष्ठानभ्रमासंभवो दुरुपपादः । भ्रमहेतुभूतदोषदोषाश्रयवदधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः । ततश्च सर्वशून्यत्वमेव स्यात्' (श्रीभा० पृ० ९१ प० १५) इत्युक्तं तदपरमार्थतुच्छ-

स्वरूपविवेकापलापमूलकम्। तथा हि—यद्
अधिष्ठानस्य सत्यत्वम् सत्प्रतिभासते तदपरमार्थम्। यच्च कदापि प्र
भासते तत्तुच्छमिति हि तयोः स्वरूपविवेकः।
तुच्छत्वं सर्वशून्यत्वे हेतुः संभवेन्नापारमार्थ्यम्। त्वया त्वपारमार्थ्यं सर्वशून्य
हेतुः 'ततश्च' इति शब्देन निर्दिष्ट इति कोऽयं चक्षुपि धूलिप्रक्षेपः। अथ स
शून्यत्वापादनं मा भून्नाम। परं त्वधिष्ठानापारमार्थ्येऽपि भ्रमसंभवेन ब्रह्मणः पार
र्थिकसत्यत्वं मायावाद्यभिमतं न सिध्यतीति चेन्नैवम्। अयं हि भावरूपाज्ञान
वाच्यो दोषो ब्रह्मोपजीव्य तच्छक्तिरूपेण स्वयं स्वेनैव कल्पितोऽनादिः।
वोपजीव्य स्वस्मिंस्तत्प्रतिबिम्बभूतः स्वाश्रयो जीवः स्वज्ञातृत्वेन कल्पितः।
वोपजीव्यज्ञानविषयत्वं तत्रारोप्य स्वविषयत्वेन तदेव कल्पितम्। तदेव चोपजी
तदेवाधिष्ठाय तत्संबन्धेन स्वयमाकाशादिप्रपञ्चरूपेण परिणमते। यदि ब्र
तुच्छमपारमार्थिकं वा स्यात्तर्हि किमुपजीव्यास्य दोषस्य प्रवृत्तिः स्यात्। अ
वृत्तौ तु न कदाचिदपि किंचिदपि क्वापि दृश्येत। यतश्च दृश्यते जगदतो ब्रह्म
तुच्छमपरमार्थं चेत्यवश्यं स्वीकार्यम्।

इदं च दोषभूतमनाद्यज्ञानमनुमानेनापि सिध्यति। विवादाध्यासितं प्रमा
ज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वक
अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत्। अत्र ज्ञा
मित्युक्ते ब्रह्मस्वरूपज्ञानस्य वस्त्वन्तरपूर्वकत्वाभावात्तद्व्यावृत्त्यर्थं :प्रमाणज्ञा
मित्येवं पक्षनिर्देशः कृतः। स्वप्रागभावेत्यादिः साध्यनिर्देशः। स्वप्रागभाव
तिरिक्तं स्वविषयावरणभूतं स्वनिवर्त्यं स्वदेशगतं च यद्वस्त्वन्तरं तत्पूर्वकमित्यर्थः

यच्चात्र भावरूपाज्ञानसाधकानुमाने 'अज्ञानेऽप्यनभिमताज्ञानान्तरसाधन
विरुद्धत्वाद्धेतोः' (श्रीभा० पृ० ९२ प० २) इत्युक्तं तस्य यद्ययमभिप्रायः
"अप्रकाशितार्थप्रकाशकत्वरूपं यं हेतुं पुरस्कृत्य येनानुमानप्रमाणेन भावरूपा
अविद्यायामनुमानम् ज्ञानं मायावादिभिः साधितं स एव हेतुस्त
शानुमानरूपप्रमाणज्ञानस्य तद्विषयीभूतभावरूपा
ज्ञानावरकाज्ञानान्तरपूर्वकत्वं साधयेत्। भाव
रूपाज्ञानस्य पूर्वमप्रकाशितस्य तेनैवानुमानेन प्रकाशनात्। तादृशमज्ञानान्त
मायावादिनामनभिमतमेव। भावरूपाज्ञानस्यैवान्येनावरणे हि स्वयंसिद्ध ए
मोक्ष इति संसारो न स्यात्। अतो हेतुर्विरुद्धः" इति, तर्हीत्थं विचार्यते–ना
हेतुर्विरुद्धः। साध्याभावव्याप्तो हि हेतुर्विरुद्धः। 'मायावादिमतविरुद्ध' इत्यर्थ

क्लिष्टः। किं चैतदनुमानस्याप्रकाशितार्थप्रकाशकत्वं नास्ति। अहमज्ञ इति प्रत्यक्षेण भावरूपाज्ञानप्रकाशनात्। किंच भावरूपाज्ञानसाधकप्रमाणज्ञानस्य भावरूपाज्ञानावरकाज्ञानान्तरपूर्वकत्वे साधितेऽपि न काचित्क्षतिः। अज्ञानान्तरेण भावरूपाज्ञानमाव्रियेत। न तु विनश्यति। तद्विनाशाभावे च कथं स्वयंसिद्धो मोक्षः स्यात्। न च भावरूपाज्ञानस्यावरणे तस्याज्ञातत्वात्कथं प्रपञ्चरूपकार्यकारित्वम्। अज्ञातस्यापरमार्थस्य कार्यकारित्वाभावादिति वाच्यम्। अज्ञातस्याप्यपरमार्थस्य वन्ह्यादेर्दाहादि कार्यकारित्वदर्शनात्। तत्कार्यमप्यपरमार्थं स्यादिति त्वन्यत्। किंचाज्ञात एव प्रातिभासिकः सर्पोऽप्रातिभासिकमपि ज्ञानं जनयत्येव। किंच व्यावहारिकस्यापि कारणस्य न क्वचिदपि ज्ञातस्यैव कारणत्वम्। यथाऽज्ञातोऽपि वह्निः सन्नेव दाहं जनयति। यत्र च व्याघ्रादिर्ज्ञात एव भयं जनयाति तत्र न व्याघ्रस्य भयकारणत्वं। किं तु व्याघ्रज्ञानस्य। व्याघ्रस्तु ज्ञानद्वारा भयजनकत्वाद्भयहेतुत्वेन लोक उपचर्यते। अथायमभिप्रायः 'यथाऽप्रकाशितार्थप्रकाशकत्वेन हेतुना प्रमाणज्ञानस्य वस्त्वन्तरपूर्वकत्वं साध्यते तथा तादृशवस्त्वन्तरस्याज्ञानस्याप्यप्रकाशितप्रपञ्चरूपार्थप्रकाशकत्वेन वस्त्वन्तरपूर्वकत्वापत्तावज्ञानान्तरं सिध्येत्। तच्च मायावाद्यनभिमतमेव। अज्ञानान्तरेण प्रपञ्चस्यैवावरणे मोक्षस्य स्वयंसिद्धत्वात्' इति, तर्ह्यपि पूर्ववद्धेतोर्विरुद्धत्वं नास्त्येव। किंच भावरूपाज्ञानस्य प्रपञ्चोपादानकारणत्वं न तु प्रपञ्चप्रकाशकत्वम्। न हि मृत्तिका घटप्रकाशिका। 'सर्वत्र हि ज्ञानस्यैव प्रकाशकत्वम्' (श्रीभा० पृ० ९२ प० ६) इति त्वयैवोच्यते। यद्यपि ज्ञानमेवार्थपरिच्छेदकारित्वात्प्रकाशकं तथापि चाक्षुपज्ञानसाधनीभूता प्रभापि प्रकाशिकेत्युच्यते। तस्या अपि ज्ञानस्येव स्वविरोधिनिरासकत्वात्। अप्रकाशकारणनिरासकं हि प्रकाशकमुच्यते। एतदभिप्रायेणैव प्रदीपप्रभा निदर्शिता। इन्द्रियाणि तु विपयसंयोगरूपव्यापारद्वारा ज्ञानजनकानि न तु किंचिद्वस्तुनिरासद्वारेति तेपामप्रकाशितार्थप्रकाशकत्वाभावेन वस्त्वन्तरपूर्वकत्वाभावेऽपि न क्षतिः। 'यद्युपकारकाणामप्यप्रकाशितार्थप्रकाशकत्वमङ्गीकृतं तर्हीन्द्रियाणामुपकारकतमत्वेनाप्रकाशितार्थप्रकाशकत्वमङ्गीकरणीयम्। तथा सति तेपां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावाद्धेतोरनैकान्त्यम्' (श्रीभा० पृ० ९२ प० १६) इत्यादि त्वसारमेव। यतो मायावादिभिर्न सर्वेपामुपकारकाणां प्रकाशकत्वमङ्गीकृतं किंतु प्रकाशविरोधिनिरासकानामेवेति।

यच्च प्रत्यनुमाननवकप्रदर्शनं (श्रीभा० ९३ पृ० १) तदसंगतम्। इत्थं हि तैः प्रतिप्रयोगाः प्रदर्शिताः— १ अज्ञानं न ज्ञानमात्रब्रह्माश्रयम्, अज्ञान-

त्वात्, शुक्तिकाद्यज्ञानवत्, ज्ञात्राश्रयं हि तत् । २ अज्ञानं न ज्ञानावरणम्, अज्ञानत्वात्, शुक्तिकाद्यज्ञानवत्, विषयावरणं हि तत् । ३ अज्ञानं न ज्ञाननिवर्त्यम्, ज्ञानविषयानावरणत्वात्, यज्ज्ञाननिवर्त्यमज्ञानं तज्ज्ञानविषयावरणं यथा शुक्तिकाद्यज्ञानम् । ४ ब्रह्म नाज्ञानास्पदम्, ज्ञातृत्वविरहात्, घटादिवत् । ५ ब्रह्म नाज्ञानावरणम्, ज्ञानाविषयत्वात्, यदज्ञानावरणं तज्ज्ञानविषयभूतं यथा शुक्तिकादि । ६ ब्रह्म न ज्ञाननिवर्त्याज्ञानम्, ज्ञानाविषयत्वात्, यज्ज्ञाननिवर्त्याज्ञानं तज्ज्ञानविषयभूतं यथा शुक्तिकादि । ७ प्रमाणज्ञानं स्वप्रागभावातिरिक्ताज्ञानपूर्वकं न भवति, प्रमाणज्ञानत्वात्, भवदभिमताज्ञानसाधनप्रमाणज्ञानवत् । ८ ज्ञानं न वस्तुनो विनाशकम्, शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात्, यद्वस्तुनो विनाशकं तच्छक्तिविशेषोपबृंहितं ज्ञानमज्ञानं च दृष्टं यथेश्वरयोगिप्रभृतिज्ञानं यथा च मुद्गरादि । ९ भावरूपमज्ञानं न ज्ञानविनाश्यम्, भावरूपत्वात्, घटादिवदिति ।

प्रत्यनुमाननिरासः

ये चेमे प्रतिप्रयोगा उक्तास्तेषु प्रथमं चतुर्थं चानुमानं नास्माकं प्रतिकूलम्, तत्रत्यसाध्यस्य ज्ञानमात्रब्रह्मणोऽज्ञानाश्रयत्वाभावस्यास्माकमपीष्टत्वात् । अज्ञानाश्रयस्तु प्रतिबिम्बभूतो ज्ञातृत्वेन प्रकल्पितो जीव इति प्रागेवोक्तम् (१४० । ९) । तथा शुद्धं ब्रह्म यद्यपि नाज्ञानेनाव्रियते तथापि तदेव ब्रह्माज्ञानं जीव्य तच्छक्तिरूपमज्ञानं शक्तिरूपत्वात्तस्मिन्नन्तः प्रविश्यैव तस्मिन्ब्रह्मणि ज्ञानविषयत्वमारोप्य स्वविषयत्वं प्रकल्प्य पश्चात्तदाव्रियते । यथा जलविनाश्योऽप्यग्निः सूक्ष्मरूपेण स्वविरोधिन्यपि जलेऽन्तः प्रविश्य स्वविषयत्वं प्रकल्प्य तस्मिन्स्वगुणमुष्णत्वमारोप्य तत्रत्यं शैत्यमावृणोति तद्वत् । एतेन द्वितीयं पञ्चमं चानुमानं निरस्तम् । तृतीये षष्ठे चानुमाने हेतुरसिद्धः । ब्रह्मणि ज्ञानविषयत्वमारोप्यैवाज्ञानेन तदावरणात् । सप्तमे चानुमाने दृष्टान्त एव न संभवति । 'भावरूपाज्ञानसाधकप्रमाणज्ञानस्य भावरूपाज्ञानावरकाज्ञानान्तरपूर्वकत्वे साधितेऽपि न काचित्क्षतिः' इति प्रागेवोक्तत्वात् (१४०।२६) । अष्टमे चानुमाने सिद्धसाधनम् । न ह्यस्माभिर्ब्रह्मज्ञानं वस्तुनो विनाशकं स्वी क्रियते । आकाशादिप्रपञ्चस्यापि परिकल्पितत्वेनास्माकं नयेऽवस्तुत्वात् । किं च हेतुरप्यसिद्धः । ब्रह्मज्ञाने शक्तिविशेषोपबृंहणविरहस्य निश्चेतुमशक्यत्वात् । नवमे चानुमाने सोपाधिको हेतुः, पारमार्थिकत्वस्योपाधित्वात् । यज्ज्ञानविनाश्यं न भवति तत्पारमार्थिकमस्त्विति साध्यव्यापकता । यद्भावरूपं तत्पारमार्थिकमेवेति न नियमः । भावरूपाज्ञानतन्मूलक आकाशादिप्रपञ्चे च व्यभिचारात् । अतः साधनाव्यापकता । किं

सर्पज्ञानजन्यस्य भावरूपस्यापि भयस्येयं रज्जुरिति ज्ञानेन विनाशो दृश्यत इत्यनैकान्तिकोऽयं हेतुः। अथ सर्पज्ञानस्य भयकारणस्य नाशाद्भयनाशो न तु रज्जुज्ञानादिति चेत्तथाप्यनैकान्तिक एव। सर्पज्ञानस्य भावरूपस्य रज्जुज्ञानेन विनाशदर्शनात्। ननु न सर्पज्ञानस्य रज्जुज्ञानेन नाशः किं तु क्षणिकत्वात्स्वयमेवेति चेन्न। ज्ञानं क्षणिकमिति किं तव परमेश्वरेण संदिष्टम्। किं तु विषयादिकारणसंनिधानं यावदवतिष्ठते ज्ञानम्। तथैव प्रतीतेः। न च तथापि सर्पनाशात्सर्पज्ञाननाशो न तु रज्जुज्ञानादिति वाच्यम्। तथापि भावरूपस्य सर्पस्य रज्जुज्ञानेन विनाशादनैकान्तिकत्वं तदवस्थमेव।

यदुक्तम् 'अक्षणिकत्वे च तेषां भयादीनां भयादिहेतुभूतज्ञानसंततावविशेषेण सर्वेषां ज्ञानानां भयाद्युत्पत्तिहेतुत्वेनानेकभयोपलब्धिप्रसङ्गाच्च' (श्रीभा० पृ० ९३ प० २१) इति तन्मन्दम्। यो हि भयस्याक्षणिकतां स्वी करोति स ज्ञानस्याप्यक्षणिकतामेव स्वी कुर्यादिति ज्ञानसंतत्यभावेनानेकभयोपलब्धिप्रसङ्गस्य दूरनिरस्तत्वात्।

यच्च 'स्वप्रागभावव्यतिरिक्तवस्त्वन्तरपूर्वकमिति व्यर्थविशेषणोपादानेन प्रयोगकुशलता चाविष्कृता' (श्रीभा० पृ० ९४ प० २) इत्यनेन ग्रन्थेन परिहासः कृतः स त्वस्थाने। यद्यपि वस्तुपूर्वकमित्येवोक्तौ भाववाचिवस्तुशब्देनैव सिद्धौ 'स्वप्रागभावव्यतिरिक्त' 'अन्तर' एतच्छब्दवैयर्थ्यं तथापि श्रोतृबोधसौलभ्याय तथोक्तम्। वैशेषिकैरभावस्यापि सप्तपदार्थमध्ये गणनेन तस्यापि वस्तुत्वभ्रमसंभवात्। किं चैवं परपरिहासं जनयता प्रतिप्रयोगनवकप्रदर्शनवेलायां प्रथमेनानुमानेन सिद्धौ चतुर्थानुमानवैयर्थ्यं कथं नालोचितम्। 'अज्ञानं न ब्रह्माश्रयं' 'ब्रह्म नाज्ञानास्पदम्' इत्यत्र शब्दरचनावैलक्षण्यमेव न साध्यभेदः कश्चित्। एवं द्वितीयेन सिद्धौ पञ्चमस्य, तृतीयेन सिद्धौ षष्ठस्य, अष्टमेन सिद्धौ नवमस्य, चानुमानस्य वैयर्थ्यं सुधीभिरूह्यम्।

यदपि 'मिथ्याभूतार्थस्य मिथ्यैवोपादनं भवितुमर्हतीत्येतदपि न विलक्षणत्वात् (ब्र० सू० २।१।४) इत्येतदधिकरणन्यायेन परिहियते' (श्रीभा० पृ० ९४ प० ६) इत्युक्तं तत्रोच्यते—

मिथ्यार्थप्रकृतिर्मिथ्या जगद्धि प्रातिभासिकम्॥
भ्रमस्थले तु सर्वत्र सत्ख्यातेर्नैव संभवः॥ २०॥

'मिथ्याभूतस्य जगत उपादानं मिथ्यैव भवितुं योग्यम्'। तदेव भावरूपाज्ञानम्' इति हि मायावादिनामाशयः। यदि

जगदज्ञानमूलकम्

'कार्यकारणयोः सर्वथा वैलक्षण्येनैव भवितव्यम्' इति तदधिकरणतात्पर्यं स्यात्तर्हि मिथ्याभूतस्य जगतस्तत्सलक्षणं मिथ्याभूतं भावरूपाज्ञानं न कारणं संभवतीत्यधिकरणविरोधः स्यात्। किंतु किंचिद्वैलक्षण्येऽपि न कार्यकारणभावहानिरित्येव तदधिकरणतात्पर्यम्। तथा च कार्यकारणयोः सालक्षण्यं यावच्छक्यमुपपादनीयमेव। मिथ्याभूतार्थस्य मिथ्यैवोपादानं भवितुमर्हतीत्यर्हतिशब्दं प्रयुञ्जानैर्मायावादिभिरयमाशयः प्रकटीकृत एव। त्वयापि हि सूक्ष्मचिदचित्प्रकारकं ब्रह्म कारणं स्थूलचिदचित्प्रकारकं ब्रह्मैव कार्यमिति वदता कार्यकारणयोः सालक्षण्यं संपादितमेव।

यदपि 'प्रतीयमानमेव हि प्रतीतिभ्रान्तिबाधविषयः' (श्रीभा० पृ० ९४ प० १०) इत्युक्तं तन्मायावादिनामपि संमतमेव। न तदनिर्वचनीयजगदङ्गीकारे बाधकं भवति। अथ प्रतीयमानमेवेत्यस्य 'अन्यत्र सत्यत्वेन' इति शेषं पूरयित्वाऽन्यत्र सत्यत्वेन प्रतीयमानमेवान्यत्र प्रतीत्यादिविषयो भवतीत्यर्थः क्रियते तर्हि यद्यपि मायावादिनां मतेऽन्यत्र जगतः सत्यत्वेन प्रतीयमानत्वाभावादनिर्वचनीयत्वेनाभिमतस्य जगतः प्रतीत्यादिविषयत्वं न संभवति तथाप्येवमुच्यते— शुक्त्याद्यज्ञानं हि रजतसंस्कारसहकृतमनिर्वचनीयरजतं जनयति। तादृशसंस्कारोत्पत्तावन्यत्र सत्यत्वेन प्रतीतेरपेक्षा दृश्यते। शुक्त्याद्यज्ञानविषये भवतु नामैवम्। मूलाज्ञानस्य तु ब्रह्मशक्तिरूपत्वेन ब्रह्मोपजीव्य प्रवृत्तत्वेन नान्यस्य कस्याप्यपेक्षा। किंचानादौ संसारे जीवानामनादित्वेन संस्कारोऽपि विद्यत एव।

यदपि 'शुक्तिरजतादिभ्रान्तिस्थलेऽनिर्वचनीयरजतकल्पनेऽप्यन्यस्यान्यथावभासस्यावर्जनीयत्वात्' इत्युक्तम् (श्रीभा० पृ० ९४ प० १६) तत्तुच्छम्। शुक्तिरजते हि रजतं प्रतीयते। ततः पश्चान्नेदं रजतमिति बाधोऽनुभूयते। बाधश्चायम् 'इदानीमिदं न रजतम्' इत्येवं किंचित्कालावच्छिन्नो नानुभूयते किं तु प्रागपीदं रजतं नासीदिति सामान्यत एव। तथा च बाधः प्राग्विद्यत एव। केवलं पश्चादनुभूयते। एवं च तत्र रजतस्य पारमार्थिकं व्यावहारिकं वा सत्त्वं क्षणमपि नास्तीति सत्त्वेनानिर्वचनीयत्वम्। एवं शशशृङ्गवदसच्चेत्क्षणमपि न प्रतीयेत। प्रतीयते च। अतोऽसत्त्वेनानिर्वचनीयत्वम्

अनिर्वचनीयख्यातिः

ईदृशस्य च रजतादेः प्रातिभासिकं क्षणं सत्त्वमगत्या कल्पनीयम्। अन्यथाऽसता रजतरूपेण शुक्तिः कथं भासेत। अन्यस्यान्यथावभासायोगात्। इदं च रजतं प्रातिभासिकेन रूपेण निर्वचनीयमेव। यद्यपीदं रजतं प्रतीतिवेलायां प्रातिभासिकमित्येवं न भासते तथापि न क्षतिः। विद्यमानेषु प्रकारेषु मध्ये केषांचिदभानं सर्वेषामपि ख्यातिवादिनामिष्टमेव। शुक्तिरजतप्रतीतौ शुक्त्यंशाभानस्य सर्वैः स्वीकृतत्वात्। न ह्ययमन्यस्यान्यथावभासः। अविद्यमानेन रूपेणावभासो हि सः। न तु विद्यमानस्यानवभासः। एतेन 'कल्प्यमानं हीदमनिर्वचनीयम्। न च तदानीमनिर्वचनीयमिति प्रतीयते। अपि तु परमार्थरजतमित्येव' (श्रीभा० पृ० ९४ प० १८) इति परास्तम्। अनिर्वचनीयत्वेनाभानेऽप्यन्यथावभासाभावात्। न च सत्यरजतमित्यवभासादन्यथावभास इति वाच्यम्। सत्यत्वस्य शुक्तौ विद्यमानत्वात्। न च रजतासंबद्धस्य शुक्तिगतसत्यत्वस्य रजतसंबद्धत्वेन भानादन्यथावभास इति वाच्यम्। शुक्तिगतस्यापि सत्यत्वस्य रजतसंबद्धत्वात्। रजतं हि न केवलाविद्यापरिणामः। नापि केवलशुक्तेः। किं त्वविद्याद्वारा शुक्तेरेवेति। शुक्तेश्च शुक्तित्वेनाज्ञानमेवाविद्या। इदंत्वेन तु शुक्तेर्ज्ञानं प्रत्युत प्रातिभासिकरजतोत्पत्तौ कारणमेव। एवं ज्ञातृनिष्ठरजतसंस्कारादीनि च यथायथं कारणानि बोध्यानि। एवं प्रातिभासिकरजतोत्पत्तौ सिद्धायां 'तस्य जन्मकारणं वक्तव्यम्' (श्रीभा० पृ० ९५ प० ८) इत्युपक्रम्य रजतप्रतीतिं रजतोत्पत्तिकारणत्वेन मायावादिभिः क्वाप्यनुक्तामपि तत्कारणत्वेन प्रकल्प्य 'निर्विषया जाता तदुत्पाद्य तदेव विषयी करोतीति महतामिदमुपपादनम्' (श्रीभा० पृ० ९५ प० १०) इत्येवं परिहसद्भिः स्वस्यैवात्मोपहासपात्रतां नीयते। एवं तदुत्तरमिन्द्रियाणां तद्गतदोषाणां दुष्टानामिन्द्रियाणां च प्रातिभासिकरजतोपादानकारणत्वेन प्रकल्पनं तत्खण्डनं च विफलमेव। मायावादिभिस्तथाऽनङ्गीकारात्। इन्द्रियगतदोषाणां निमित्तकारणत्वं त्विष्यत एव। उपपद्यते च तत्। इन्द्रियगतदोषाणामिन्द्रियकिरणादिद्वारा शुक्त्यादिविषयसंबन्धसंभवात्। एवं मायावाद्यनभिमतमनेकधा प्रकल्प्य विस्तारेण सोपपत्तिकं तत्खण्डनमभिमतविषये तु पङ्क्त्यैकया तदर्धेन वा यत्किंचिदुत्तरप्रदानमित्येवमपूर्वोऽयं खण्डनप्रकारो दृश्यते।

यदपि 'अपूर्वमनिर्वचनीयमिदं वस्तुजातं रजतादिबुद्धिशब्दाभ्यां कथमिव

विषयी क्रियते न घटादिबुद्धिशब्दाभ्याम् । रजतादिसादृश्यादिति चेत्तर्हि तत्सदृशमित्येव प्रतीतिशब्दौ स्याताम्' (श्रीभा० पृ० ९५ प० १६) इत्युक्तं तदसंगतम् । यतोऽत्र सादृश्यज्ञानस्य नोपयोगः । किं तु वस्तुसत्सादृश्यं रजतसंस्कारमुद्बोधयति । उद्बुद्धश्च स संस्कारस्तां शुक्त्यविद्यां रजतरूपेणैव परिणामयति न घटादिरूपेणेति । एतदग्रे 'रजतादिजातियोगादितिचेत्सा किं परमार्थभूतोतापरमार्थभूता वा' (श्रीभा० पृ० ९५ प० १९) इत्यादि कुतर्कजालं मायावेदान्तिभिर्नैव स्वीकृतमिति न तत्र किंचित्प्रत्युच्यते ।

या च रामानुजीयैः

'यथार्थं सर्वविज्ञानमिति वेदविदां मतम्' (श्रीभा० पृ० ९६ प० ४)

इत्यादिग्रन्थेन सर्वत्र सत्ख्यातिः स्वीकृता तत्रेत्थं विचार्यते । ख्यातिः प्रतीतिः । सा च सर्वत्र सत एव न क्वाप्यसत इति तदर्थः । तत्र सत इत्यस्य प्रातिभासिकरूपेणापि सत इत्यर्थे सत्ख्यातिरस्माकमिष्टैव । न तु तथा तैरङ्गीक्रियते । यदि पारमार्थिकेनैव रूपेण सत इत्यर्थस्तदा मरीचिकायां जलप्रतीतिर्न स्यात् । ननु त्रिवृत्करणेन पञ्चीकरणेन वा पृथिव्यां जलांशस्य सत्त्वमस्त्येवेति चेत्सत्यम् । त्रिवृत्कृते विशिष्टे पदार्थे जलत्वं नास्त्येव । तदीयैकदेशे जलांशे यद्यपि जलत्वं वर्तते तथापि न तज्ज्ञातुं शक्यते । त्रिवृत्करणं हि पृथग्विभागानर्हः संश्लेषः । त्रिवृत्करणात्प्राग्भूतानामतिसूक्ष्मतया प्रत्यक्षायोग्यत्वेन त्रिवृत्करणोत्तरमपि तत्रत्यकेवलजलप्रत्यक्षासंभवात् । किं चायं जलांशोऽतिसूक्ष्मोऽपि दूरतोऽपि च गृह्यत समीपस्थैर्न गृह्यते इति न युक्तिसहम् । 'इन्द्रियदोषेण तेजःपृथिव्योरग्रहणमदृष्टवशाच्चाम्बुन एव ग्रहणम्' (श्रीभा० पृ० ९९ प० ८) इति तदुक्तिस्तु तन्मतश्रद्धालुभिरेवास्थेया । किं च समीपगतस्य 'नेदं जलम्' इति प्रतीतिर्जायते । तत्र च सत एव जलस्यासत्त्वेन प्रतीतिरित्यन्यथावभासोऽवर्जनीय एव । एतेन 'शुक्तौ त्रिवृत्करणेन तेजोंशस्य सत्त्वात्तस्य रजतरूपेण प्रतीतिः' इति निरस्तम् । किं च स तेजोंशो रजतरूपेणैव कुतो ज्ञायते । विद्युत्सूर्यादिरूपेणापि तस्य भानं स्यात् । मिश्रणात्प्राक् तेजोंशस्य विद्युत्सूर्यादिसर्वसाधारणत्वात् । न च त्रिवृत्कृतस्य तेजसो रजतरूपेण परिणतस्य केचिदंशाः शुक्तौ मिश्रिता भासन्त इति वाच्यम् । तत्र तेषां सत्त्वे प्रमाणाभावात् । न च रजतप्रतीतिरेव प्रमाणमिति वाच्यम् । तस्याः प्रतीतेः सत्ख्यातित्वसिद्धौ

सत्ख्यात्यनुपपत्तिः

हि शुक्तौ रजतांशसत्त्वं सिध्यति। रजतांशसत्त्वसिद्धौ हि तस्याः प्रतीतेः सत्ख्यातित्वं सिध्यतीत्यन्योन्याश्रयात् । न च शुक्तौ रजतसादृश्यानुभवाद्रजतांशसत्त्वकल्पनमिति वाच्यम् । शुक्तौ रजतगुणसदृशचाकचक्यादिगुणवत्त्वेन सादृश्योपपत्तेः । न हि सदृशे वस्तुनि सदृशवस्त्वंशा विद्यन्त एवेति नियतिकृतनियमोऽस्ति । किं च देवदत्तीयवस्त्रालंकारादिसदृशे चैत्रीयवस्त्रालंकारादौ देवदत्तस्य स्वकीयत्वभ्रमो भवति । तत्र देवदत्तीयवस्त्राद्यवयवानां चैत्रीयवस्त्रादिपु नैव प्रवेश इति तत्र कथं सत्ख्यातिः । देवदत्तीयवस्त्रादिपु विनष्टेष्वपि विनाशमजानतो देवदत्तस्य परकीयवस्त्रादिपु दृष्टेपु स्वकीयत्वभ्रमो दृश्यते । अत्यन्तसदृशयोर्द्वयोः कार्षापणयोरप्येकस्यावयवा अन्यावयवसदृशा न तु त एवेत्याबालवृद्धं प्रत्ययः प्रसिद्धः। सोमाभावे च पूतीकग्रहणं श्रुतिचोदितं सोमनिष्ठगुणसदृशगुणवत्त्वान्न तु सोमावयवसद्भावात् । व्रीह्यभावे नीवारग्रहणमप्येवमेव । किंच दुग्धसदृशे गङ्गाजले दुग्धावयवसत्त्वे कस्मिंश्चिद्व्रते दुग्धत्यागे गङ्गाजलमपि त्याज्यं स्यात् । शुद्धमप्यन्नं रूपतो मांससदृशं चेत्तदवयवसत्त्वात्त्याज्यं स्यात् । अमृतसदृशमद्यप्राशनाद्दैत्यानाममरत्वापत्तिश्चेति बह्वव्याकुली स्यात् ।

यदपि ' स्वप्ने च प्राणिनां पुण्यपापानुगुणा भगवतैव तत्तत्पुरुषमात्रानुभाव्यास्तत्तत्कालावसानास्तथाभूताश्चार्थाः सृज्यन्ते ' ( श्रीभा० पृ० ९७ प० १२ ) इत्यादिग्रन्थेन स्वप्ने सत्ख्यातिसिद्ध्यै तत्रत्या रथादयः पदार्थाः परमेश्वरेण सृष्टाः परमार्थसत्या एवेत्युक्तं तच्चिन्त्यम् ।

स्वप्नेऽर्थाः प्रातिभासिकाः

यतो जगति सर्वस्यार्थजातस्यादृष्टं साधारणकारणम् । तथा च न तादृशः कश्चन पदार्थो यस्मात्सकाशात्कस्यापि प्राणिनः सुखं दुःखं वा नोत्पन्नम् । देवदत्तीयस्वप्ने परमेश्वरेण ये पदार्थाः सृष्टास्तन्मध्ये यस्माद्देवदत्तस्य सुखं दुःखं वा नोत्पन्नं स पदार्थः परमेश्वरेण कस्यादृष्टेनोत्पादितः । अनुभूयन्ते चोदासीना बहवः पदार्थाः स्वप्ने । तथा च

प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।

इति न्यायान्नैव ते पदार्थाः परमेश्वरेण सृष्टाः किंतु जीवेन कल्पिताः । कल्पना चेयं स्मृतिविशेषरूपा । मायामात्रं तु ( ब्र० सू० ३ । २ । ३ ) इति सूत्रे स्वप्नस्थपदार्थानां मायामात्रत्वं सूत्रकारैः कण्ठरवेणैवोक्तम् । मायाशब्दो ह्यनिर्वचनीयवाचीति प्रसिद्धमेव । अनिर्वचनीयत्वं च तत्तत्पुरुषमात्रानुभाव्यत्वे

सति तत्तत्कालावसानत्वमेव । स्वप्नस्थपदार्थानां तत्तत्पुरुषमात्रानुभाव्यत्वं तत्तत्कालावसानत्वं च स्वीकृतवद्भिरपि रामानुजीयैः 'मायाशब्दस्यानिर्वचनीयवाचित्वं न दृष्टम् ( श्रीभा० पृ०१०२प०२ ) इत्युच्यत इति कोऽयमनिर्वचनीयशब्दे द्वेषः । 'मायामात्रमाश्चर्यकारकत्वम् , जीवस्य कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्तस्याश्चर्यकारकसृष्टिकर्तृत्वासंभवात्परमेश्वरकर्तृकैव स्वप्नसृष्टिः' इत्यर्थे तु सूत्राक्षरास्वारस्यम् । यतो 'मायामात्रं तु' इत्युच्यते न तु 'ईश्वरकृतिस्तु' इत्युच्यते । किं चानभिव्यक्तस्वरूपत्वं कस्येत्याकाङ्क्षायां यस्य मायामात्रत्वं तस्येति प्रत्यासत्त्या लभ्यत एव । तत्परित्यज्य जीवानामित्यध्याहृत्य जीवानां कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादित्यर्थकरणं सूत्रकृतोऽनभिमतमिति स्पष्टमेव । शुक्तिरजतादयोऽपि स्वप्नस्थपदार्थवत्तत्पुरुषमात्रानुभाव्यास्तत्तत्कालावसानाश्चेति मायिका एव । किं च स्वप्नस्थपदार्थांस्तत्तत्पुरुषमात्रानुभाव्यांस्तत्तत्कालावसानांश्च सृजतोऽचिन्त्यशक्तेः परमात्मनः शक्तिः शुक्तिरजतादिसृष्टौ न कथंचिदपि प्रतिबद्धा भवेदिति स्वप्नस्थपदार्थवच्छुक्तिरजतादीनां परमार्थसत्यत्वं रामानुजीयैः कुतो न स्वी क्रियते । स्वप्नस्थपदार्थानां जीवकल्पितत्वे 'स हि कर्ता' ( बृ० ४ । ३ । १० ), 'य एष सुप्तेषु' ( का० ५ । ८ ) इतिश्रुतिविरोधस्तु न । जीवानां परमात्मनः सकाशाद्भेदाभावात् । स्वप्नस्थपदार्थानां शुक्तिरजतादीनां च जीवकल्पितत्वेऽपि परमात्मनः सर्वत्र साधारणकारणत्वेन तत्रापि कारणत्वावश्यंभावाच्च ।

प्रातिभासिकस्योदाहरणान्तराणि

जपाकुसुमसमीपवर्तिस्फटिकस्थले रक्तः स्फटिक इति प्रतीतौ न रक्तिमा मायिकः कल्प्यते । तस्य जपाकुसुमे सत्त्वात् । आरोप्यासंनिकर्षस्थल एव प्रातिभासिकवस्तूत्पत्त्यङ्गीकारात् । किं तु तस्य रक्तिम्नः स्फटिकसमवायो मायिक इत्यनिर्वचनीयख्यातिरेव । एवं पीतः शङ्ख इति प्रतीतौ पित्तद्रव्यगतपीतिम्नः सत्त्वे बोध्यम् । तदनङ्गीकारे तु पीतिमापि मायिकः कल्प्यते । रामानुजीयानां मते तु स्फटिकासमवेतस्य रक्तिम्नः शङ्खासमवेतस्य पीतिम्नश्च तत्समवेतत्वेन भानादन्यथाख्यातिरपरिहार्या स्यात् ।

यदप्यलातचक्रप्रतीतौ सत्ख्यातिसिद्धये 'अन्तरालाग्रहणाच्चक्रप्रतीतिरुपपद्यते' ( श्रीभा० पृ० ९९ प० १० ) इत्युक्तं तत्रेत्थं विवेचनीयम् । वास्तविके चक्रेऽन्तरालाभावादन्तरालाग्रहणम् । अलातचक्रेऽन्तरालसत्त्वेऽपि शैघ्र्यात्तदग्रहणं वर्तत इति सत्यम् । परं तु किमन्तरालाग्रहणमेव चक्रप्रतीतिरुतान्तरालाग्रहणादन्या

घक्रप्रतीतिः । नाद्यः । अन्तरालाग्रहणं ह्यन्तरालप्रतीत्यभावः । स च चक्रप्रतीतिरूपः कथं भवेत् । न हि घटप्रतीत्यभाव एव पटप्रतीतिः । अत एव भारापगमे सुखी संवृत्तोऽहमित्यत्र दुःखाभावे सुखमुपचर्यत इत्युच्यतेऽभियुक्तैः । किं च चतुष्कोणेऽन्तरालप्रतीत्यभावेऽपि न चक्रप्रतीतिः । द्वितीये त्वलातचक्रे चक्रस्य वस्तुतोऽभावादनिर्वचनीयचक्रोत्पत्तिरभ्युपेया स्यात् । दर्पणे मुखप्रतीतौ सत्यस्यैव स्वमुखस्य प्रतीतावपि तस्य दर्पणासंवद्धस्य तत्संवद्धत्वेन प्रतीतिसिद्धये संवन्धस्यानिर्वचनीयस्योत्पत्तिरभ्युपेयैव ।

दिङ्मोहेऽप्येवम् । तथा हि—दिग्भेदानां पूर्वादीनां सर्वत्र सापेक्षैव नियमेन प्रतीतिरमुकापेक्षया पूर्व इति । अत एव प्राङ्मुखोऽन्नानि भुञ्जीतेत्यादिव्यवस्था सिध्यति । अन्यथा दिग्भेदानां सर्वेषां सर्वत्र सत्त्वेन तदसंगतिः स्यात् । तथा च यदपेक्षया या पूर्वा तस्यास्तदपेक्षयैवोत्तरात्वज्ञाने पूर्वस्यापुत्तरात्वस्य सत्त्वेऽपि तदपेक्षोत्तरात्वस्याभावेन तदपूर्वमनिर्वचनीयं कल्पनीयमेव । एतेन ;'दिगन्तरप्रतीतिर्यथार्थैव ' ( श्रीभा० पृ० ९९ प० १७ ) इति परास्तम् ।

यत्तु ' द्विचन्द्रज्ञानादावप्यङ्गुल्यवष्टम्भतिमिरादिभिर्नायनतेजोगतिभेदेन सामग्रीभेदात्सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भवति । तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति । द्वितीया तु किंचिद्वक्रगतिश्चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति । अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणे सति ग्रहणभेदेन ग्राह्याकारभेदादेकत्वग्रहणाभावाच्च द्वौ चन्द्राविति भवति प्रतीतिविशेषः । देशान्तरस्य तद्विशेषणत्वं देशान्तरस्य चागृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवति ' (श्रीभा०पृ०९९प०१९) इत्युक्तं तदनुभवविरुद्धम् । यथा गृहे भित्त्यादौ नागदन्ते स्थितं वस्त्रमङ्गुल्यवष्टब्धनेत्रेण दृष्टं चेन्न केवलं तद्वस्त्रं द्वितीयं दृश्यते तदधिकरणीभूतो नागदन्तोऽपि द्वितीयो दृश्यते । तदाश्रया भित्तिः, तद्गृहं, तदाश्रयीभूता भूमिश्च द्वितीया दृश्यते । एवं साभ्रं सनक्षत्रमाकाशमित्येवं सर्वं जगद्द्वितीयं दृश्यत इति ह्यनुभवः । तथा च ' द्वितीया तु किंचिद्वक्रगतिश्चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति ' इति न संभवति । चन्द्रसमीपदेशग्रहणमेव द्वितीयसामग्र्या न भवति, दूर एव स्वदेशवियुक्तचन्द्रग्रहणम् । एवं 'देशान्तरस्य चन्द्रविशेषणत्वमगृहीतस्वदेशचन्द्रस्य देशान्तरस्य निरन्तरग्रहणेन भवति ' इत्यपि न संभवति । वास्तविकश्चन्द्रस्तदधिकरणीभूतो देशस्तत्समीपो देशश्चेत्येतन्मध्य एकस्यापि द्वितीयसामग्र्या ग्रहणाभावात् । अतो द्वितीयसामग्र्या गृह्यमाणं सर्वं जगदनिर्वचनीयमेवेत्यकामेनापि स्वीकार्यमेव ।

एवं च यच्छ्रीशंकराचार्यचरणैर्बौद्धमतखण्डने 'सर्वथानुपपत्तेश्च' ( ब्र० सू० २। २। ३२ ) इति सूत्रे 'यथायथायं वैनाशिकसमय उपपत्तिमत्त्वाय परीक्ष्यते तथातथा सिकताकूपवद्विदीर्यत एव, न कांचिदप्यत्रोपपत्तिं पश्यामः' इत्युक्तं तदेवात्र रामानुजमतविचारे स्मृतिपथमारोहति । तदेवमनिर्वचनीयं बाध्यं तदितरद्बाधकमिति बाध्यबाधकभावस्य सामञ्जस्येनोपपत्तिर्भवति । एतेन 'बाध्यबाधकभावः सर्वानुभवविषयतया तद्रहिततया चोपपद्यते' ( श्रीभा० पृ० १०१ प० ६ ) इत्येवं यथाकथंचिद्बाध्यबाधकभावोपपत्तिकल्पनमपास्तम् । किंचाज्ञानां शिष्याणां बहूनामप्यनुभवविषयीभूतोऽर्थो दोषज्ञस्य गुरोरेकस्याप्यनुभवविषयीभूतेनार्थेन बाध्यत इति प्रसिद्धं लोके । एवं चानिर्वचनीयत्वरूपं मिथ्यात्वमेव बाध्यत्वे प्रयोजकं भवति । जगति दृश्यमानं च सर्वमेतदनिर्वचनीयमेव । अनिर्वचनीयाज्ञानमूलकत्वात् ॥ २० ॥

श्रुत्यादिकमविद्यायां प्रमाणं स्याद्यथायथम् ।
सत्याधिष्ठानधीस्तत्र स्यादविद्यानिवर्तिका ॥ २१ ॥

मूलभूतमज्ञानं च 'एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः' ( छा० ८।३।२ ) इत्यादिश्रुतिसिद्धम् । अनृतशब्देनानिर्वचनीयमज्ञानमुच्यते । यत्तु 'ऋतमिति कर्मवाचि । ऋतं पिबन्तौ ( का० २ । १ ) इति वचनात् । ऋतं कर्म फलाभिसंधिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलम् । अत्र तद्व्यतिरिक्तं सांसारिकफलं कर्मानृतं ब्रह्मप्राप्तिविरोधि । एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढा इति वचनात्' ( श्रीभा० पृ० १०१ प० ११ ) इत्युक्तं तन्न । ऋतशब्दस्य सत्यवाचितया प्रसिद्धत्वात् । अमरसिंहोऽपि 'सत्यं तथ्यमृतम्' ( अमरको० १ । ६ । २२ ) इत्याह । तथा चानृतमसत्यम् । तच्च ब्रह्मलोकाज्ञाने कारणं भावरूपमेतदज्ञानमेव । अनृतेन प्रत्यूढा इति वेदनाभावे हेतुगर्भं विशेषणम् । अज्ञानं चैतन्न ज्ञानाभावरूपम् । किं तु ज्ञानाभावापेक्षयाऽतिरिक्तं भावरूपम् । इतरथा कार्यकारणयोरैक्येन वेदनाभावहेतुत्वेनानृतोक्तिरसंगता स्यात् ।

भावरूपाज्ञाने प्रमाणम्

ऋतं पिबन्तावित्यत्रापि न ऋतशब्दस्य कर्मवाचित्वम् । ऋतं पिबन्तौ कर्मफलमुपभुञ्जानावित्यर्थः । तत्र ऋतशब्दस्य कर्मवाचित्वेऽपि कर्मफलार्थे लक्षणापत्तेः । सत्यवाचिऋतशब्दस्य तु कर्मफलरूपेऽर्थे प्रवृत्तिः सूपपादा । 'नाभुक्तं क्षीयते कर्म' इत्युक्तरीत्या कर्मफलस्यावश्यकत्वेनावश्यं

भाविरूपसत्यत्वस्य कर्मफले सत्त्वात् । किंच त्वन्मते ऋतशब्दो विशेषकर्मवाची सामान्यकर्मवाची वा । नाद्यः । ऋतमिति कर्मवाचीति सामान्यतस्त्वदुक्तिविरोधात् । किंच कर्मविशेषग्रहणे फलाभिसंधिपूर्वकं गृह्यते तदपूर्वकं वा । आद्येऽनृतशब्देन फलाभिसंधिसहितं सांसारिकफलं कर्म गृह्यत इति त्वदीयसिद्धान्तासंगतिः स्यात् । ऋतशब्देनैव तादृशकर्मग्रहणेऽनृतशब्देन तद्विरुद्धस्य कस्यचिद्ग्रहणापत्तेः । द्वितीये तु 'ऋतं पिबन्ताविति वचनात्' इति त्वदीयो हेतुरसंगतः स्यात् । ऋतं पिबन्ताविति कर्मफलोपभोगप्रतिपादनेन फलाभिसंधिपूर्वस्यैव कर्मणस्तत्र ग्रहणात् । ऋतशब्दस्य सामान्यकर्मवाचित्वे त्वनृतशब्देन त्वदभीष्टं कर्मविशेषग्रहणं कथं सिध्येत् । न ह्यकर्मशब्दात्कर्मविशेषरूपमर्थं कोऽपि प्रत्येति । सामान्यपुरस्कारप्रवृत्तस्य शब्दस्य विशेषे तात्पर्यं हि प्रकरणादिभ्योऽवगम्यते न तु तथात्र किंचिद्दृश्यते । 'ब्रह्मलोकवेदनाभावरूपफलोत्पादनसामर्थ्यस्य फलाभिसंधिपूर्वककर्मणि सत्त्वेन तादृशं कर्मानृतशब्देन प्रतिपाद्यते । तदर्थं च ऋतशब्देन फलाभिसंधिरहितं कर्म विवक्षितम्' इति तु सर्वथाऽनुचितम् । नञ्समभिव्याहृतपदे विशेषार्थपरत्वस्य व्युत्पत्तिविरोधात्काप्यदृष्टत्वाच्च । प्रतियोगिवाचकपदप्रवृत्तिनिमित्तस्यैव नञर्थान्वयितावच्छेदकत्वात् । अत एवैकस्मिन्घटे विद्यमाने तदतिरिक्तानामखिलानां घटानां तत्रासत्त्वेपि घटो नास्तीति न प्रयोगः । अन्यथा ब्राह्मणविशेषे देवदत्तादावब्राह्मणपदप्रयोगप्रसङ्गः स्यात् । किंचानृतशब्देन सकामकर्मग्रहणे सुषुप्तस्य कर्माभावेन प्रतिबन्धकाभावात्त्वन्मते तदाऽहमर्थस्फुरणाच्च तदा स्वात्मभूतस्य ब्रह्मणो ज्ञानं कुतो नोदेति ।

नासदासीयसूक्तमपि (तै० ब्रा० २ । ८ । ९ । ३ । ४) सदसदनिर्वचनीयजगन्मूलभूताज्ञाने प्रमाणम् । तत्र हि तम आसीदिति तमःशब्देनाज्ञानमुच्यते । तस्य च नासदासीन्नो सदासीदिति निषेधद्वयेन सदसदनिर्वचनीयता लभ्यते । यद्यपि नासदासीन्नो सदासीदित्यनेन सदसतोः प्रलयकालेऽसद्भावमात्रमुच्यते तथापि तदानीं तस्मिन्नेव सूक्ते तम आसीदिति प्रतिपादितं यत्तमोऽस्ति तस्य सत्त्वे नो सदासीदिति निषेधासंगतिः । असत्त्वे नासदासीदिति निषेधासंगतिः । अतोऽर्थादेव तत्तमः सदसदनिर्वचनीयं सिध्यति ।

नासदासीयसूक्तमज्ञाने प्रमाणम्

यत्तु 'नासदासीन्नो सदासीत्तदानीमित्यत्रापि सदसच्छब्दौ चिदचिद्व्यष्टिविषयौ । उत्पत्तिवेलायां सत्त्यच्छब्दाभिहितयोश्चिदचिद्व्यष्टिभूतयोर्वस्तुनोरप्यय-

कालेऽचित्समष्टिभूते तमःशब्दाभिधेये वस्तुनि प्रलयप्रतिपादनपरत्वादस्य वाक्यस्य नात्र कस्यचित्सदसदनिर्वचनीयतोच्यते ' ( श्रीभा० पृ० १०१ पं० १५ ) इत्युक्तं तन्न । सदसच्छब्दयोश्चिदचिद्व्यष्टिविषयकत्वे प्रमाणाभावात् । अस्तीति भासमानं सत्, तद्विरुद्धमसदिति हि तयोः शब्दयोरर्थः प्रसिद्धः । किं च चिद्व्यष्टिभूतानां जीवानामचित्समष्टौ लयोऽत्यन्तासंभवी । उत्पत्तिवाक्ये चिदचिद्व्यष्टिभूतयोरुत्पत्तिकथनादत्र तयोरेव प्रलयोक्तिरिति कथमवगतं त्वया । न तावत् ' सच्च त्यच्चाभवत् ' ( तै० २ । ६ । १ ) इत्युत्पत्तिवाक्यमेतत्प्रकरणस्थम् । नापि शब्दसाम्यम् । उत्पत्तिवाक्ये हि सत्त्यच्छब्दौ निर्दिष्टौ । अत्र तु सदसच्छब्दौ । किंच त्यच्छब्दस्तच्छब्दसमानार्थः । 'तदिति परोक्षं विजानीयात्' इत्युक्तेस्तच्छब्दः परोक्षवस्तुनिदर्शकः । तत्र तच्छब्दो लोकवेदसाधारणस्त्यच्छब्दस्तु केवलं वैदिक इत्यन्यत् । प्रक्रान्तपरामर्शकत्वमपि त्यत्तच्छब्दयोरस्तीति चान्यत् । तथा च सच्च त्यच्चेत्यत्र त्यच्छब्देन परोक्षं वस्तूच्यते । अमूर्तमिति यावत् । अमूर्तत्वपरोक्षत्वयोः प्रायः सहचारात् । सच्छब्दोऽस्तीति भासमानार्थको मूर्तं वस्त्वाचष्टे । अमूर्तार्थकत्यच्छब्दसंनिधानात् । मूर्तत्वसत्त्वयोः प्रायः सहचाराच्च । मूर्ते सत्त्वस्यासंदिग्धत्वात् । एवमुत्पत्तिवाक्य एव सत्त्यच्छब्दयोश्चिदचिद्व्यष्ट्यर्थकत्वं नास्तीति तदनुरोधात्प्रलयवाक्ये सदसच्छब्दयोस्तदर्थकत्वं दूर एव । तस्मिन्नेव सूक्ते ' आनीदवातं स्वधया तदेकम् ' इत्यनेन ' तुच्छेनाभ्वपिहितम् ' इत्यनेन च जगन्मूलभूताज्ञानमुच्यते । एतत्स्पष्टीकरणाय तत्र श्रीमत्सायणाचार्यैः कृतोऽर्थो युक्ततरत्वादत्र संगृह्यते ।

" नासदासीन्नो सदासीत्तदानीम् । ....आनीदवातं स्वधया तदेकम् । .... तम आसीत्तमसा गूढमग्रे प्रकेतम् । सलिलं सर्वमा इदम् । तुच्छेनाभ्वपिहितं यदासीत् । तमसस्तन्महिना जायतैकम् " ( तै० ब्रा० २ । ८ । ९ । ३।४ )

यदा पूर्वसृष्टिः प्रलीना, उत्तरसृष्टिश्च नोत्पन्ना तदानीं सदसती द्वे अपि नाभूताम् । नामरूपविशिष्टत्वेन स्पष्टं प्रतीयमानं जगत् सच्छब्देनोच्यते । नरविषाणादिसमानं शून्यमसदित्युच्यते । तदुभयं नासीत् । ( बाह्यस्वरूपरहितं केवलकल्पनामयमपि शशशृङ्गादि तदा नासीदिति नासदासीदित्यस्य तात्पर्यम् । ) किं तु काचिदव्यक्तावस्थाऽऽसीत् । सा च विस्पष्टत्वाभावान्न सती । जगदुत्पादकत्वेन सद्भावान्नाप्यसती । तत्सर्वोपनिषत्प्रसिद्धं ब्रह्म वस्तु स्वधया स्वस्मिन्नाश्रितया सर्वजगत्कारणरूपया मायया सहितमानीत् चेष्टितवत् । नात्र चलनं

चेष्टा। किं तु सद्भावमात्रमित्यभिप्रेत्यावातमिति विशेष्यते । वायुरहितं निश्चल-मित्यर्थः । ....तमःशब्देनाविद्यामायाशक्त्यादिशब्दवाच्यं जगद्विकारोपादानं मूलाज्ञानमुच्यते । यथा तमः पदार्थानावृणोत्येवमिदमपि ब्रह्मतत्त्वमावृणोतीति तमःशब्देन व्यवहारः । तादृशं जगद्विकारनिष्पादनक्षमं ब्रह्मण्याश्रितं किंचित्तम आसीत् । ...न तमसा सर्वं जगद्गूढम् । यथा मृत्पिण्डे घटो गूढो यथा वा बीजे वृक्षो गूढस्तद्वत् । अत एव प्रकेतं प्रकर्षेण ज्ञातुमशक्यम् । तथा च मनुना स्मर्यते-

'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः' ( मनुस्मृ० १ । ५ ) इति ।

तत्र दृष्टान्तः सलिलमिति । यथा घर्मे पतिता वर्षोपलाः सलिल-मात्रत्वेनावशिष्यन्ते तथा सर्वं जगदिदं तम आसीत् । तमोमात्ररूपेणावशिष्ट-मित्यर्थः । अत्र हि काणादादयोऽसत्कार्यवादिनः कारणे पूर्वमविद्यमानमेव कार्यमुत्पद्यत इत्याहुः । सत्कार्यवादिनस्तु सांख्यादयः पूर्वं विद्यमानमेव कार्य-मव्यक्तं सत्कारणव्यापारेण व्यक्तं भवतीत्याचक्षते । तत्र सत्कार्यवादिनां मत-मेव तमसा गूढमिति श्रुत्याङ्गीकृतम् । आ समन्ताद्भवत्युत्पद्यत इत्याभु जगत् । तदेव तुच्छेनापिहितम् । तत्त्वज्ञानमात्रेण निवर्त्यत्वात्तत्कारणं मूलाज्ञानं तुच्छम्। तेनापिहितं प्रलयकाल आच्छादितम् । तादृशं यज्जगदासीत्तज्जगदव्यक्तं सत्पू-र्वोक्तादज्ञानरूपात्तमसः सकाशान्महिना महत्त्वेनाभिव्यक्तजगद्रूपेणाजायतेत्य-र्थम् । तदिदमज्ञानिदृष्ट्या जगदाकारेण भासमानमपि परमार्थत एकं ब्रह्मैवेति।

एतदेव सदसदनिर्वचनीयं जगन्मूलभूतमज्ञानं मायाशब्देनोच्यते । मिथ्यात्वे सति विचित्रार्थसर्गकरत्वं मायात्वम् । यत्तु

मायाशब्दार्थः

'नहि सर्वत्र मायाशब्दो मिथ्याविषयः' ( श्रीभा० पृ० १०२ प० ४ ) इत्युक्तं तत्र सर्वत्रेत्यस्य यथाश्रुतार्थत्वे सर्वत्र मायाशब्दस्य मिथ्यार्थत्वाभावेऽप्यत्र मिथ्यार्थकत्वे न किंचि-द्बाधकम् । सर्वत्रेत्यस्य क्वापीत्यर्थे तु प्रसिद्धिविरोधः । ऐन्द्रजालिकप्रदर्शिता-न्मिथ्याभूतानर्थान्दृष्ट्वा, 'इमे मायिकाः' इतीदानीं बाला अपि व्यवहरन्ति । मीयतेऽ-परोक्षवत्प्रदर्श्यतेऽनयेति माया । माछाससिभ्यो यः ( उणादि० सू० ४।१०९ ) इति यप्रत्ययः । देवीपुराणे पञ्चचत्वारिंशदध्यायेऽप्यस्याः स्वरूपमुक्तम्—

'विचित्रकार्यकरणा अचिन्तितफलप्रदा ।
स्वप्नेन्द्रजालवल्लोके तेन माया प्रकीर्तिता' ॥ इति ।

तापनीयश्रुतिरप्यत्र प्रमाणम् । विद्यारण्योक्तिरपि—

माया चेयं तमोरूपा तापनीये तदीरणात् ।
अनुभूतिं तत्र मानं प्रतिजज्ञे श्रुतिः स्वयम् ( प०द०६।१२५ ) इति।
तेन मायासहस्रं तच्छम्बरस्याशुगामिना ।
बालस्य रक्षता देहमेकैकांशेन सूदितम् ( वि० पु० १।१९ )

इत्यत्रापि मायाशब्दस्यायमेवार्थः। प्रह्लादस्य देहं रक्षताऽऽशुगामिना तेन विष्णुचक्रेण शम्बरदैत्यप्रेरितं मायासहस्रमेकैकांशेन नाशितमित्यर्थः । मिथ्यार्थो ज्ञानबाध्योऽपि शस्त्रेण च्छेद्यो भवत्येव। शस्त्रधारिणा केनचित्पुरुषेण रज्ज्वां रज्जुबुद्ध्या सर्पबुद्ध्या वा छिद्यमानायां दूरस्थो भ्रान्तः पुरुषः सर्पश्छिन्न इत्येव जानाति। किं च यावन्न ज्ञानोदय स्तावन्मिथ्यार्थविनाशो मिथ्याभूतेन शस्त्रेण जायमानो दृश्यते। स्वप्नस्थं काष्ठं स्वप्नस्थपरशुना छिद्यमानं स्वप्ने दृश्यत एव। एतेन 'इन्द्रो मायाभिः पुरुरूप ईयते( बृ०२।५।१९ ) इत्यत्रापि विचित्राः शक्तयोऽभिधीयन्ते अत एव हि भूरि त्वष्टेह राजतीत्युच्यते। न हि मिथ्याभूतः कश्चिद्विराजते' (श्रीभा० पृ० १०२ प० १७ ) इत्यपास्तम् । मिथ्याभूता अपि स्वाप्ना हस्त्यश्वादयोऽलंकृता विराजमानाः स्वप्ने सर्वैरप्यनुभूयन्ते । 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः' ( श्वे० ४ । ९ ) 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' ( गौ० १ । १६ ) 'इन्द्रो मायाभिः पुरुरूप ईयते' ( बृ० २। ५ । १९ ) 'मम माया दुरत्यया' ( गी० ७।१४ ) इत्यादौ मायाशब्दो निरुक्तार्थक एव । न किंचित्तत्र बाधकं दृश्यते ।

*मूलाज्ञानेऽर्थापत्तिः प्रमाणम्*

तत्त्वमसि ( छा० ६ । ८ । ७ ) इति जीवब्रह्मैक्यश्रुतिरप्युक्ताज्ञाने प्रमाणम् । जीवब्रह्मणोर्वस्तुतो भेदश्चेत्तयोरैक्यं न संभवतीत्यतो भेदस्य काल्पनिकत्वमेव स्वीकार्यम् । तदन्यथानुपपत्त्या तादृशभेदज्ञानजनकत्वेनानिर्वचनीयाज्ञानं सिध्यति । यत्तु 'ऐक्योपदेशस्तु त्वंशब्देनापि जीवशरीरकस्य ब्रह्मण एवाभिधानादुपपन्नतरः' (श्रीभा० पृ० १०३ प० ४ ) इत्युक्तं तन्न। त्वमहमित्यादेः सकाशात्तत्तज्जीवशरीरकस्य ब्रह्मणः काप्यप्रतीतेः । किं च त्वमहमित्यादेः सकाशाद्ब्रह्मणो जीवविशेष्यतया भानमुत जीवप्रकारतया । आद्ये दुःखी त्वमसीत्यादिप्रयोगानुपपत्तिः । ब्रह्मणो दुःखलेशस्याप्यभावात् । न च 'विधिप्रतिषेधौ विशेषणे पर्यवस्यतः सति विशेष्ये बाधे' इतिन्यायेन विशेषणीभूते जीवे दुःखित्वं पर्यवस्यतीति वाच्यम्। शाब्दान्वयो विशिष्ट एवेति तदनुसारेण श्रोतुर्बुद्धिः प्रथमं विशिष्टेऽवतरन्ती

विशेष्ये बाधिता सती विशेषणे पर्यवस्यतीति तन्न्यायस्वरूपम् । दुःखी त्वमसीत्यत्र तु प्रथममपि न विशिष्टे श्रोतुर्बुद्धिरवतरतीति नात्र तन्न्यायप्रवृत्तिः । किं च विधिप्रतिषेधविषये तथा, न त्वनुवादविषये । तत्र प्रायस्तादृशप्रयोगादर्शनात् । तथा च दुःखिना त्वयेत्थमुक्तमित्यादिप्रयोगासंगतिस्तदवस्थैव । किं च तत्त्वमसीतिमध्यमपुरुषप्रयोगानुपपत्तिः । 'त्वदात्मा ब्रह्मास्ति' इत्यत्रेव तत्त्वमस्तीति प्रयोगः स्यात् । द्वितीये तत्त्वमसीति सामानाधिकरण्यानुपपत्तिस्तदवस्थैव स्यात् । प्रकारीभूतात्मनो ब्रह्मसामानाधिकरण्यमिति तु न वाच्यम् । न हि घटप्रकारीभूतघटत्वस्य नित्यत्वेन तदभिप्रायेण घटो नित्य इति प्रयोगः क्वापि दृश्यते । किं च त्वमहमित्यादेरात्मपर्यन्तार्थकत्वं सुतरामनुपपन्नम् । एतौ हि सर्वनामसंज्ञकौ । सर्वनामशब्दो हि कंचित्परामृशति । 'तत्त्वमसि श्वेतकेतो' इत्यत्र त्वमित्यनेन श्वेतकेतुः परामृश्यते । स च परामृश्यमानः पित्रा संबोध्यमानो जीव एव न तदन्तर्यामी । किं च जीवजडशब्दौ निरूपकाणां निष्कर्षकशब्दौ शरीरशब्दवत् । अन्यथा जीवशरीरकः परमात्मा जडशरीरकः परमात्मेत्यादिस्त्वत्संमतः प्रयोगो नोपपद्येत । प्रत्युत जीवः परमात्मा जडः परमात्मेति प्रयोगः स्यात् । तथा च त्वमहमित्यादयो मातापित्रादयो देवदत्तयज्ञदत्तादयश्च जीवविशेषवाचकाः शब्दास्तथा पृथिव्यादयो घटादयश्च जडविशेषवाचकाः शब्दाः कथमात्मपर्यन्तमर्थं प्रतिपादयितुं शक्नुयुः । एतेन 'अनेन जीवेनात्मना' ( छा० ६ । ३ । २ ) इति श्रुतौ जीवशब्दस्यात्मपर्यन्तार्थकत्वमपास्तम् । यस्तु त्वंशब्देन ब्रह्मण एवाभिधाने हेतुरुक्तः 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव हि नामरूपभाक्त्वमुक्तम्' ( श्रीभा० पृ० १०३ प० ६ ) इति स न संभवति । परमात्मनोऽनुप्रवेशपूर्वकमेव नामरूपव्याकरणमिति हि श्रुत्योक्तम् । तथा चानेन हेतुना परमात्मनस्तत्तन्नामभाक्त्वं कथं सिध्यतीति त एव प्रष्टव्याः । न हि 'पयसि निगूढं घृतम्, तद्विना पयसो न पयस्त्वम्' इत्येतावता पयःशब्दः पयोन्तर्यामिघृतमभिधातुं प्रभवेत् ।

यदि परमात्मा सर्ववस्तूत्पादक इत्यतः सर्ववस्तुवाचकशब्दभागपि भवतीत्युच्यते तर्हि घटोत्पादकः कुलालोऽपि घटशब्दभाक् स्यात् । यद्यस्माच्छब्दादयमर्थो बोद्धव्य इत्येवं सर्वशब्दानां संकेतं परमात्मा कुरुत इत्यतः परमात्मा सर्वशब्दभाक् स्यात्तर्हि पुत्रादीनां यदृच्छया डित्थादिशब्दसंकेतकारी पित्रादिरपि तत्तच्छब्दभाक् स्यादित्यास्तां तावत् ।

वायुपुराणे चायं ब्रह्मज्ञानवादः स्पष्ट एवोपलभ्यते-

रज्जावहिर्मरौ वारि नीलिमा गगने तथा ।
असद्विश्वमिदं भाति यस्मिन्नज्ञानकल्पितम् ॥
मूलज्ञाने पुराणं प्रमाणम् घटावच्छिन्न एवायं महाकाशो विभिद्यते ।
कार्योपाधिपरिच्छिन्नं तद्वद्यज्जीवसंज्ञकम् ॥
मायया चित्रकारिण्या विचित्रगुणशालया ।
ब्रह्माण्डं चित्रमतुलं यस्मिन्भित्ताविवार्पितम् ॥

( वा. पु. १०४ । ३९ । ४० । ४१ । ) इति ।

देवी भागवते देवीगीतायामपि—

अहमेवासं पूर्वं मे नान्यत्किंचिन्नगाधिप ।
तदात्मरूपं चित्संवित्परब्रह्मैकनामकम् ॥
अप्रतर्क्यमनिर्देश्यमनौपम्यमनामयम् ।
तस्य काचित्स्वतः सिद्धा शक्तिर्मायेति विश्रुता ॥
न सती सा नासती सा नोभयात्मा विरोधतः ।
एतद्विलक्षणा काचिद्वस्तुभूतास्ति सर्वदा ॥

( दे. गी. १ । २ । ४ ) इति ।

विष्णुपुराणे द्वितीयांशे द्वादशाध्याये चायं ब्रह्माज्ञानवादो दृश्यते। तथा हि-

ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।
नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य [ वि. पु. २ । १२ । ३८ ]।

विष्णुशब्दः परमात्मवाची । अत्र ज्योतिरादीनां सर्वेषां परमात्मतादात्म्यमुच्यते । ज्योतिरादिजगतः परमार्थत्वे तस्य परमात्मनः सकाशाद्भेदे च तादात्म्यं न संभवतीत्यतो ज्योतिरादिजगतः काल्पनिकत्वमेव वाच्यम् । कल्पना चाज्ञानमूलिकेत्यज्ञानवादः सिध्यति । एवं च ज्योतींषि विष्णुरित्यादि सामानाधिकरण्यं ज्योतिरादीनां बाधार्थमेव । नन्वेतत्तादात्म्यं शरीरशरीरिभावमूलकम् । 'यस्य पृथिवी शरीरं यस्यापः शरीरम्' ( बृ. ३ । ७ । ३-४ ) इति श्रुतौ यदम्बु वैष्णवः कायः ( वि. पु. २ । १२ । ३७ ) तानि सर्वाणि तद्वपुः ( वि० पु० १ । २२ । ८४ ) तत्सर्वं वै हरेस्तनुः ( वि० पु० १ । २२ । ३७) इति विष्णुपुराणे च पृथिव्यवादीनां सर्वेषां परमात्मशरीरत्वमुच्यते । यस्या-

विष्णुपुराणादव्यज्ञानासिद्धिः

त्मा शरीरम् (श० ब्रा० १४।६।७।३०) इति श्रुतौ च जीवस्यापि परमात्मशरीरत्वमुच्यते। लोके च शरीरशरीरिणोस्तादात्म्यं व्यपदिश्यते यथाऽयं जीवः कर्मभिर्गौरऽश्वो मनुष्यो देवो वा जात इतीति चेन्न। जीवजडयोः परमात्मना सह शरीरशरीरिभावसंबन्धाङ्गीकारेऽपि वस्तुतस्तादात्म्यस्याभावेन ज्योतींषि विष्णुरित्यादिप्रयोगासंगतेस्तादवस्थ्यात्। तादात्म्यं ह्येकसत्ताकत्वम्। जीवोऽयं कर्मणा गौरश्वो मनुष्यो देवो वा जात इत्यादयः प्रयोगास्तु तादात्म्यारोपमूलकाः। न च ज्योतींषि विष्णुरित्यत्राप्यारोपितं तादात्म्यमस्त्विति वाच्यम्। संभवन्त्यामुपपत्तावारोपाङ्गीकारस्यान्याय्यत्वात्।

जीवजडयोर्नात्मशरीरत्वम्

किंच जीवजडयोः परमात्मना सह शरीरशरीरिभावो न प्रमाणपदवीमारोहति। शरीरं हि कर्मजन्यफलभोगायतनं लोके प्रसिद्धम्। न चेश्वरस्य कर्मजन्यफलभोगाः संभवन्ति। तथा च यस्य पृथिवी शरीरमित्यादौ शरीरादिशब्दाः स्वरूपार्थकाः। दृश्यते हि शरीरशब्दः स्वरूपार्थकः शिलापुत्रकस्य शरीरमिति। यथा—तानि सर्वाणि तद्वपुः, यदम्बु वैष्णवः कायः, तत्सर्वं वै हरेस्तनुः, इति विष्णुपुराणे कायवपुस्तनुशब्दा अपि स्वरूपार्थका एव। विष्णुपुराण एवाशेषमूर्तिः (वि० पु० २।१२।३९) इत्यत्र स्वरूपपर्यायत्वेन प्रसिद्धस्य मूर्तिशब्दस्य प्रयोगदर्शनात्। अत एव विष्णुपुराण एव विश्वरूपो यतोऽव्ययः (वि० पु० १।२२।६८) द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च (वि० पु० १।२२।५३) इत्यत्र रूपशब्दोक्तिः संगच्छते। 'विष्णुशक्तिः परा प्रोक्ता' (वि० पु० ६।७।६१) इत्यादौ शक्तिविभूतिशब्दावपि स्वरूपविशेषार्थकावेव। अन्यथा 'अशेषमूर्तिः' 'विश्वरूपः' इत्यादिविष्णुपुराणस्थवाक्यैरेकवाक्यता न स्यात्। एतेन तदेकधार्यं तदेकनियाम्यं तदेकशेषं शरीरमिति शरीरशब्दार्थनिर्वचनं रूपशक्तिविभूतिशब्दानां तादृशार्थकत्वेन गतिकल्पनं चापास्तम्। भोगायतन एव शरीरशब्दस्य लोके प्रसिद्धत्वात्। तदेवं याथार्थ्येन ज्योतींषि विष्णुरिति सामानाधिकरण्येन जगत्कल्पनामूलभूतमज्ञानं सिद्धम्।

सर्वं परमात्मस्वरूपम्

किं चात्र चरणत्रयेण ज्योतिरादीन् कांश्चित्प्रसिद्धान्पदार्थविशेषान्निर्दिश्य किमनया विशेषोक्त्येत्यभिप्रायेण चतुर्थचरणे यदस्ति यन्नास्ति तत्सर्वं स एवेत्युक्तम्। 'यदस्ति' भावरूपेण प्रतीयमानं चेतनं जीवजातमचेतनं

घटादि च। 'यन्नास्ति' अभावरूपेण प्रतीयमानमस्तीति यन्न प्रतीयते शशशृङ्गादि मनोराज्यकल्पितं राज्यादि च। यद्यपि शशशृङ्गादीनां स्वरूपमेव नास्तीति कथं तस्य परमात्मस्वरूपत्वं तथापि शशशृङ्गादीनां बाह्यस्वरूपाभावेऽपि बौद्धपरिकल्पितमान्तरं स्वरूपमस्त्येव। अत एव शशशृङ्गादिपदानामर्थवत्त्वात्प्रातिपदिकसंज्ञा व्याकरणे प्रतिपाद्यते। शशशृङ्गं नास्तीतिनिषेधप्रतियोगिनः प्रसिद्धिश्चात एव। बाह्यस्वरूपेण नास्तीति हि तदर्थः। एतदुक्तं भवति—'यदस्तीत्येवं बाह्यं परिदृश्यते तत्सर्वं परमात्मैवेति किं वक्तव्यम्। यन्नास्ति बाह्यार्थपूर्वभाव्यान्तरं केवलं बुद्धिपरिकल्पितं च तदपि स एवेति। अनेन परमात्मनो विलक्षणवैभवशालित्वमुक्तं भवति।

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' ( म० ना० १३ । १ )

इति श्रुतावप्येतदेवोच्यते। आन्तरकल्पनोत्तरं च तत्तद्योग्यसाधनसामग्रीसत्त्वे क्वचित्तादृशाकारं बाह्यस्वरूपं दृश्यते यथा घटप्रासादादिषु। कुम्भकारो रथकारश्च प्रथमतो घटाकारं प्रासादाकारं च बुद्धावाकलय्य पश्चात्तादृशाकारं घटं प्रासादं च निर्मिमीते। क्वचित्तु बाह्यस्वरूपं न दृश्यते यथा शशशृङ्गादिष्वित्यन्यत्। बाह्यस्वरूपेणासत् केवलं बुद्धिकल्पितं च शशशृङ्गाद्यज्ञानमूलकमेवेत्यज्ञानं सिध्यति।

किं चासतः परमात्मशरीरत्वं न संभवति। जीवानां हि साक्षात्परमात्मशरीरत्वम्। अचेतनानां तु जीवद्वारैव। 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ब्रह्मात्मकजीवानुप्रवेशेनैव सर्वेषां वस्तुत्वं शब्दवाच्यत्वं च' (श्रीभा० पृ० ११२ प० १९) इति हि भवतैवोच्यते। 'काष्ठलोष्टादिष्वपि चैतन्यमस्त्येव किं त्वनुद्भूतम्' इति च भवदीयः सिद्धान्तः। तथा चासतो जीवशरीरत्वाभावेन न परमात्मशरीरत्वसंभवः। जीवशरीरत्वं तु न कथमप्यसतः संभवति। भोगाभावात्।

यत्तु 'यदस्तीत्यत्र चिदंशोऽविनाशित्वेनास्तिशब्दवाच्यः। अचिदंशस्तु विनाशीति नास्तिशब्दाभिधेयः' (श्रीभा० पृ० १०४ प० ८) इत्युक्तं तन्न। अचेतनानां घटादीनां भावरूपेण प्रतीयमानानां नास्त्यसत्यादिशब्दैः क्वाप्युच्यमानत्वाभावात्। प्रसिद्धिविरुद्धोऽप्ययमर्थः केवलं रामानुजीयैर्बाधार्थ सामानाधिकरण्यमनङ्गीकुर्वद्भिः शरीरशरीरिभावमूलकं सामानाधिकरण्यमिति स्वमतेनास्य श्लोकस्योपपत्तये स्वीकृत इति कथं श्रद्धेयः स्यात्। यदम्बु वैष्णवः कायः (वि० पु० २। १२। ३७) इत्यादौ कायादिशब्दा रूपमूर्तिशक्तिविभूत्यादिशब्दैरेकार्थत्वोपपत्तये स्वरूपार्थका इत्यनुपदमेवोक्तम्।

ज्योतींपि विष्णुरित्यनेन श्लोकेन यदुक्तं सर्वं परमात्मैवेति तदुक्तिमात्रेण न सिध्यति किं तु तत्र हेतुः प्रदर्शनीय इत्याह—

ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः।
ततो हि शैलाब्धिधरादिभेदाञ्जानीहि विज्ञानविजृम्भितानि ॥
(वि० पु० २।१२।३९)

अत्र यत इत्यनेन पूर्वश्लोकोक्तार्थेऽयं हेतुरिति बोध्यते। यस्मादयं भगवान्परमार्थतो ज्ञानस्वरूपोऽस्ति। अशेषमूर्तिः इदं सर्वं परमात्मैवेत्युक्तरीत्याऽशेषजगत्स्वरूपकस्तु न वस्तुभूतः। एतत्स्वरूपं सर्वं विज्ञानविजृम्भितं मिथ्यैव। विविधं ज्ञायतेऽनेनेति विज्ञानं मूलभूताज्ञानम्। अथवा विज्ञानेऽधिष्ठानभूते ज्ञानस्वरूपे ब्रह्मणि विजृम्भितानि कल्पितानि। कल्पनामयं वस्तु चाविद्याकार्यं मिथ्याभूतमेव। मिथ्याभूतं वस्तु च तत्त्वतोऽधिष्ठानमेवेति ज्योतिरादि सर्वं परमात्मैवेति पूर्वश्लोकोक्तार्थः सिद्धः। अत्र 'न तु वस्तुभूतः, विज्ञानविजृम्भितानि' इत्येवं जगतो मिथ्यात्वोक्त्या मिथ्यावस्तुमूलभूतमज्ञानं दृढीकृतम्।

प्रपञ्चस्याज्ञानविजृम्भितत्वम्

यत्तु 'इदमस्त्यात्मकमिदं नास्त्यात्मकम्, अस्य च नास्त्यात्मकत्वे हेतुरयमित्याह–ज्ञानस्वरूपो भगवान्यतोऽसाविति' (श्रीभा० पृ० १०५ प० ५) इति ज्ञानस्वरूप इतिश्लोकावतरणमुक्तं तच्चिन्त्यम्। ज्योतींपि विष्णुरिति पूर्वश्लोके हि सर्वं स एवेति विधेयम्। यदस्ति यन्नास्तीति त्वनुवादः। यच्छब्दयोगेनानुवादत्वं स्पष्टीकृतं च। उत्तरवाक्योपात्तो हेतुश्च पूर्ववाक्यगतविधेयांशस्यैव नानूद्यमानांशस्येति वाक्यार्थविदो मन्यन्ते। अत इदमवतरणमयुक्तम्। 'अस्तीति प्रतीयमानमप्यचेतनं घटादि नास्तीत्यनेनोच्यते' इति विपरीतं स्वीकृत्य तत्समर्थनायायं प्रयत्नोऽप्यनूद्यमानांशे हेतुत्वाभिधानमित्ययं विपरीत एवेति व्यर्थ एव

प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ॥ इति।

ज्ञानस्वरूप इति श्लोकोक्तं शैलादिभेदानामज्ञानविजृम्भितत्वमत्र स्थिरीकरोति—

यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोपम्।
तदा हि संकल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥
(वि० पु० २।१२।४०)

शुद्धमविद्यारहितम्। निजरूपि भेददर्शनरहितम्। दोषा रागादयः। समन्तात्कल्प्यते भेदोऽनेनेति संकल्पोऽविद्या।

यस्त्वेतच्छ्लोकव्याख्यानम् 'समित्येकीकारे। जीवस्य देहेन सहैकीकृत्य कल्पनं संकल्पोऽहं देवोऽहं मनुष्य इत्यादिः। एतन्मूलकमेव कर्म। कर्ममूलका एव कर्मफलभोगाय भोग्यभूता वस्तुभेदाः। ते देहात्मभ्रमनिवृत्तौ वस्तुतो विद्यमाना अपि भोगाय न भवन्तीति' (श्रीभा० पृ० १०५ प० १७) इति तच्चिन्त्यम्। वस्तुभेदानां ज्ञानिदृष्ट्या वस्तुतोविद्यमानत्वाभावात्। किंचायमर्थोऽस्माच्छ्लोकात्स्वरसतो न लभ्यते। उक्तः संकल्पपदार्थोऽप्रसिद्धः। भोगायेत्यध्याहारे क्लेशः। निषेध्यतावच्छेदकं च भोग्यत्वमिति तत्प्रदर्शकं मुख्यमेव भोगायेति पदं कथमध्याहारेणापि लभ्येत। अन्यथा विधौ 'न' इत्यध्याहारेण विपरीतार्थकल्पने बहुव्याकुली स्यात्।

यत्तु 'वस्तुभेदा न भवन्तीत्यचिद्वस्तुनः कादाचित्कावस्थायोगितया नास्तिशब्दाभिधेयत्वम्' (श्रीभा० पृ० १०६ प० २) इत्युक्तं तत्रेत्थमुच्यते–कादाचित्कावस्थायोगिनस्तदानीं नास्तिशब्दाभिधेयत्वं लोके न क्वापि प्रतीयते। किंच वस्तुभेदाः कादाचित्का विनाशिन इति सत्यम्। किंतु तेषां कादाचित्कत्वं विनाशित्वं वा 'विद्यमाना अपि भोगाय न भवन्ति' इत्युक्त्या कथमभिधीयते सूच्यते वेति विपश्चित एव विदांकुर्वन्तु।

जगदुपलब्धिप्रकारेणापि वस्तुभेदानामसत्यत्वोपपादनद्वारा पुनरज्ञानं श्लोकद्वयेन स्थिरी करोति—

> वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम्।
> यच्चान्यथात्वं द्विज याति भूयो न तत्तथा कुत्र कुतो हि तत्त्वम्॥
> (वि० पु० २।१२।४१)

अनेन श्लोकेनार्थस्वभाव उक्तः।

> मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोऽणवः।
> जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु॥
> (वि० पु० २।१२।४२)

पूर्वश्लोकोक्तार्थस्वभावस्योदाहरणमनेन प्रदर्शितम्। ततः परमात्मव्यतिरिक्तस्य मिथ्यात्वमुपसंहरति—

